# PURAS'CHAR[illegible]RNA[illegible]

COMPILED BY [illegible] MAHARA[illegible]
[illegible] BAHADUR OF [illegible]

PART I[illegible]

*Containing 1st, 2nd, 3[illegible] 4[illegible]hapters*

E[illegible]

SHRI PANDITA MURALI DHARA JHA

*Offg. Professor of Astronomy, Government Sanskrit College, Benares.*



PUBLISHED BY

PRABHAKARI & Co., BENARES CANTT.

PRINTED AT

THE TARA PRINTING WORKS, BENARES CITY.

1901.

 [Price 3 Rs. 8 Ans.

# पुरश्चर्यार्णवः

श्री ५ नेपालमहाराजाधिराजप्रतापसिंहसाह-
बहादुरवर्माविरचितः

तस्य

प्रथमद्वितीयतृतीयचतुर्थतरङ्गात्मकः

## प्रथमः खण्डः ।

काशिकराजकीयसंस्कृतपाठशालायां ज्यौतिषशास्त्रा-
ध्यापक—झोपाभिधपण्डितश्रीमुरलीधर-
शर्मणा संशोधितः ।

स च
वाराणस्यां
संवत् १९५७ वत्सरे
प्राभाकरीकम्पन्यधिपतिभिस्तारायन्त्रालये तदधिपति-
द्वारा मुद्रयित्वा प्राकाश्यं नीतः






मूल्यं सार्धं त्रिरूप्यकम् = ([illegible])

# भूमिका ।

भो भो विविधागमशास्त्रपारावारपारीणाः सहृदयधुरीणा विद्वांसो विदांकुर्वन्तु तत्र भवन्तः पुरुषार्थसाधनमभीप्सतां पुरुषाणामागमशास्त्रपरिशीलनमन्तरेण न श्रूयते तावदुपायान्तरम् । तदर्थमेवागमशास्त्रसिद्धान्तविचारसारचतुरैः श्रीमल्लक्ष्मण-महीधर-कृष्णानन्दवागीश-प्रभृतिभिर्विद्वद्वरैः शारदातिलक-मन्त्रमहोदधि-तन्त्रसारादयो द्राक् तन्त्ररहस्यहृदयवेद्याः सद्यः सम्यक्तया प्रत्ययजननेन तान्त्रिकजनमनोविनोददायकाः संग्रथिता ग्रन्था जाग्रत्येव ।

परं तेषु च कस्मिँश्चित् संक्षिप्तविषयतया कुत्र चिद्गूढाभिप्रायस्यातिदुर्बोधतया व्याकुलायमानानामागमशास्त्रव्युत्पित्सूनां जनानां परमोपकारप्रकृतिभिः कारुणिकैरशेषशास्त्रविन्नेपालाधिपतिकुलतिलकायमानैः श्री ५ मन्महाराजाधिराजप्रतापसिंहसाहबहादुरवर्ममहोदयैः सिद्धान्तप्रतिपादनतत्पर इदानीन्तनानामतीवोपयोगी पुरश्चर्यार्णवो नाम ग्रन्थो निरमायि ।

एतद्ग्रन्थं सर्वसाधरणव्यक्तीनां खपुष्पमिवातिदुर्लभमवलोकनार्थमपि लोकैरदीयमानं बह्वायासेन लोकशुश्रूषया लब्धमप्यशुद्धप्रायमालोच्यामुमुद्दिधीर्षुभिः प्राभाकरीकम्पन्याधिपतिभिस्त्रीणि पुस्तकानि कथंकथमपि संपाद्य शोधनाय सादरं प्रेरितोऽहमस्मिन् ग्रन्थेऽनन्तलोकोत्तरविषयबाहुल्यं समुपलभ्यासीमहर्षसुखमनुभवन् चत्वारिंशत्पृष्ठपर्यन्तं काशिकराजकीयसंस्कृतपाठशालायां साहित्यशास्त्राध्यापकैर्विबुधवरैः श्रीमद्रामशास्त्रिभिः संशोध्य तदग्रतो बृहल्लघ्वायसाक्षरैः पद्यगद्यादीनि पृथग्विभज्य शोधयितुमारभे ।

यत्र खलु कठिनस्थलेष्वर्थान्तरयोजनपूर्वकं निम्नभागे टिप्पणं द्वितीयतृतीयपुस्तकस्थपाठान्तराणि च तत्तद्ग्रन्थद्योतनोल्लसितानि ग्रन्थान्तरप्रमाणवाक्यान्यपि उपलब्धौ तत्तद्ग्रन्थैः संयोज्य यथासम्भवमविरुद्धपाठान्तरैः सह निवेशितवान् । कुत्र चिद्विरुद्धस्थलमपि निःशङ्कं भवतां सुखे-

नावकलनाय निरूपितवान् । येन भवद्भिः सानुग्रहं विबोधितो द्वितीयावृत्तौ संस्कृत्य मुद्रणे भवत्स्वनल्पधन्यवादार्पणसुखमनुभविष्यामि ।

अस्मिन् ग्रन्थे वर्त्तमानानां मन्त्राणां यन्त्राणां चोद्धरणाय मन्त्रकोशादि ग्रन्थान्तरादस्माच्च समुद्धृत्य ग्रन्थान्ते निवेशयिष्यामि। येन तदुद्धरणक्लेशः प्रायो नैव दुःखाकरिष्यति भवतः । उज्जीवयिष्यति च मामवामनश्रमशान्तमपि भवत्करुणामृतशीकरास्वादः ।

झोपाभिधः

श्रीमुरलीधरशर्मा ।

# अथ पुरश्चर्यार्णवः ।

श्रीदक्षिणामूर्तिगुरुभ्यो नमः ।

ुण्डादण्डप्रचण्डप्रहतिहठदलत्प्रौढदोर्दण्डदृप्य-
दैत्येन्द्रानीकशुण्डोत्कररचितसमित्ताण्डवक्षोणिशोभः ।
त्यूहध्वान्तधामाधिपतिरधिपतिः सिद्धसिद्धो गणानां
दद्यादद्रीन्द्रकन्यास्मरहरनयनानन्दसंवर्द्धनो वः ॥ १ ॥
ह्मोमाधवमाधवात्मकतनुश्छायाऽऽननप्रस्फुरन्-
मुग्धाऽम्भोजमधुव्रताभनयनः साक्षी जगत्कर्मणः ।
वान्तध्वस्तसमस्तविष्टपपरित्राणे निरस्तश्रम-
स्तिग्मांशुस्त्रिदशाग्रणीस्त्रिभुवनस्तुत्यो ऽस्तु वः श्रेयसे॥२॥
द्भक्तिप्रणमद्विधित्रिपुराजिद्वृत्राऽहिताद्यामर-
श्रेष्ठश्रेणिकिरीटकोटिविलसद्रत्नांशुनीराजितम् ।
यत् स्मृत्वा सुधियस्तरन्ति सहसा संसारवारां निधिं
तद्विष्णोश्चरणाम्बुजं दिशतु वः श्रेयो नृसिंहाकृतेः ॥ ३ ॥
यच्छक्तिः प्रकृतिस्ततो महदभूत्तत्वं ततो ऽहंकृति-
स्तन्मात्राणि ततश्च भूतनिवहस्तेभ्यः पृथिव्यादिकः ।
भूतेभ्यः करणानि चेति जगदुत्पन्नं यतः सो ऽव्ययः
पायाच्चन्द्रकलाऽवतंसरुचिरः साऽनुग्रहो वः शिवः ॥ ४ ॥

अव्यक्तो मुक्तिमार्गो निगमनिगदितो दुर्ग इत्यागमज्ञाः
स्वाऽविद्यादीनपोह्यत् पदयुगममृतं लेभिरे भावयन्तः ।
पायात्सा सैरिभघ्नी भवसलिलनिधेस्तारिणी रक्षणीति
ब्रह्माद्यैरद्वितीयेति च सततनुता सिद्धविद्या ऽऽदितो वः॥५॥
नत्वा श्रीगणनायकं दिनमणिं विष्णुं पशूनां पतिं
दुर्गां दुर्गतितारिणीं भगवतीं गुह्येश्वरीमीश्वरीम् ।
श्रीमत्साहप्रतापसिंहधरणीपालेन नानाऽऽगमान्
दृष्ट्वा सर्वजनोपकारकपुरश्चर्य्याऽर्णवस्तन्यते ॥ ६ ॥
औदार्येण तपःसुतं सुमहता शौर्येण कर्णाद्विषं
सौन्दर्येण मनोभवं जलनिधिं गाम्भीर्यधैर्यादिभिः ।
कीर्त्या चन्द्ररुचं श्रिया हरिहयं भानुं प्रतापेन च
क्ष्मायां निर्जरपादपान् वितरणैर्निर्जित्य यो राजते ॥७॥
तस्य क्षोणीमघोनः समरविजयिनो ऽशेषशास्त्रार्थविद्भिः
सद्भिः संशोधनीयः सुविमलमतिभिः सम्यगेष प्रबन्धः ।
विद्वद्विद्वेषतर्षैर्विमलपरगुणोत्कर्षविध्वस्तहर्षैः
रोषाद्दोषैकजिज्ञासुभिरतिमलिनैर्दूष्यतां दुर्विदग्धैः ॥ ८ ॥
विद्वद्भावाऽनभिज्ञैः प्रसभमयमवज्ञायमानो ऽप्यनार्यै-
र्न स्यादस्मत्प्रबन्धः कथमिव विदुषां मानसोल्लासहेतुः
गुञ्जापुञ्जाऽनुरक्तैर्विपिनपरिसरे भिल्लदारैर्विमुक्ता
मुक्ताः किं नाद्रियन्ते दरदलितनवाम्भोजपत्रायताक्ष्यः ॥९॥
अत्रादौ देवतानां स्मरहरगदितान् साधु साम्नायभेदान्
भेदानाद्ये तरङ्गे कति चन विदितान् दर्शयामस्तदूर्ध्वम् ।
कालीकंसाऽरितारारघुवरमुरजिच्छैलजावल्लभाना-
मैक्यं युग्मक्रमेणाऽऽगमगदितमभेदश्च शक्तित्रयस्य ॥१०॥

रामस्य वक्ष्ये शिवशक्तिरूपता-
मैक्यं च सीताहिमशैलकन्ययोः ।
श्रीरामकामाऽन्तकयोरपि क्रमा-
दैक्यं ततो दैवतपञ्चकस्य ॥११॥
ततः परं तान्त्रिकमार्गभेदान्
वक्ष्यामि तेषामधिकारिणश्च ।
ततश्च भेदानपि वैष्णवानां
ततः परं पाशुपतप्रभेदान् ॥१२॥
उपासनां चापि बहुप्रभेदा-
मदीक्षितानां तदनर्हतां च ।
ततश्च दीक्षामनुसद्गुरूणां
वक्ष्यामि माहात्म्यमनुक्रमेण ॥१३॥
ततः प्रवक्ष्ये गुरुशिष्यलक्षणं
निषिद्धयोर्लक्षणमेतयोस्ततः ।
ततो गृहीतस्य मनोरहेयता-
मसद्गुरूपात्तमनोश्च हेयताम् ॥१४॥
पित्रादिमन्त्रग्रहणे निषेधं
विधिं च मन्त्रेष्वधिकारिणश्च ।
स्वप्नाप्तमन्त्रस्य च संस्क्रियाश्च
वक्ष्यामि चक्राणि च तन्निषेधान् ॥१५॥
ततो द्वितीये रुचिरे तरङ्गे
वक्ष्यामि दीक्षोचितकालदेशान् ।
मन्त्रेषु शापानपि देवताना-
मुक्त्वा तदुद्धारविधिं च वक्ष्ये ॥१६॥

ततश्च संस्कारविधिं मनूनां
तज्जागृतिं भूमिपरीक्षणं च ।
वक्ष्यामि शल्योद्धरणप्रकारान्
वास्तोर्विधिं मण्डपलक्षणं च ॥ १७ ॥
कुण्डानि च स्रुक्स्रुवयोश्च लक्षणं
तत्रैव वक्ष्यामि ततोऽङ्कुरार्पणम् ।
दीक्षां प्रवक्ष्यामि ततः क्रियावतीं
तरङ्गयोस्तत्र तृतीयतुर्य्ययोः ॥ १८ ॥
दीक्षाविधौ तत्र तृतीयवीचौ
वक्ष्यामि तावद्वरणं गुरूणाम् ।
ततश्च ऋत्विग्वरणं प्रवक्ष्ये
यद्दन्तकाष्ठस्य परीक्षणं तत् ॥ १९ ॥
द्वारार्चनं यागगृहप्रवेशं
पूजोपयुक्तानि च मण्डलानि ।
ततः सपर्याविधिमागमोक्तं
वक्ष्ये घटस्थापनपूर्वकं च ॥ २० ॥
तुर्य्ये तरङ्गेऽखिलमग्निकार्य्यं
वक्ष्ये ततः पायसभोजनं च ।
गुरोः सशिष्यस्य ततोऽभिधास्ये
स्वापं ततः स्वप्नपरीक्षणं च ॥ २१ ॥
तत्रैव दीक्षादिवसोचितानि
कर्माण्यशेषाणि मनोः प्रदानम् ।
व्यक्तीकरिष्याम्यथ पञ्चमे तु
प्रयोगमस्याः सकलं तरङ्गे ॥ २२ ॥

संक्षेपदीक्षां च ततः प्रवक्ष्ये
ततः परं वर्णमयीं च दीक्षाम् ।
कलावतीं नाम ततश्च दीक्षां
ततः परं वेधमयीं च दीक्षाम् ॥ २३ ॥
वक्ष्यामि पाञ्चायतनीश्च दीक्षाः
स्मार्तीं ततो मानसिकीं च दीक्षाम् ।
योगीं च दीक्षां तदनन्तरं दृग्-
दीक्षां ततः स्पर्शमयीं च दीक्षाम् ॥२४॥
दीक्षां प्रवक्ष्यामि ततश्च वाचिकीं
मान्त्रीं च हौत्रीं च ततः समासतः ।
शास्त्रीं वदिष्यामि तथाऽऽभिषेकिकीं
तत्रैव संक्षिप्ततरां च शाम्भवीम् ॥२५ ॥
ततः प्रवक्ष्याम्युपदेशदीक्षां
ततोऽभिधानं क्रमदीक्षणस्य ।
पूर्णाऽभिषेकं च ततोऽभिधास्ये
मनोग्रहं देशिकमन्तरेण ॥ २६ ॥
षष्ठे तरङ्गेऽथ पुरस्क्रियाया
निरूपयिष्यामि विधिं समग्रम् ।
तत्रापि तावत् समयं च देशान्
वक्ष्यामि वक्ष्ये तत आसनानि ॥ २७ ॥
मालाप्रभेदानपि तत्र वक्ष्ये
रुद्राक्षमाहात्म्यमपि प्रसङ्गात् ।
तत्रैव मालाग्रथनप्रकारं
वक्ष्यामि संस्कारविधिं च तस्याः ॥२८॥

मुद्राणामपि लक्षणानि नियमान् हेयानि देयानि च
प्रायश्चित्तमनेकमुक्तनियमभूष्टोपयुक्तं नरः ।
सक्षोणीगृहकूर्मचक्ररचनां शाक्तानि पीठानि च
प्रातःकृत्यमथो ऽजपाविधियुतं वक्ष्यामि तत्रैव च ॥२९॥
शौचं तत्र च दन्तधावनविधिं स्नानं च नानाविधं
तन्त्रोक्तं तिलकस्य धारणविधिं तद्वद्विभूतेरपि ।
सन्ध्योपासनदेवतर्पणविधिं नित्यार्चनं तादृशं
होमं प्रस्तुतकर्मणश्च विधिवद्वक्ष्ये ततः सक्रमम् ॥३०॥

यन्त्रस्य निर्माणमथ प्रमाणं
ततः प्रतिष्ठाविधिमागमोक्तम् ।
वक्ष्ये मनूनामथ सूतकित्वं
स्वापं प्रबोधं च शिखाश्रितं च ॥ ३१ ॥
वक्ष्यामि तत्रैव च कुल्लुकामनुं
सेतुं च निर्वाणमपि क्रमागतम् ।
तत्रैव मन्त्रं रसनाविशोधनं
ततश्च मन्त्राऽवयवान् हरेरितान् ॥३२॥
जपस्य वक्ष्यामि ततो विधानं
होमव्यवस्थामथ तर्प्पणं च ।
ततो ऽभिषेकस्य विधिं प्रवक्ष्ये
ततः परं ब्राह्मणभोजनं च ॥ ३३ ॥
ततो ऽभिधास्यामि ससिद्धिलक्षणाः
सोपायवर्गाश्च पुरस्क्रियाऽभिधाः ।
सर्वास्तरङ्गे रुचिरे च सप्तमे
सदूतिकायागसवीरसाधनाः ॥ ३४ ॥

ततोऽष्टमे चारुतमे तरङ्गे
गणाधिपस्याथ रवेश्च विष्णोः ।
मत्स्यस्य कूर्मस्य वराहमूर्त्ते-
स्तदीयशक्तेश्च तथा धरिण्याः ॥ ३५ ॥
श्रीदिव्यसिंहस्य च वामनस्य
त्रिविक्रमस्याऽथ कुठारपाणेः ।
श्रीरामचन्द्रस्य च भूसुताया-
स्ततः प्रलम्बासुरवैरिणश्च ॥ ३६ ॥
कृष्णस्य बुद्धस्य तथैव कल्किन-
स्ततो हयग्रीवरथाङ्गरूपयोः ।
अनन्तसंज्ञस्य च गोपसुन्दरी-
मूर्त्तेस्ततः श्रीधरसंज्ञकस्य ॥ ३७ ॥
शिवस्य मृत्युञ्जयनीलकण्ठ-
श्रीदक्षिणामूर्तिपुरस्सरैश्च ।
सक्षेत्रपालैर्बटुकादिरूपै-
र्भेदैरनेकैः सहितस्य तद्वत् ॥ ३८ ॥
मुरारिदेहार्द्धभृतः पुरारे-
स्ततो भवान्याश्च गरुत्मतश्च ।
सकार्त्तवीर्यस्य समीरसूनोः
स्मरस्य वक्ष्यामि मनूननेकान् ॥ ३९ ॥
एषां च ऋष्यादिपुरस्सराणि
ध्यानानि वक्ष्यामि पुरस्क्रियाश्च ।
प्रत्येकपूर्वं विधिमत्र नैषां
वक्ष्ये प्रबन्धस्य गुरुत्वभीतेः ॥ ४० ॥

स्वैः स्वैः प्रभेदैः सहितास्ततो महा-
विद्यास्तरङ्गे नवमे दश क्रमात् ।
वक्ष्यामि तासां च पुरस्क्रियाविधिं
नीलक्रमादीनपि भावसंयुतान् ॥ ४१ ॥
ततस्त्रिलोकाऽर्चितपादुकाया
वाग्देवताया दशमे तरङ्गे ।
तत्रैव देव्यास्त्वरिताऽभिधायाः
क्लिन्नाऽन्नपूर्णादिसमन्वितायाः ॥ ४२ ॥
प्रत्यङ्गिराया अथ कुब्जिकायाः
सुरापगायाश्च सवाग्भवायाः ।
चण्डादिकानां च ततो ग्रहाणां
ग्रहप्रसूनामथ दिग्युतानाम् ॥ ४३ ॥
मन्त्रान् प्रवक्ष्यामि पुरस्क्रियान्ता-
नथाऽभिधास्ये जननीं श्रुतीनाम् ।
न्यासानशेषान् क्रमतश्च तस्या
ध्यानं च यन्त्रं यजनक्रमं च ॥ ४४ ॥
तस्याः सपर्याविधिमप्यशेषं
मुद्राश्च वक्ष्यामि पुरस्क्रियाश्च ।
तारस्य पौरश्चरणं विधानं
मृत्युञ्जयश्रौतमनोस्तथैव ॥ ४५ ॥

रुद्राऽध्यायपुरस्क्रिया बहुविधैः सौम्यैः समं वक्ष्यते
सूक्तानां च पुरस्क्रियाविधिमथ श्रौतान् ग्रहाणां मनून् ।
तेषां च त्रिपुरारिभाषितपुरश्चर्याऽभिधानं ततो
हव्यानामपि च प्रमाणमखिलं वक्ष्यामि संक्षेपतः ॥ ४६ ॥

तरङ्गएकादशउक्तरीत्या
दुर्गामनूनामथ तान्त्रिकाणाम् ।
वक्ष्यामि पौरश्चरणं विधानं
दुर्गोत्सवस्यापि विधिं समग्रम् ॥ ४७ ॥
बलिप्रदानस्य विधिं पशूनां
वस्त्वन्तराणामपि दैवतानि ।
तत्रैव वक्ष्यामि कुमारिकायाः
पूजाविधानं च शिवाबलिं च ॥ ४८ ॥
तत्रैव रेवन्तहयेभपूजा-
विधिं प्रयोगान् नवरात्रकृत्यम्* ।
तथैव वक्ष्यामि शिवोपदिष्टं
नीराजनं खञ्जनदर्शनं च ॥ ४९ ॥
ततस्तरङ्गे चरमे मनोरमे
ब्राह्मादिमन्त्रान् सपुरस्क्रियाविधीन् ।
गोरक्षनाथस्य मनूंस्तथाविधान्
वक्ष्ये ततस्तादृशशीतलामनुम् ॥ ५० ॥
यन्त्राण्यथो यन्त्रपुरस्क्रियाया
विधिं ततो भूतलिपिं† च तस्याः ।
तत्रैव पौरश्चरणं विधानं
वक्ष्ये लिपिन्यासपुरस्क्रियाश्च ॥ ५१ ॥
विद्योतयन्तीमथ मातृकाया-
स्त्रिलोहमुद्रामतुलप्रभावाम् ।
[त]त्रैव संस्कारविधिं च तस्या-

* कृत्यानिति पाठान्तरम् । † भूतबलिमिति पाठान्तरम् ।

स्तथैव वक्ष्ये नवरत्नमुद्राम् ॥ ५२ ॥
षोढान्याससहस्रनामकवचस्तोत्रान्तराणां तत-
स्तद्वत् सप्तशतीस्तवस्य च पुरश्चर्याऽभिधानं क्रमात् ।
तत्पाठस्य विधिं फलैश्च सहितं होमप्रयोगाऽन्वितं
मन्त्राणां च विभागमस्य तदनु प्रश्नस्य वक्ष्ये विधिम् ॥ ५३ ॥
प्राणायामपुरस्क्रिया बुधवरैर्वेद्या ततो वक्ष्यते
मन्त्राणां च पुरस्क्रियामपि विना सिद्धिप्रकारो ऽपि वा ।
नानाभैरवयोगिनीसुरवधूज्वालामुखीनां क्रमा-
दन्यासामपि च क्षितेरपि पुरश्चर्य्याऽन्वितं साधनम् ॥ ५४ ॥

तत्र पुरश्चर्य्याया मन्त्रसिद्धिफलकदेवताऽऽराधनविशेष-रूपत्वादाराध्यदेवताया अभ्यर्हितत्वेन षडाम्नायाऽन्तर्गतदेवतास्तावन्निरूप्यन्ते । तत्र गणेशविशेषस्य मन्त्रनिष्ठं किंचिद्वैलक्षण्यमादाय षडाम्नायवृत्तित्वमुक्तं

मेरुतन्त्रे—

एकबीजात्मकं वक्ष्ये विघ्नमन्त्रं सुसिद्धिदम् ।
तत्रादौ वैदिकानां तु गकारः केवलो मतः ।
दाक्षिणानां बिन्दुयुक्तो द्विबिन्दुः पूर्वमार्गिणाम् ॥
एतद्द्वययुतः पश्चादूर्ध्वाऽऽम्नाये च गौमिति ।
ग्लौमुत्तरे गोमिति च पातालाऽऽम्नाय*ईरितम् ॥

अत्र दक्षिणाऽऽम्नाये लक्ष्मीगणेशहरिद्रागणेशादयः, उर्द्धाऽऽम्नाये महागणपत्यादयः, पूर्वाऽऽम्नाये विरिञ्चिगणनायकादयः, पश्चिमाऽऽम्नाये क्षिप्रप्रसादनगणेशादयः, उ-

* पातालाऽऽम्नाये=अधराऽऽम्नाये ।

त्तराऽऽम्नाये उच्छिष्टगणेशादय, इति भूयांसो गणेशभेदा मेरुतन्त्रे द्रष्टव्याः ।

सूर्यस्य द्वादशभेदवतो ऽपि दाक्षिण एवाऽऽम्नायः ।

तदुक्तं तत्रैव—

एक एवाऽस्य चाऽऽम्नायो दक्षिणः परिकीर्तितः ।
यथा ऽयं यवनं विप्रं सममेव करैः स्पृशेत् ॥
उपासना तथैवाऽस्य स्वधर्माऽऽचारपूर्विका ।
चतुर्युगेषु प्रत्यक्षो देवो ऽयं सर्वसंमतः ॥
सर्वेषामेव देवानां नेत्रभूतो जगत्पतिः ।

द्वादशभेदाः—

वरुणः[१] सूर्य्य[२]वेदाङ्गौ[३] भानु[४]रिन्द्रो[५] रवि[६]स्तथा ।
गभस्ति[७]स्तु यमः[८] स्वर्णरेता[९]श्चाऽथ दिवाकरः[१०] ॥
मित्रो[११]विष्णु[१२]रिति प्रोक्ता आदित्या द्वादश क्रमात् ।
तपन्ति माघादारभ्य क्रमादमिततेजसः ॥

इति तत्रैवोक्ताः ।

विष्णोः शिवस्य चाऽऽम्नायप्रयुक्तभेदो ऽनुपलभ्यमानः । अवतारमन्त्रध्यानादिप्रयुक्तास्त्वनन्ता एव भेदाः, तेषु कति चेद्भेदाः पुरश्चरणप्रकारकथनाऽवसरे स्फुटीभविष्यन्तीति अत्र नोक्ताः । देवीभेदानामनन्तत्वेन वक्तुमशक्यत्वे ऽपि वाडवानलीयतन्त्रोक्ताः कति चिद् भेदा इह प्रदर्श्यन्ते ।

तदुक्तं वाडवानलीयतन्त्रे—

एकैवाऽऽद्या जगत्सूतिः सच्चिदानन्दविग्रहा ।
तत्तद्विभूतिभेदेन भिन्ना ऽनेकत्वमागता ॥

पूर्णेशी भुवनेशानी ललिता चाऽपराजिता ।
लक्ष्मीः सरस्वती वाणी पारिजातपदाऽङ्किता ॥
अन्नपूर्णा जयाद्याश्च पूर्वाम्नायसमाश्रिताः ।
निशेशी दक्षिणा काली बगला छिन्नमस्तका ॥
भद्रा तारा च मातङ्गी दक्षिणाऽऽम्नायदेवताः ।
बहुप्रभेदसंयुक्ता कुब्जिका च कुलालिका ॥
मातङ्ग्यमृतलक्ष्म्याद्याः पश्चिमाऽऽम्नायदेवताः ।

एतेन मातङ्ग्या आम्नायद्वयवृत्तित्वमाहितम्,* दक्षिणाऽऽम्नाये ऽपि तस्या अभिधानात् । तथा—

सिद्धिलक्ष्मीर्गुह्यकाली महाभीमसरस्वती ।
धूम्रा कामकलां काली महाकाली कपालिनी ।
महाश्मशानकाली च कालसंकर्षिणी तथा ॥
प्रत्यङ्गिरा महारात्रिर्योगेशी सिद्धिभैरवी ।
एता बहुविधायुक्ताः सर्वविद्योत्तमोत्तमाः ।
उत्तराऽऽम्नायपीठस्थाश्चतुर्वर्गफलप्रदाः ॥

ताराच्छिन्नमस्तयोरपि उत्तराम्नायवृत्तित्वमुक्तं मुण्डमालायाम्—

भेदास्त्वेकोनपञ्चाशदुत्तराऽऽम्नायवर्त्मनि ।
गुह्यकाली ततः प्रोक्ता सिद्धिलक्ष्मीस्ततः परम् ॥
स्वर्णकोटीश्वरी† तत्र राजराजेश्वरी तथा ।
गुह्येश्वरी तथा प्रोक्ता तथा तारा त्रिरूपिणी ॥
छिन्नमस्ता महादेवी ततः प्रोक्ता ऽतिभीषणा ।
एवंविधास्तु संकेताः सदा गोप्याः प्रकीर्तिताः ॥

---

* वृत्तित्वमविदितमिति पाठान्तरम् । † कोटेश्वरीति क्वचित् पाठः

वाडवानलीये—

कामेशी ललिता बाला महात्रिपुरसुन्दरी ।
त्रिपुरा भैरवी ह्येता ऊर्ध्वाऽऽम्नायसमाश्रिताः ॥

ललितायाः पूर्वाम्नाये ऽप्युक्तत्वादाम्नायद्वयवृत्तित्वं बोधितम् । क चित्त्वरितेति पाठः ।

योगिनी वज्रपूर्वा च पन्नगी नैरृतेश्वरी ।
अधराऽऽम्नायपीठस्था जैनमार्गप्रपूजिताः ॥

अत्रैव प्रधानतया भीमादेवी

महाकालसंहितायामुक्ता—

निशामयाऽधराऽऽम्नायगोचरान् देवतामनून् ।
यत्राऽऽद्यभूता विख्याता भीमादेवी भयानका ॥ इति ।
कुलबाला च दुर्गा च सर्वाऽऽम्नायप्रपूजिता ।

कुलबाला, कुमारी । तथा—

तयोः पूजा तु सर्वत्र नित्यत्वेनाऽभिधीयते ।

तयोर्दुर्गाकुमार्य्योः । एतास्तु दश देवता महाविद्यात्वेन सिद्धाः ।

तदुक्तं शक्तिसङ्गमे—

काली[१] तारा[२] छिन्नमस्ता[३] सुन्दरी[४] बगला[५] रमा[६] ।
मातङ्गी[७] भुवनेशानी[८] सिद्धविद्या च भैरवी[९] ।
धूमावती[१०] च दशमी महाविद्या दश स्मृताः ॥

तत्रैव

एतासां प्रत्येकं भैरवमाह—

कालिकाया महाकालः सुन्दर्य्या ललितेश्वरः ।

तारायाश्च तथा ऽक्षोभ्यश्छिन्नाया विकरालकः ॥
भुवनाया महादेवो धूम्रायाः कालभैरवः ।
नारायणो महालक्ष्म्या भैरव्या बटुकः स्मृतः ॥
मातङ्ग्यास्तु मतङ्गः स्यादथ वा स्यात् सदाशिवः ।
मृत्युञ्जयस्तु बगलाविद्यायाः परिकीर्तितः ॥

ललितेश्वरस्त्रिपुरभैरवः,विकरालः क्रोधभैरवः, कालभैरवो घोरः । यद्यपि रुद्रयामले ताराच्छिन्नमस्तादीनां सद्योजातकालरुद्रादय उक्ताः, तथापि एतेषामेव भैरवाणां नामान्तराणि तत्रोक्तानि न तु भैरवान्तराणीत्यविरोधः ।

शक्तिसंगमे—

क्रोधभैरवसंयोगाद्यक्षिण्यः सिद्धिदा यथा ।
तथा विद्याः प्रसिद्ध्यन्ति पुंयोगादेव पार्वति ॥

रुद्रयामले—

केवलं यो जपेच्छाक्तं मनुं शैवं न योजयेत् ।
जन्मकोटिषु जप्तोऽपि न मनुः सिद्धिभाग् भवेत् ॥
यस्या देव्यास्तु यो देवः शिवस्तस्याः शिवो भवेत् ।
तेन विद्या महादेवि कलौ सिद्ध्यति सत्वरम् ॥

मेरुतन्त्रे—

स्त्रीमन्त्रो भोगदः प्रोक्तः पुंमन्त्रो मोक्षदः परम् ।
उभयोपासनं देवा भुक्तिमुक्तिप्रदायकम् ॥

तन्त्रान्तरे—

शक्त्या विना शिवे शुष्के* नाम धाम न विद्यते ।

---

* सूक्ष्मे इति पाठान्तरम् ।

शिवं विना चित्कलानां* कलात्वं न क्व चिद् भवेत् ॥
बीजाऽङ्कुरन्याययोगाच्छिवशक्त्यात्मकं महः ।
सदा जागर्ति देवेशि नानारूपाणि दर्शयेत् ॥

षडाम्नायदेवताऽऽराधनफलान्याह

मेरुतन्त्रे—

दक्षिणोपासकः काल ऊर्ध्वः सायुज्यमाप्नुयात् ।
देवतायास्तथा पूर्वः सारूप्यं लभते परम् ॥
सामीप्यं चोत्तरो लोके पश्चिमस्त्वैहिकं फलम् ।
लाभस्त्यागश्चोपकारो ह्यधोमार्गे ऽप्युदर्क†युक् ॥

काल इति, महाकालस्वरूपी शिव एव भवेदित्यर्थः। यत्तु काले इति सप्तम्यन्तं पदं, तेन दक्षिणोपासक ऊर्ध्वाऽऽम्नायोपासकश्च काले देहाऽन्तसमये सायुज्यमाप्नुयादित्यर्थ इति कैश्चिदुक्तं, तदसत् ।

पञ्चलक्षणसंयुक्तो ब्राह्मणः काल एव सः ।

इति पूर्वग्रन्थविरोधात् ।

यत्प्रसादादहं त्वं च जातः काल इवाऽपरः ।

इत्युत्तरग्रन्थविरोधाच्च । उत्तरो लोके इति, उत्तराऽऽम्नायदेवतोपासकः सालोक्यं प्राप्नुयादित्यर्थः। इदमुत्तराऽऽम्नाये गुह्येश्वर्यादिदेवतोपासकविषयम् ।
ादुपासकानां तु चतुर्विधमुक्तिप्राप्तिरुक्ता

* विना चेत् कलानामिति पाठान्तरम् ।
† उदर्कः फलमुत्तरम् ।

महाकालसंहितायामनुस्मृतिप्रकरणे—

सालोक्यं चैव सामीप्यं सारूप्यं च तृतीयकम् ।
सायुज्यमिति देवेशि मुक्तिरुक्ता चतुर्विधा ॥
तास्वन्योपासकानां स्यादेकैका मुक्तिरीश्वरि ।
गुह्यकाल्याराधकस्य क्रमान्मुक्तिचतुष्टयम् ॥
जायते नाऽत्र सन्देहस्त्रिपुरघ्नाऽनुशासनात् ।
षडाम्नायेषु देवेशि भूयस्यः सन्ति देवताः ॥
तासु काश्चित् कृतयुगे त्रेतायां काश्चिदीरिताः ।
द्वापरे फलदाः काश्चित् कलौ काश्चित् फलप्रदाः ॥
चतुर्युगेषु फलदा दश विद्या मयेरिताः ।
तासु तिस्रो विशिष्यन्ते काली तारा च सुन्दरी ॥
तिसृष्वपि शिवे तासु* कलौ काली विशिष्यते ।
नवविधासु कालीषु† गुह्यकाली प्रशस्यते ॥
अनया सदृशी विद्या नास्ति ब्रह्माण्डगोलके ।
विद्याराज्ञी गुह्यकाली भिद्यते न कदा चन ॥

नवविधाकाली

तत्रैवोक्ता—

काली नवविधा प्रोक्ता सर्वतन्त्रेषु गोपिता ।
आद्या दक्षिणकाली च भद्रकाली तथा परा ॥
अन्या श्मशानकाली च कालकाली चतुर्थिका ।
पञ्चमी गुह्यकाली च पूर्वं या कथिता मया ॥

---

* तासु तिसृष्वपि शिवे इति पाठान्तरम ।

† 'उत्तराऽऽम्नायमध्ये तु' इति 'नवविधासु कालीषु' इत्येतत्स्थाने पाठान्तरम् ।

षष्ठी कामकलाकाली सप्तमी धनकालिका।
अष्टमी सिद्धिकाली च नवमी चण्डिकालिका॥

एवमन्यासां भेदा ग्रन्थान्तरेभ्यो ऽवगन्तव्याः।

शक्तिसंगमे—

चतुर्युगानां राज्ञी वै कालिका परिकीर्तिता।
विद्याराज्ञी सिद्धिविद्या कलौ शीघ्रफलप्रदा॥

ालीकृष्णयोरैक्यमुक्तं

महाकालसंहितायाम्—

स्त्रीणां त्रैलोक्यजातानां कामोन्मादे*कहेतवे।
वंशीधरः कृष्णदेवः प्रकृतिर्विष्णुरुच्यते॥
उभयोर्मेलनाद्देवि शिवशक्तिर्हि† गीयते।

कृष्णस्य कालीस्वरूपत्वं, रामस्य तारास्वरूपत्वं, तिसृणां ाक्तीनामैक्यं चोक्तं

शक्तिसंगमे—

कदा चिदाद्या ललिता पुंरूपा कृष्णविग्रहा।
लोकसंमोहनार्थाय स्वरूपं बिभ्रती परम्॥
वेणुनादसमारम्भसर्वसंमोहनक्षमम्।
कदा चिदाद्या श्रीकाली शैवतारा ऽस्ति पार्वती॥
कदा चिदाद्या श्रीतारा पुंरूपा रामविग्रहा।
रावणस्य वधार्थाय देवानां स्थापनाय च॥
दैत्यसंहरणार्थाय पुंरूपं बिभ्रती परम्।
आद्या तारा महाशक्तिः सैव काली महेश्वरी॥

---

* कायोन्मादेति क चित् पाठः।
† शिवशक्तीतीति पाठान्तरम्।

या महावैष्णवी माया सा महासुन्दरी मता ।
नैव स्त्री न पुमानेषा नैव चापि नपुंसकम् ॥
यद्यच्छरीरमाधत्ते युज्यते तेन तेन सा ।

हरिहरयोरैक्यमुक्तं

तत्रैव—

एकस्मिन् समये पूर्वं विष्णुरूपावुभावपि ।
विष्णुस्वरूपसिद्ध्यर्थं तपस्तेपे हरः स्वयम् ॥
शिवस्वरूपसिद्ध्यर्थं तपस्तेपे हरिः स्वयम् ।
षड्वृन्दयुगसंख्यातमुभौ तपःपरौ शिवे ॥
शिवो विष्णुस्वरूपत्वं विष्णुश्च शिवरूपताम्* ।
उभौ हरिहरात्मानौ ह्यर्द्धनारीश्वरौ परौ ॥
मुख्यरूपमिदं देवि द्वयोः सङ्गममम्बिके ।
तेजःपुञ्जमिदं देवि ब्रह्मरूपं सनातनम् ॥

रामस्य शिवशक्त्यात्मकत्वं

तत्रैवोक्तम्—

रामः शक्तिरिति ख्यातः स शिवः परिकीर्तितः ।
शिवशक्त्यात्मकं ब्रह्म रामरामेति गीयते ॥

गौरीसीतयोः शिवरामयोश्चैक्यमुक्तं

तत्रैव—

गौरीरूपा परा सीता महासाम्राज्यनायिका ।
रामः परशिवो ज्ञेयो नाऽवतारो नरो ऽपि च ॥
यत्परं ब्रह्म विख्यातं तद्रामेत्यक्षरद्वयम् ।

* विष्णुः शिवस्वरूपताम् इति पाठान्तरम् ।

रामोपनिषदि—

रमन्ते योगिनो ऽनन्ते सत्यानन्दे चिदात्मनि ।
रामनामपदेनाऽसौ परं ब्रह्माऽभिधीयते ॥

[ग]णेशादिपञ्चदेवतानामैक्यमुक्तं

रुद्रयामले—

गणेशाऽर्कहरीशानां दुर्गारूपा सरस्वती ।
महाश्यामा महाविद्या पूजनीया यथाक्रमम् ॥
न कुर्य्याद् भेदमेतेषां कौलिको वैष्णवस्तथा ।
गणेशाऽर्कहरीशानदुर्गाणां परमार्थवित् ॥
पूजयेदैक्यभावेन देवीभक्तश्च बुद्धिमान्* ।
देवीचक्रे ऽर्चयेत् सर्वान् शिवलिङ्गे ऽथ वा शिवे ॥
शालग्रामशिलायां वा सूर्यपीठे ऽथ वा शिवे ।
श्रीगणेश्वरचक्रे वा न भेदं कारयेत् सुधीः ॥
भेदं वै कुरुते यस्तु स शैवः शिवहा भवेत् ।

शैव इत्युपलक्षणम् ।

[द]शमहाविद्यादशाऽवताराणामैक्यमुक्तं

मुण्डमालातन्त्रे—

कृष्णस्तु कालिका साक्षाद् राममूर्तिश्च तारिणी ।
वराहो भुवना प्रोक्ता नृसिंहो भैरवीश्वरी ॥
धूम्रावती वामनः स्याच्छिन्ना भृगुकुलोद्भवः ।
कमला मत्स्यरूपः स्यात् कूर्मस्तु बगलामुखी ॥
मातङ्गी बौद्ध इत्येषा षोडशी कल्किरूपिणी ॥ इति ।

[क]ालीपदव्युत्पत्तिमाह

---

* देवीभक्तौ च भक्तिमानिति पाठान्तरम् ।

कामधेनुतन्त्रे—

कालसंकलनात् काली कालग्रासं करोत्यतः ।

त्रिपुराशब्दर्थमाह

सुन्दरीस्तवे—

ब्राह्मी रौद्री वैष्णवीति शक्तयस्तिस्र एव हि ।
पुरं शरीरं यस्यां सा त्रिपुरेति प्रकीर्तिता ॥

ताराशब्दार्थमाह

मत्स्यसूक्ते—

लीलया वाक्प्रदा चैव तेन नीलसरस्वती ।
तारकत्वप्रदा तारा सुखमोक्षप्रदायिनी ॥
उग्राऽऽपत्तारिणी यस्मादुग्रतारा प्रकीर्तिता ।

आम्नायभेदेन मार्गभेदनिर्णयमाह

वाडवानलीये—

पूर्वोऽऽम्नाये दक्षमार्गो वामः स्यात् पश्चिमे परे ।
दक्षिणोत्तरयोरूर्द्धे मार्गौ तौ वामदक्षिणौ ॥
विहाय सर्वं सर्वत्र कौलमार्गः प्रशस्यते ।

मार्गत्रयव्यवस्था च

तत्रैव—

योगात् पञ्चमकाराणां वामहस्तेन पूजनात् ।
जपाद्धोमाच्च वामः स्याद्दक्षिणस्तद्विपर्ययात् ॥
तत्त्वतर्पणमन्त्रं तु वामहस्तेन दाक्षिणे ।
दक्षहस्तेन वामे ऽपि विशेषः परिकीर्तितः ॥

दक्षवामक्रियायुक्तः कौलश्चोभयमिश्रितः* ।
मकाराऽऽवश्यकत्वाच्च दक्षतर्पणपूजनात् ॥
क्व चिद्वामेन देवेशि कौलो मार्गस्तृतीयकः ।

## रुद्रयामले—

त्रीणि बीजानि दुर्गायास्तदाचारास्त्रयः स्मृताः† ।
प्रथमो दक्षिणाऽऽचारो वामाऽऽचारो द्वितीयकः ॥
तृतीयस्तु कुलाऽऽचारो विधिं तेषां शृणु प्रिये ।
प्रभाते स्नानसंध्यादि मध्याह्ने जप ईश्वरि‡ ॥
और्णमासनमात्मार्थं भक्ष्यं पायसशर्करम् ।
माला रुद्राक्षसंभूता पात्रं पाषाणसंभवम् ॥
भोगः स्वकीयकान्ताभिर्दक्षिणाऽऽचार इत्ययम् ।
द्रव्येण मधुना देवि सिद्धिहानिकरो मतः ॥
वामाऽऽचारं प्रवक्ष्यामि श्रीदुर्गासाधनं परम् ।
यं विधाय कलौ शीघ्रं मान्त्रिकः सिद्धिभाग् भवेत् ॥
माला नृदन्तसंभूता पात्रं पाषाणमुण्डकम् ।
आसनं सिद्धचर्मादि कङ्कणं स्त्रीकचोद्भवम् ॥
द्रव्यमासवतत्त्वाढ्यं भक्ष्यं मांसादिकं शिवे ।
चर्वणं बालमत्स्यादि मुद्रा वीणारवः कथा ॥
मैथुनं§ परकान्ताभिः सर्ववर्णसमानता ।
वामाचार इति प्रोक्तः सर्वसिद्धिप्रदः शिवे ॥
अन्यथा सिद्धिहानिः स्यान्मन्त्रस्याऽस्य महेश्वरि ।
कुलाऽऽचारं प्रवक्ष्यामि सेव्यं योगिभिरुत्तमैः ॥

---

* उभयमाश्रित इति पाठान्तरम् । † त्रयस्तथेति क्व चित् ।
‡ जपमीश्वरीति पाठान्तरम् । § मिथुनमिति पाठान्तरम् ।

कुलस्त्रियं कुलगुरुं कुलदेवीं महेश्वरि ।
नित्यं यत् पूजयेद्विश्वं स कुलाचार उच्यते ॥
कुलस्त्रियं शिवे ज्ञात्वा नुत्वा नत्वा महेश्वरि ।
हठादानीय संपूज्य ततो भोगं विधाय च ॥
तेजसा तर्पयेद्देवीं श्रीदुर्गां चक्रनायिकाम् ।
नीलकण्ठं च विधिना जपं कुर्याद्विशेषतः ॥
तत्पूर्वकं चरेद्धोमं कुलकान्तां विभूषयेत् ।
पानैः पेयैस्तथा भक्ष्यैः संतर्प्य कुलयोषितम् ॥
प्रत्यहं वै चरेदेवं कुलाचार इति स्मृतः ।

कौलादिभेदेन वाममार्गविधिरुक्तो,

मेरुतन्त्रे—

कौलिको ऽङ्गुष्ठतां प्राप्तो वामः स्यात्तर्जनीसमः ।
चीनक्रमो मध्यमः स्यात् सिद्धान्तीयो ऽवरो भवेत् ॥
कनिष्ठः शाबरो मार्ग इति वामस्तु पञ्चधा ।

मार्गभेदेनाऽधिकारिभेद उक्तो,

वाडवानलीये—

ब्राह्मणाः क्षत्रिया वैश्या दक्षमार्गाऽधिकारिणः ।
द्विजवर्जास्त्रयो वर्णा वामकौलाऽधिकारिणः ॥
दक्षमार्गपरिभ्रष्टो ब्राह्मणो वाममार्गगः ।
इहैव सिद्धिमाप्नोति नाऽपवर्गं* कदा चन ॥
वेदमार्गपरित्यागी कैवल्येच्छाविवर्जितः ।
सिद्धिकामी वाममार्गी ब्राह्मणो नारकी भवेत् ॥

---

* अपवर्गे इति पाठान्तरम् ।

वेदमार्गं परित्यज्य तन्त्रमार्गैकतत्पराः।
ब्राह्मणा निरयं भुक्त्वा भवेयुर्ब्रह्मराक्षसाः॥
वैदिकं तान्त्रिकं मार्गं दक्षिणं ब्राह्मणश्चरन्।
इह सिद्धीश्वरोभूत्वा देहान्ते ऽमृतमश्नुते॥

एतेन वचननिचयेन दक्षिणे एव मार्गे ब्राह्मणस्य, मार्गत्रये ऽपि क्षत्रियवैश्ययोः, वामे कौले च शूद्रस्याऽधिकार इति व्यवस्थाप्य सिद्ध्यादिलोभाद्वामे कौले वा प्रवर्तमानस्य ब्राह्मणस्य केवलं भोग एव न मोक्षः, तदुभयं तु श्रौतमार्गसंवलिततन्त्रोक्तदक्षिणमार्गेण समुचितेष्टदेवताऽऽराधकस्यैव ब्राह्मणस्यैति सिद्धान्तितम्। न च—

वामाऽऽचारैर्द्विजैः पूर्वं कर्तव्यं कुलदीक्षणम्।
पश्चाद्दीक्षा तु सावित्र्या व्यत्यासात् पतितो भवेत्॥

इति ब्राह्मणानां वाममार्गाऽऽधिकारित्वप्रकाशकेन मेरुतन्त्रवचनेन विरोध इति वाच्यम्। तत्र द्विजपदस्य ब्राह्मणेतरद्विजपरत्वकल्पनेन विरोधाऽभावात्। अत एव—

ब्राह्मणानां वाममार्गो नरकायैव जायते।

इति तन्त्रान्तरवचनान्तरमपि संगच्छते, अधिकारिविशेषाऽनुष्ठितस्य वाममार्गस्यापि भुक्तिमुक्तिजनकतया ब्राह्मणानां तदधिकारित्वे तस्य तान्निरयहेतुत्वाऽनुपपत्तेः। तथा च—

यो दाक्षिण्यं विना विप्रो महामायां प्रपूजयेत्।
स पापः स्वर्गलोकात्तु च्युतो भवति रोगधृक्।

इति कालिकापुराणवचनाद्दक्षिणमार्गे एव ब्राह्मणस्याऽधिकार इति बोध्यम्। एवं च क्षत्रियवैश्ययोरपि दक्षिणमार्ग एव प्रशस्तः, तयोर्वाममार्गाऽधिकारित्वकथनं तु रा-

गात् प्रवृत्तयोरपि न पातित्यमित्यभिप्रायेण; ब्राह्मणस्यैव त-थाविधस्य तच्छ्रवणात् । वाममार्गस्तु शूद्राणामेव प्रशस्तः।

शूद्रादियवनान्तानां सिद्धिर्वामपथे* स्थिता ।

इति मेरुतन्त्रवचनात् । आचारमाधिकृत्य—

वामादिना यजेच्छूद्रो दक्षिणेन द्विजातयः ।

इति महाकालवचनात् । द्विजातय इति, ब्राह्मणक्षत्रिय-वैश्या इत्यर्थः । वामादिनेत्यादिशब्देन कुलाचारः संगृह्यते, सो ऽपि पूर्ववच्छूद्राणामेव प्रशस्तः, क्षत्रियवैश्ययोर्न प्रशस्तो नापि निषिद्धो, ब्राह्मणानां तु निषिद्ध एव ।

ब्राह्मण्यहानिहेतुत्वात् कुलाचारं न चाऽऽचरेत् ।

इति सिद्धान्तसारवचनात् ।

ये विप्राः शापनिर्दग्धा ब्रह्मकर्मविवर्जिताः ।
तेषां तु कौलधर्मो ऽयं भुक्तिमुक्त्योस्तु साधनम् ॥
ये विप्राः पापसंजाताः शापनिर्दग्धविप्लुताः ।
तेषां कुलाऽधिकारो ऽयं मार्गस्याऽस्य प्रजायते ॥

इत्यादिमेरुतन्त्रवचनेन दक्षयज्ञे पारिषदशापाद्वेदमार्गब-हिर्भूतानां विनष्टब्राह्मणत्वानामेव विप्राणां तदधिकारित्व-बोधनाच्च । यदि च स्वतन्त्रवक्तुरीशस्य वचनानां वैचित्र्याद् ब्राह्मणानामपि वामकौलाधिकारित्वबोधकवचनान्तरमुपल-भ्येत तदा पञ्चसु लक्षणेषु यत्किंचिल्लक्षणोपलक्षिता ही-नब्राह्मणास्तत्र बोद्धव्याः, तादृशानां तु तदधिकारो ऽस्त्येव ।

* वामपथे इति पाठान्तरम् ।

एतच्च मेरुतन्त्रे एवेश्वरचरणैर्व्यक्तीकृतम् । यथा—

ब्रह्मवीर्य्यं[1] तथा क्षेत्रं[2] संस्कारा ब्रह्मसंभवाः[3] ।
ब्राह्मणाऽऽचरणा[4] ब्रह्मविद्याभि[5]र्ब्राह्मणो भवेत् ॥
यस्य वश्या वयं यस्य वाचमर्थोऽनुधावति ।
एकस्मिँल्लक्षणे हीने वागर्थमनुधावति ॥
द्विहीनलक्षणो देवि स्वाचाराद्ब्राह्मणो भवेत् ।
लक्षणत्रयहीनो यस्तन्त्रमार्गेण सिद्ध्यति ॥
चतुर्लक्षणहीनानां मार्गाः स्युः कौलिकादयः ।

लक्षणहानिश्च निर्देशक्रमप्रातिलोम्येन बोध्या* ।

तत्रैव—

पूर्वोक्तलक्षणेष्वेकं यस्मिन् विप्रे प्रदृश्यते ।
तप्यते चोपतापेन किंचिद्ब्राह्मणतां गतः ॥
अधिकारो न मे जातः समस्तब्रह्मकर्मणाम् ।
इह लोके परत्रापि कथं प्राप्स्याम्यहं सुखम् ॥
अन्धश्च यः परद्रव्ये परस्त्रीषु नपुंसकः ।
पराऽपवादे यो मूको नित्यमित्थं विचारयेत् ॥
तस्यैव ब्राह्मणस्यात्र वामे स्यादधिकारिता ।

एकमिति, ब्रह्मवीर्य्योत्पन्नत्वम् ।

तथा—

पञ्चलक्षणसंयुक्तो ब्राह्मणः काल एव सः ।
अहं ब्रह्मा तथा विष्णुस्तदाज्ञावशवर्तिनः ॥
स चेद्वामपथं प्राप्तः पुनः श्वा चाऽभिजायते ।

---

* तथा च विद्याऽऽचारसंस्कारक्षेत्रबीजानीति क्रमेण लक्षणहानिर्द्रष्टव्या ।

चतुर्लक्षणसंयुक्तो वामस्तस्य फलप्रदः ॥
ताभ्यां दत्तो भाग्यवश्यात्तान्त्रिकः को ऽपि चेन्मनुः ।
सद्यः फलति चाऽऽद्यस्य क्रियया चाऽपरस्य तु ॥
लक्षणत्रययुक्तो यस्तस्य वैदिकतान्त्रिके ।
यथोक्ताऽऽचरणादेव फलदस्तेन वामकः ॥
लक्षणद्वयसंयुक्तस्तस्य वामश्च दक्षिणः ।
समौ तुल्यफलौ स्यातां न कदा चन वैदिकः ॥
एकलक्षणसंयुक्तो वामस्तस्य फलप्रदः ।
शूद्रादियवनाऽन्तानां सिद्धिर्वामपथे स्थिता ॥
वाममार्गस्थितो विप्रस्तुलसीं न क्व चित् स्पृशेत् ।
न स्पृशेद्वैष्णवं विप्रं प्रणमेन्न च वैदिकम् ॥
निन्दन्तु बान्धवाः सर्वे त्यजन्तु स्त्रीसुतादयः ।
जना हसन्तु मां दृष्ट्वा राजानो दण्डयन्तु वा ॥
रोगदारिद्र्यदुःखाद्यैः पीडितो ऽप्यनिशं त्वहम् ।
लक्ष्मीस्तिष्ठतु वा यातु न मुञ्चामि पदं* त्विदम् ॥
एवं यस्य दृढा भक्तिः स वामे सिद्धिमाप्नुयात् ।

रुद्रयामले—

वामे चन्द्रमुखी मुखे च मदिरा पात्रं कराऽम्भोरुहे
मूर्द्ध्नि श्रीगुरुचिन्तनं भगवतीध्यानाऽऽस्पदं मानसम् ।
जिह्वायां जपसाधनं परिणतिः कौलक्रमाभ्यागमे†
ये षां वै नियतं पिबन्तु सुरसं ते भुक्तिमुक्ती गताः ॥
वामे रामा रमणकुशला दक्षिणे चालिपात्रम्
अग्रे मुद्राश्चणकवटकाः शूरणश्चोष्ठशुद्धिः ।

---

* पथमिति पाठान्तरम् ।   † क्रमाभ्यासने इति पाठान्तरम् ।

तन्त्रीवीणा सरसमधुरा सद्गुरुः सत्कथायां
वामाऽऽचारः परमगहनो योगिनामप्यगम्यः* ॥

## मेरुतन्त्रे—

पेयं मद्यं पलं खाद्यं समालोक्यं प्रियामुखम् ।
इत्येवाऽऽचरणं श्रेष्ठं पामराः प्रवदन्ति च ॥
मद्यपानेन मनुजो यदि सिद्धिं लभेत चेत् ।
मद्यपानरताः सर्वे किं सिद्धा न भवन्त्युमे ॥
मांसभक्षणमात्रेण यदि पुण्या गतिर्भवेत् ।
क्रव्यादानां तदा मोक्षो मांसादन्यो न युज्यते ॥
स्त्रीसंभोगेन भो देवा यदि मोक्षोऽभिजायते ।
तदा सर्वेऽपि मुक्ताः स्युः कस्य जन्म भविष्यति ॥
कृपाणधारागमनाद् व्याघ्रकर्णाऽवलम्बनात् ।
भुजङ्गाऽऽवरणान्नूनमशक्यं कुलवर्त्मनि† ॥

## अथ वैष्णवभेदाः ।

## तदुक्तं शक्तिसंगमे—

वैखानसो[१] भवेदादौ श्रीराधावल्लभ[२]स्तथा ।
गोकुलेशो[३] महेशानि तथा वृन्दावनी[४] भवेत् ॥
पाञ्चरात्रः[५] पञ्चमः स्यात् षष्ठः श्रीवीरवैष्णवः[६] ।
रामानन्दी[७] हरिव्यासी[८] निम्बार्क[९]श्च महेश्वरि ॥
ततो भागवतो[१०] देवि दश भेदाः प्रकीर्तिताः ।
वैखानसादिदीक्षाद्यैर्भूषितः स्मार्त्तवैष्णवः ॥
वैष्णवाऽऽचारनिरतो विष्णुमन्त्रैकपारगः ।

---

* एवं च ईदृशविकारकारणप्राचुर्येपि अविचलितमनसां देवताध्यानमात्रासक्तस्वान्तानां धीरवर्याणामेवाऽत्राधिकारो न तु विषयलम्पटानामिति सिध्यति ।

† आचरणमिति शेषः ।

अनन्यचेताः शान्तात्मा विष्णुचिह्नपरायणः ॥
श्रीराधावल्लभो देवि गोकुलेशं शृणु प्रिये ।
नानाऽऽभरणसंपन्नो नानासौगन्ध्यभूषितः ॥
गवां कुलं प्रीणयतः कलिकृष्णस्य रूपधृक् ।
शरीरमर्थं प्राणांश्च तन्निवेदनकारकः ॥
अन्तः शक्तिपरो देवि बहिर्वैष्णवरूपधृक् ।
गन्धर्वाऽऽचारनिरतो लतावेष्टित*तत्परः ॥
संप्रदायो गोकुलेशः सर्वसिद्धिकरो भुवि ।
विगताशः प्रसन्नात्मा विष्णुभक्तिपरायणः ॥
कामिनीसङ्गचपलो वनक्रीडाविनोदधृक् ।
सौगन्ध्यभूषिततनुः स्त्रीध्यानैकपरायणः ॥
विष्णुसारूप्यतत्त्वज्ञः प्रोक्तो वृन्दावनी शिवे ।
पञ्चरात्रव्रतं प्राप्ताः पाञ्चरात्राः प्रकीर्तिताः ॥
दिनपञ्चकपर्यन्तं शैवा नाम त्रिलोचनाः ।

गोपालपद्धतौ—

कायेन मनसा वाचा भजते विष्णुमेव यः ।
स वीरवैष्णवः प्रोक्तो देवतान्तरनिन्दकः ॥
चराऽचरमिदं विश्वं जानन् नारायणात्मकम् ।
कं चिन्न द्वेष्टि यः सो ऽयमुत्तमो वीरवैष्णवः ॥

तत्रैव—

हृदयाम्भोजमध्यस्थे श्रीरामे परमात्मनि ।
आनन्दं भजते यस्तु रामानन्दी स उच्यते ॥

---

* लतावेष्टितकम्=आलिङ्गनविशेषः ।

शक्तिसंगमे—

पापसंहरणाऽऽसक्तो विष्णुभक्तो जितेन्द्रियः ।
यमादिनियमैर्युक्तो युक्ताऽऽचारपरायणः ॥
स्वोपयुक्तपरिग्राही* परकार्यपरायणः ।
हरिव्यासी महेशानि शिवशक्तिस्वरूपधृक् ॥
नित्याऽर्चनक्रमाऽशक्तः स्वतन्त्रैकपरायणः ।
बाह्यपूजादिनिरतो ऽनन्यभक्तः प्रसन्नधीः ॥
आर्य्यपक्षान्वितः स्वच्छः स्वच्छन्दाऽऽचारतत्परः ।
स्वतन्त्रः स्मार्त्तविद्वेषी निम्बार्को भगवान् हरिः ॥
विष्णुभक्तैकनिपुणो विजितात्मा प्रसन्नधीः ।
स्मार्त्तगर्वान्वितो देवि तदन्याऽऽचारतत्परः ॥
शैवद्वेषी तस्य सङ्गात् पुनः स्नानपरायणः ।
केवलं विष्णुभक्तिज्ञः प्रोक्तो भागवतः शिवे ॥

परमभागवतलक्षणं तु

एकादशस्कन्धे—

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥

अन्यच्च तत्रैव—

गृहीत्वा ऽपीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति ।
विष्णोर्मायामिदं† पश्येत् स वै भागवतोत्तमः ॥

तथा—

त्रिभुवनविभवहेतवे ऽप्यकुण्ठ-
स्मृतिरजितात्मसुरादिभिर्विमृग्यात् ।

* करो ग्राहीति पाठान्तरम् । † इदं=जगत् ।

न चलति भगवत्पदारविन्दा-
ल्लवनिमिषार्द्धमसौ तु वैष्णवाऽग्र्यः ॥

मध्यमलक्षणं तत्रैव—

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा* यः करोति स मध्यमः ॥

प्राकृतभागवतलक्षणं तत्रैव—

अर्चायामेव हरये पूजां यः श्रद्धयेहते । 60453
न तद्भक्तेषु चाऽन्येषु स भक्तः प्राकृतः स्मृतः ॥

अथ शैवभेदाः ।

शक्तिसंगमे—

शिखी[1] मुण्डी[2] जटी[3] चैव द्वि[4]त्रिदण्डी[5] क्रमेण च
एकदण्डी[6] महेशानि वीरशैव[7]स्तथैव च ॥
सप्त पाशुपताः प्रोक्ता दशधा वैष्णवास्तथा ।
अथ पाशुपतानां च वासनां† शृणु पार्वति ॥
शिखी पाशुपतो देवि शिखासूत्रधरः शुभः ।
समाधितत्परो देवि समाधौ शिवपीठधृक् ॥
रुद्राक्षं च तथा भस्म लिङ्गं शैवाऽभिधं शिवे ।
प्रसन्नात्मा शान्तचित्तो ब्रह्मचारी प्रकीर्तितः ॥
मतं श्रीबिन्दुमालिन्याः समाश्रित्य प्रतिष्ठितः ।
मुण्डी त्रिंशद्विधो देवि तारासूक्ते प्रकाशितः ॥
तत्र पाशुपताऽऽचारसंपन्नो मुण्डितो भवेत् ।
त्रिजटैकजटाधारी तथा वक्रजटाधरः ॥

---

* यथाक्रमम् ।

† वासनां=लक्षणम् ।

नग्नस्तपस्वी शान्तात्मा देहक्लेशपरायणः ।
कर्मत्रितयसंपन्नो जटी पाशुपतः स्मृतः ॥
द्विदण्डी तु महेशानि वाङ्मनोदण्डसंयुतः ।
कायवाङ्मनसां दण्डी त्रिदण्डी परिकीर्तितः ॥
मनोमात्रस्य दण्डी य एकदण्डी प्रकीर्तितः ।
केवल शिवसंपन्नः स्वस्य देवस्य निन्दकः ॥
वीरशैव इति ख्यातः, इति ।

अन्यत्र वैष्णवत्वेन प्रसिद्धास्त्रिदण्ड्यादयः शैवा अपि संभवन्तीति दर्शिताः ।

युगभेदेन मार्गभेदप्राधान्यमाह

रुद्रयामले—

कृते श्रुत्युक्तमार्गः स्यात् त्रेतायां स्मृतिभाषितः ।
द्वापरे वै पुराणोक्तः कलावागमसंभवः ॥

प्रधान इति शेषः ।

आगमस्य वेदाऽङ्गत्वमाह

मेरुतन्त्रे—

न वेदः प्रणवं त्यक्त्वा मन्त्रो वेदसमन्वितः ।
तस्माद्वेदपरो मन्त्रो वेदाङ्गश्चाऽऽगमः स्मृतः ॥

आगमशब्दार्थो,

रुद्रयामले—

आगतः शिववक्त्रेभ्यो गतश्च गिरिजामुखे ।
मग्नस्तस्या हृदम्भोजे तस्मादागम उच्यते ॥

आगमस्य वेदाङ्गत्वे ऽपि वैदिककौलिकयोर्विरोधमाह

तत्रैव—

कौलिकं कुर्वतः कर्म वैदिकं नाऽभिधीयते ।
विरोधा*दुभयं नष्टं तस्मादेकपथा चरेत् ॥

वामदक्षिणमार्गयोरपि विरोधमाह

मेरुतन्त्रे—

वाममार्गी यदा दक्षं प्रविशेत्तत्सुरैः स तु ।
विघ्न्यते पीड्यते चापि न सिद्धिमधिगच्छति ॥
दक्षमार्गी यदा वामं प्रविशेत्तत्सुरास्तथा ।
लोकद्वयाद्भ्रापयन्ति तं ग्रसन्ति च वामिनम् ॥
तस्मात् स्वकुलमार्गं तु ज्ञात्वा कुर्यादुपासनाम् ।

उपासनाभेदास्तत्रैवोक्ताः—

श्रीशिव उवाच ।

महाकालेन यत् प्रोक्तं यन्महामायया श्रुतम् ।
रहस्याऽतिरहस्यं तत् सर्वमन्त्रेषु गोपितम् ॥
आम्नायानां रहस्यं तदाह्निकं प्रोच्यतेऽधुना ।
शृण्वन्तु सर्वे भो देवाः साधकानां प्रसिद्धिदम् ॥
तत्र नित्यं त्रिधा प्रोक्तं गुणत्रयविभेदतः ।
अधिकारिविभेदेन तदपि त्रिविधं भवेत् ॥
शुद्धं मिश्रं च गलितं तत्तथैव फलप्रदम् ।
शुद्धं सम्पूर्णफलदं मिश्रं किंचित्फलप्रदम् ॥
अकृते प्रत्यवायो न गलिते सत्फलं न च ।
अहङ्कारविहीनं यन्मानसं ज्ञानपूर्वकम् ॥

---

* विरुद्धाद्विति पाठान्तरम् ।

स्वस्थचित्तेन यतिना कृतं तच्छुद्धमुच्यते ।
तादृशं चेद् गृहस्थेन निर्द्रव्येणाऽथ वा कृतम् ॥
रुग्णेन पथिकेनापि कारागृहगतेन वा ।
भक्तितो वा ऽपि तन्मिश्रं बाह्यपूजाऽधिकारतः ॥
शीतादिभीत्यादाविष्टसंक्षयादल्पकार्य्यतः ।
स्त्र्यादेर्नियोगाद् गलितो गृहीतो मानसं मतम् ॥
बाह्यपूजादिकं यच्च एकान्ते नियमेन च ।
भक्त्या कृतं गृहस्थेन तच्छुद्धं राजसं मतम् ॥
पूजार्थं यद्याचयित्वा श्रद्धाभक्ती विहाय वा ।
लोकभीत्या देवभीत्या यत् तद्राजसमिश्रितम् ॥
प्रतारणार्थं लोकानां याचितं देवनामतः ।
द्रव्यं कृतं तद्व्येषेण* गलितं तत्तु राजसम् ॥
वाममार्गं समाश्रित्य कौलं धर्मं विचार्य च ।
अन्यधर्मस्य चाऽद्वेषात् कृतं शुद्धं तु तामसम् ॥
कृतं यत् कामतः कर्म वैदिकं पारलौकिकम् ।
वाममार्गं समाश्रित्य मिश्रितं तत्तु तामसम् ॥
जिह्वालोभेन यत् खानं पानं यत् कामतो रतम् ।
अथ वा मारणाद्यर्थं गलितं तत्तु तामसम् ॥
शुद्धसत्त्वेन मोक्षः स्यात् स्वर्गः स्यान्मिश्रसत्त्वतः ।
सिद्धिर्गलितसत्त्वात् स्यादैहिकी च मनुष्यता ॥
स्वर्गः स्याद्राजसाच्छुद्धात् कामः स्यान्मिश्रराजसात् ।
गलिताद्राजसात् तिर्यग्योनावपि सुखं भवेत् ॥

---

* तद्व्येशेनेति १ - २ पु. पा. ।

सात्त्विकात्तामसाद्देवयोनित्वं प्राप्नुयान्नरः ।
मिश्रतामसतो दुःखी नारकी चाऽन्ततामसात् ॥
कर्म पञ्चविधं प्रोक्तं पञ्चधा मुक्तिदायकम् ।
प्रसर्पण[1]मुपादान[2]मिज्या[3] ऽध्याय[4]स्तथा भुवि ॥
संमार्जनोपलेपादिसंस्कारा देवमन्दिरे[1] ।
भक्त्या ऽर्चनं* सर्प्पणं स्याद्देवसालोक्यकारकम् ॥
पूजासाधनसामग्र्या मेलनं भक्तसेवनम् ।
तत्प्रीतिः स्यादुपादानं देवतारूपदायकम् ॥
पीठपूजनपूर्वं यत् षोडशाद्युपचारकैः ।
मूर्त्तेर्यन्त्रे ऽथ वा पूजा सेज्या सामीप्यकारिका ॥
तच्छास्त्राऽध्ययनं सम्यक् कृत्वा मन्त्राऽर्थभावनम् ।
कृत्वा जपः स्यात् स्वाध्यायो देवसायुज्यकारकः ॥
गुरुदेवात्मकालानां† सम्यगैक्यविभावनम् ।
संयोगो देहलिङ्गस्य नाशकः कालयोगकृत् ॥

अथ पथिकादिकर्तृकोपासना

## तत्रैवोक्ता—

अथा ऽऽपराह्णिकं वक्ष्ये तत् स्थानदशके भवेत् ।
मार्गे[1] प्रवासे[2] दुर्गे[3] च नाऽन्नप्राप्तौ‡[4] मनोभये[5] ॥
कारागृहे[6] ऽशुभे[7] ऽस्थाने[8] चौरव्याघ्रादिजे भये[9] ।
परचक्राऽऽगमे[10] कुर्य्याच्छौचाद्यं च यथा तथा ॥
मन्त्रस्नानादिकं किं चित् कृत्वा मानसपूजनम् ।
मनसा हृदयस्याऽन्तर्ध्यात्वा योगाख्यपीठकम् ॥

---

* भक्तार्चनमिति १ – २ पु. पा. । † देवात्माकाराणामिति १ पु. पा. ।
‡ अन्नाऽप्राप्तौ, दुर्भिक्षे इत्यर्थः । नञ्शब्देन समासः ।

तत्रैव पृथिवीमध्ये पूजां देवस्य चाऽऽचरेत् ।
यथा पुष्पादिभिः पूजा बहिर्देशे विधीयते ॥
तथा हृद्यपि कर्त्तव्याः सर्वास्ताः प्रतिपत्तयः ।
मनसा जठरे होम एतद्विपदि चाऽऽह्निकम् ॥

अथ रोगाऽऽर्तकर्तृकोपासना

तत्रैवोक्ता—

अथाऽऽतुराह्निकं वक्ष्ये नित्यं कष्टाऽधिकस्य तत् ।
यदि लङ्घनपर्यन्तो व्याधिरात्मनि दृश्यते ॥
तदा पूजा न कर्त्तव्या स्थण्डिले प्रतिमासु च ।
न स्नानं दन्तकाष्ठं वा कुर्याद्धोममथापि वा ॥
रविमण्डलमालोक्य प्रतिमामथ वा पुनः ।
मूलमन्त्रं सकृज्जप्त्वा पुष्पं साक्षतमुत्सृजेत् ॥
श्रान्तो व्याधिभिरत्युग्रैर्जरसा चेन्द्रियच्युतः ।
निजसामयिकैर्वापि स्वकर्त्तव्यं समापयेत् ॥
रुङ्निवृत्तस्ततः स्नात्वा पूजयित्वा ऽग्निदेवताः ।
गुरून् विप्रांस्तदग्रे च वाक्यमेतदुदीरयेत् ॥
एतावत्कालविच्छिन्ना पूजा, युष्मत्प्रसादतः ।
न दोषो ऽस्त्विति संप्रार्थ्य पुनः पूर्ववदाचरेत् ॥
यस्तु रोगवशाद्दोषो जातस्तत्क्षालनं चरेत् ।
जपेन वा ऽथ दानेन होमेन ध्यानतो ऽपि वा ॥

अथ सूतकिकर्तृकोपासना

तत्रैवोक्ता—

अथ सूतकिनो नित्यं वैदिकं तु स्मृतीरितम् ।

कृत्वा तान्त्रिकपूजादि मनसैव समाचरेत् ॥
कामनार्थं प्रयोगश्चेत् तदा पूर्ववदाचरेत् ।
मृतगेहं परित्यज्य वामाऽऽचारेण सूतके ॥
स्पृहां हित्वा ज्ञानपूर्वं कुलजो धर्ममागतम् ।
यः पालयेद्वामधर्मं देवता तु स जायते ॥

अथ महाभये आपतिते पूजासामग्र्यभावे वा यत्कर्त्तव्यं तदाह

संत्रस्तेन न चेल्लब्धमर्घ्यपात्रादि साधनम् ।
पूजोदकेन कर्तव्या, तोयं चेन्नैव विद्यते ॥
तदा संपूजयेद्देवं भावनाकुसुमादिभिः ।
भक्तिः श्रद्धा भावना च पूजानां जीव उच्यते ॥

जडाऽऽह्निकमाह

जडानामाह्निकं वक्ष्ये तथा संक्षेपकर्म्माणि ।
रत्नमण्डप[1]धर्मादिचतुष्क[2]मुरगा[3]*ऽम्बुजम्[4]† ॥
मूल[5]‡मूर्ति[6]§षडङ्गानि[7]|| तेषां पूजा विधीयते ।
एतन्न्यासक्रमेणैव स्पृशेदङ्गानि नित्यशः ॥
सर्वेषामपि वस्तूनामलाभे भावनैव हि ।
मिर्मलेनोदकेनैव पूजयेत् स्थिरमानसः ॥
सामान्यतस्त्रिधा पूजा सोत्तमा[1] मध्यमा[2] ऽधमा[3] ।
अधिकारिनिमित्ताभ्यां भिद्यते शतधा पुनः ॥
योगोपकरणैः कृत्स्नैः क्रियमाणोत्तमा मता ।
यथालब्धैर्विनिष्पाद्या द्रव्यैः पूजा तु मध्यमा ॥
पत्रपुष्पाऽम्बुनिष्पाद्या पूजा चाऽधमसंज्ञका ।

---

* उरगः शेषः । † पीठमध्यस्थमष्टदलकमलम् । ‡ मूलमन्त्रः ।
§ मूर्तिः पूज्यदेवतायाः । || अङ्गन्यासः ।

विहिता ऽखिलवेदोक्तैर्ब्रह्मार्षिभिरकल्मषैः ॥
क्रियमाणा तु या पूजा सात्त्विकी सा विमुक्तिदा।
राजर्षिभिस्तपोनिष्ठैर्भगवत्तत्त्ववेदिभिः।
या पूजा क्रियते सम्यग्राजसी सा सुखप्रदा ॥
स्त्रीबालवृद्धमूर्खाद्यैर्भक्तैरक्षुब्धमानसैः।
या पूजा क्रियते नित्यं तामसी सा प्रकीर्तिता ॥
अरण्ये स्वल्पकामानां सिद्ध्यर्थं पूजनं स्मृतम्।
निष्कामानां गृहस्थानां हितं गेहे तु पूजनम् ॥
कदा चिदपि न त्याज्यो वेदमार्गो द्विजैः सदा।
वेदच्युतानां विप्रत्वं देवत्वं चापि दुर्लभम् ॥

तथा—

उपासना त्रिधा प्रोक्ता श्रेष्ठा तत्र तु सात्त्विकी।
तस्यां च मानसौ पूजाजपौ मुख्यतमौ स्मृतौ ॥
राजसो दाक्षिणो मार्गः प्रतिमायां प्रपूजनम्।
बाह्योपचारैः पुष्पाद्यैस्तदाद्यानां* विशिष्यते ॥
तामसोपासनं प्रोक्तं पीठादौ बलिदानतः।
वाममार्गेण तद्याद्यं वर्णं हित्वा प्रशस्यते ॥
एषा व्यवस्था संप्रोक्ता वामदक्षिणयोः परा।
उपासना द्विधा प्रोक्ता सकामाऽकामविश्रुता ॥
मोक्षबीजं तु निष्कामा सकामा भवबीजकम्।
उपासनायां च गुरूपदेशं विना ऽनधिकारित्वमाह

* ब्रह्मणानाम्।
† एतदग्रे 'यथाऽधिकारोनास्तीहस्याद्योपनयनादिष्विति अधिकं दृश्यते २ पु.।

तत्रैव—

द्विजानामनुपनीतानां स्वकर्माऽध्ययनादिषु ।
तथा चाऽदीक्षितानां च मन्त्रदेवाऽर्चनादिषु ॥
नाधिकारो ऽस्त्यतः कुर्य्यादात्मानं मन्त्रसंस्कृतम् ।

मन्त्रमुक्तावल्याम्—

जपो देवार्चनविधिः कार्य्यो दीक्षाऽन्वितैर्नरैः ।

तथा गौरीयामले—

यदृच्छया* श्रुतं मन्त्रं छद्मना ऽथ बलेन च ।
पत्रे स्थितं तु गाथावत् प्रजप्तमपि निष्फलम् ॥

योगिनीतन्त्रे—

अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः ।
न भवेत्तु फलं तेषां शिलायामुप्तबीजवत् ॥

महाकालसंहितायामपि—

न शास्त्रमालोक्य वदेन्नाऽऽचरेन्न जपेदपि ।
न पश्येन्नोपदिश्याच्च न कुर्य्यान्नैव साधयेत् ॥
गुरूपदेशतो लब्धे जपन्यासाऽर्चनादिके ।
पश्चात्तत्साधयेत्सर्वं सदा तद्भवभावितः ॥

दीक्षाया आवश्यकत्वमाह

रुद्रयामले—

यस्य दीक्षा शिवे नास्ति जीवनान्तं च जन्मिनः ।
स जातु नोत्तरेद्देवि निरयाऽम्बुनिधेः क्व चित् ॥
दीक्षाहीनस्य देवेशि पशोः कुत्सितजन्मनः ।

---

* यदिच्छयेति १ पु. पा. ।

पापौघो ऽन्तिकमायाति पुण्यं दूरं पलायते ॥
तस्माद्यत्नेन दीक्षैषा ग्राह्यो कृतिभिरुत्तमा ।

दत्तात्रेययामले—

अथ दीक्षाविहीनो यो वर्त्तते भुवि पापभुक् ।
मोहाऽन्धकारे नरके गर्ते पतति दुःखितः ॥
अनीश्वरस्य मर्त्यस्य नास्ति त्राता यथा भुवि ।
तथा दीक्षाविहीनस्य नेह स्वामी परत्र च ॥

आगमकल्पद्रुमे—

उपचारसहस्रैस्तु योजितां भक्तिसंयुताम् ।
अदीक्षिताऽर्चनां देवा न गृह्णन्ति कदा चन ॥
कर्माऽखिलं वृथा यस्मात् तस्मात् पशुरदीक्षितः ।

मत्स्यसूक्ते—

अदीक्षितानां मर्त्यानां शृणु देवि महेश्वरि ।
अन्नं विष्ठासमं तस्य जलं मूत्रसमं स्मृतम् ॥
तत्कृतं तस्य वा श्राद्धं सर्वं संयात्यधोगतिम् ।

दीक्षामाहात्म्यमाह

कुलार्णवे—

उपपातकलक्षाणि महापातककोटिकाः* ।
क्षणाद्दहति देवेशि दीक्षा हि विधिना कृता ॥

रुद्रयामले—

दीक्षितो ब्राह्मणो याति ब्रह्मलोकं सुधामयम् ।

---

* कोटय इति १-२ पु. पा. ।

ऐन्द्रं लोकं क्षत्रियो ऽपि प्राजापत्यं विशस्तथा ॥
याति गन्धर्वनगरं शूद्रो दीक्षाप्रसादतः ।
दीक्षां विना न मोक्षः स्यात् प्राणिनां शिवशासनात् ॥
सा च न स्याद्विना ऽऽचार्यमित्याचार्य्यपरम्परा ।

वैशम्पायनसंहितायाम्—

सर्वसिद्धिकरी दीक्षा सर्वसंपत्प्रदायिनी ।
प्रतिमास्वरवर्णानि कान्तिपुष्टिधनानि च ॥
मोहनस्तम्भनाऽऽकृष्टिमारणोच्चाटनानि च ।
वशीकारं च कवितां बुद्धिं वै धारणायुताम् ॥
तारणं च समुद्रस्य वह्नेः शैत्यं रणे जयम् ।
विपिने चाऽभयं चैव शोकदुःखाऽपहं तथा ॥
धर्माऽर्थकाममोक्षांश्च ददात्येषा न संशयः ।

दीक्षाशब्दार्थ उक्तो

रुद्रयामले—

दिव्यज्ञानं यतो दद्यात् कुर्य्यात् पापस्य संक्षयम् ।
तेन दीक्षेति लोके ऽस्मिन् कीर्तिता मन्त्रपारगैः ॥

मेरुतन्त्रे—

दीयते ज्ञानविज्ञानं क्षीयन्ते पापराशयः ।
तेन दीक्षेति हि प्रोक्ता प्राप्ता चेत् सद्गुरोर्मुखात् ॥
असद्गुरुः स्वयं नष्टः कथं तारयते परम् ।

आगमसारे—

गुरोर्मुखान्महाविद्यां गृह्णीयात् पापनाशिनीम् ।
तस्माद्यत्नाद् गुरुं कृत्वा मन्त्रसाधनमाचरेत् ॥

( चामुण्डातन्त्रे )

उपविद्यासु सर्वासु षट्कर्मादिप्रसाधने।
नात्र दीक्षाद्यपेक्षाऽस्ति नाऽत्राऽङ्गादिप्रपूजनम्॥

उपविद्या यक्षिण्याद्याः। षट्कर्मादिसाधनमन्त्राश्च महामन्त्राऽतिरिक्ताः सामान्यमन्त्राः। अत्र दीक्षापदं क्रियावत्यादिदीक्षापरम्। उपदेशदीक्षा तु सर्वत्राऽवश्यकी।

पुस्तके लिखितो मन्त्रो येन सुन्दरि जप्यते।
न तस्य जायते सिद्धिर्हानिरेव पदे पदे॥
गुरुमुख्याः क्रियाः सर्वा भुक्तिमुक्तिफलप्रदाः।
गुर्वनुक्ताः क्रियाः सर्वा निष्फलाः स्युर्यतो ध्रुवम्॥

इत्यादिवचनात्॥ न च

शास्त्राद्वा गुरुवक्त्राद्वा ज्ञात्वा मन्त्रं प्रसाधयेत्।

इति वचनात् पुस्तकादपि मन्त्रज्ञानं सिद्धिजनकमिति वाच्यम्। गुरोर्गृहीतमन्त्रः साधको मन्त्रसाधनप्रकारं शास्त्राद्गुरुमुखाद्वा ज्ञात्वा मन्त्रं साधयेदित्यस्यैव तदर्थत्वात्॥

मन्त्रपदार्थमाह ( पिङ्गलामते )

मननाद्विश्वविज्ञानं त्राणं संसारबन्धनात्।
यतः करोति संसिद्धिं मन्त्र इत्युच्यते ततः॥

मन्त्रमाहात्म्यमाह ( मेरुतन्त्रे )

मन्त्र एवेश्वरः साक्षान्मन्त्र एव महौषधम्।
नहि मन्त्रात् परं कश्चित् सर्वसिद्धिप्रदायकः॥

तत्रैव—

साधकानां फलं दातुं तत्तद्रूपं धृतं सुरैः।
मुख्यस्वरूपं तेषां तु मन्त्रा एव न चेतरत्॥

( सारसंग्रहे )

यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ ।
यथा गुरौ तथा स्वात्मन्येवं भक्तिक्रमः स्मृतः ॥

गुरुमाहात्म्यमाह ( रुद्रयामले )

गुरुरेव परो मन्त्रो गुरुरेव परो जपः ।
गुरुरेव परा विद्या नास्ति किंचिद्गुरुं विना ॥
यस्य तुष्टा गुरुर्देवि तस्य तुष्टा महेश्वरी ।
येन संतोषितो देवि गुरुः स हि सदाशिवः ॥
तस्माद्गुरुं भजेद्भक्त्या तोषयेत् सततं गुरुम् ।
गुरोर्यत्र परीवादो निन्दा यत्र प्रवर्त्तते ॥
कर्णौ तत्र पिधातव्यौ यद्वा दूरं पलायनम् ।

( ब्रह्मवैवर्त्ते )

यैः शिष्यैः शश्वदाराध्या गुरवो ह्यवमानिताः ।
पुत्रमित्रकलत्रादिसंपद्भ्यः प्रच्युता हि ते ॥
ये गुरुद्रोहिणो मूढाः सततं पापकारिणः ।
तेषां तु यावत् सुकृतं दुष्कृतं स्यान्न संशयः ॥
प्रातिकूल्यं गुरोर्नित्यं मनसा* वन्दनं चरेत् ।
सदाशिवधिया नित्यमेकग्रामनिवासिनम् ॥
गुरुं वन्देत चेद्दूरे मनसा वन्दनं चरेत् ।
ब्रह्मविष्णुशिवादीनां पूजने यत् फलं भवेत् ॥
तत् फलं समवाप्नोति प्रत्यहं वन्दने गुरोः ।
अविद्यो वा सविद्यो वा गुरुरेव तु दैवतम् ॥

---

* मनसाऽपि न कारयेदिति २ पु. पा ।

अमार्गस्थोऽथ मार्गस्थो गुरुरेव परा गतिः ।
यथा सिद्धरसस्पर्शात् ताम्रं भवति काञ्चनम् ॥
सन्निधाने गुरोरेवं शिष्यः शिवमयो भवेत् ।

तथा—

उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।
तस्मान्मन्येत सततं पितुरप्यधिकं गुरुम् ॥

(वसन्तललितभैरव्याम्)

दिव्यज्ञानोपदेष्टारं देशिकं परमेश्वरम् ।
पूजयेत् परया भक्त्या तस्याज्ञां नैव लङ्घयेत् ॥
यथा गुरुस्तथैवेशो यथैवेशस्तथा गुरुः ।
पूजनीयावुभौ भक्त्या न भेदो विद्यते तयोः ॥
नो द्वैतवादं कुर्वीत गुरुणा सह कुत्र चित् ।
अद्वैतं भावयेद्भक्त्या गुरुमीशः स जायते ॥

अन्यत्रापि

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।
तस्मात् सर्वप्रयत्नेन गुरुमेव प्रसादयेत् ॥

(मेरुतन्त्रे)

घृणा[1] शङ्का[2] भयं[3] लज्जा[4] जुगुप्सा[5] चेति पञ्चमी ।
कुलं[6] शीलं[7] तथा शक्ति[8]रष्टौ पाशाः प्रकीर्त्तिताः ॥
पाशबद्धः पशुः प्रोक्तः पाशमुक्तः सदाशिवः ।
तस्मात् पाशहरो योऽत्र स गुरुर्नाऽन्य उच्यते ॥

तथा—

शङ्कया भक्षितं सर्वं त्रैलोक्यं सचराचरम् ।
सा शङ्का भक्षिता येन स गुरुर्दुर्लभः क्षितौ ॥

(कुलरत्नावल्याम्)

अत्रिनेत्रं शिवः साक्षादचतुर्बाहुरच्युतः ।
अचतुर्वदनो ब्रह्मा श्रीगुरुः कथितः प्रिये ॥
सदाशिवस्य देवस्य श्रीगुरोरपि पार्वति ।
उभयोरन्तरं नास्ति यः करोति स पातकी ॥
यथा घटश्च कलशः कुम्भश्चैकार्थवाचकाः ।
तथा देवश्च मन्त्रश्च गुरुश्चैकार्थ उच्यते ॥
न गुरोः सदृशं वस्तु न देवः शङ्करोपमः ।
न च कौलात् परो योगो न विद्या* कालिकासमा ॥

(मेरुतन्त्रे)

गुरुभक्तिविहीनस्य तपो विद्या व्रतं कुलम् ।
व्यर्थं सर्वं शवस्येव नानाऽलङ्कारभूषणम् ॥

गुरुशब्दार्थमाह (आगमसारे)

गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः ।
उकारः शिव इत्युक्तस्त्रितयात्मा गुरुः परः ॥
दृढव्रतं सदाचारं श्रद्धाभक्तिसमन्वितम् ॥
कृतज्ञं पापभीतं च साधुसज्जनसंगमम् ।
आस्तिकं दानशीलं च सर्वभूताहिते रतम् ॥

गुरुलक्षणम् (कुलार्णवे)

श्रीगुरुः परमेशानि शुद्धवर्णो मनोहरः ।
सर्वलक्षणसंपन्नः सर्वाऽवयवशोभितः ॥
सर्वाऽऽगमार्थतत्त्वज्ञः सर्वमन्त्रप्रधानवित् ।
लोकसंमोहनाकारो देववत्प्रियदर्शनः ॥

---

* बालिकेति २ पु. पा इह बालिकेति पदेन त्रिपुरसुन्दरी ।

इङ्गिताऽऽकारचेष्टाभि*र्दूरतः कृतदुर्जनः ।
अन्तर्मुखो बहिर्दृष्टिः सर्वज्ञो देशकालवित् ॥
आज्ञासिद्धस्त्रिकालज्ञो निग्रहाऽनुग्रहक्षमः ।
वेदवेदाङ्गविच्छान्तः सर्वजीवदयापरः ॥
स्वाधीनेन्द्रियसंचारः षड्वर्गविजयक्षमः ।
अग्रगण्योऽतिगम्भीरः पात्राऽपात्रविशेषवित् ॥
निर्मलो नित्यसंतुष्टो निर्द्वन्द्वो नित्यशक्तिमान् ।
सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्ववाक् ॥
भक्तिप्रियः सर्वसमो दयालुः शिष्यशासिता ।
स्वेष्टदेवगुरुः प्राज्ञो वनितापूजनोत्सुकः ॥
नित्ये नैमित्तिके काम्ये रतः कर्मण्यनिन्दिते ।
रागद्वेषभयक्रोधदम्भाऽहङ्कारवर्जितः ॥
स्वविद्याऽनुष्ठानतपोविद्यानां च प्रकाशकः ।
यदृच्छालाभसंतुष्टो गुणदोषविभेदकः ॥
स्त्रीधनादिष्वनासक्तो दुःसङ्गव्यसनोज्झितः ।
अलोलुपोऽहिंस्रकश्चाऽपक्षपाती विचक्षणः ॥
वित्तविद्यादिभिर्मन्त्रयन्त्रतन्त्राद्यविक्रयी ।
निःसंकल्पो निर्विकल्पो निर्णीतात्माऽतिधार्मिकः ॥
तुल्यनिन्दास्तुतिर्मौनी निरपेक्षो नियामकः ।
इत्यादिलक्षणोपेतः कथितः श्रीगुरुः प्रिये ॥

अथ निषिद्धगुरुलक्षणम् (तत्त्वसारे)

बह्वाशी दीर्घसूत्री च विषयादिषु लोलुपः ।
हेतुवादरतो दुष्टो वाग्वादी गुरुनिन्दकः ॥

---

* इङ्गिताऽऽकारचेष्टाविद्दूरत इति २ पु. पा. ।

अरोमा बहुरोमा च निन्दिताऽऽश्रमसेवकः ।
कालदन्तोऽसितोष्ठश्च दुर्गन्धिश्वासवाहकः ॥
दुष्टलक्षणसंपन्नो यद्यपि स्वयमीश्वरः ।
बहुप्रतिग्रहाऽऽसक्त आचार्यः श्रीक्षयावहः ॥

अथ शिष्यलक्षणम् (कुलार्णवे)

सच्छिष्यं तं कुलेशानि सर्वलक्षणसंयुतम् ।
शमादिसाधनोपेतं गुणशीलसमन्वितम् ॥
शुद्धदेहाऽन्ववायज्ञं धार्मिकं शुद्धमानसम् ।
विश्वासविनयोपेतं वित्तशाठ्यविवर्जितम् ।
असाध्यसाधकं शूरं बलकान्तिसमन्वितम् ॥
अनुकूलक्रियायुक्तमप्रमत्तं विचक्षणम् ।
हितसत्यमितस्निग्धभाषिणं मुक्तदूषणम् ॥
सकृदुक्तगृहीतार्थं चतुरं बुद्धिविस्तरम् ।
गृहमत्यासवोत्सङ्ग*निर्विकारमसेवकम् ॥
विमृश्यकारिणं वीरं मनोदारिद्र्यवर्जितम् ।
सर्वकार्योऽतिकुशलं धीरं सर्वोपकारकम् ॥
अत्यर्थं परनिन्दायां विमुखं सुमुखं प्रिये ।
जितेन्द्रियं सुसंतुष्टं धीमन्तं ब्रह्मचारिणम् ॥
त्यक्ताधिव्याधिचापल्यं दुःशङ्काऽऽतङ्कवर्जितम् ।
गुरुध्यानस्तुतिकथासेवनाभजनोत्सुकम् ॥
गुरुदैवतभक्तं च कामिनी†भजनोत्सुकम् ।
गुर्वाज्ञापालकं देवि गुरुकीर्तिप्रशंसकम् ॥

---

* गृहतल्पासवोत्सङ्गेति २ पु. पा. ।
† स्त्रीनिन्दारहितमिति ।

गुरुवाक्यप्रमाणज्ञं गुरुशुश्रूषणे रतम्।
चित्ताऽनुवर्त्तिनं प्रेक्ष्यकारिणं कुलनायिके॥
लज्जाऽभिमानगर्वादिवर्जितं गुरुसन्निधौ।
निरपेक्षं गुरुद्रव्ये तत्प्रसादाभिकाङ्क्षिणम्॥
गुरुध्यानादिनिरतं मोक्षमार्गाऽभिकाङ्क्षिणम्।
इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत्॥

कुत्सितशिष्यलक्षणं तत्रैव—

दुष्टाऽन्ववायजं दुष्टं गुणहीनं विरूपितम्।
परशिष्यं च पाखण्डं धूर्त्तं पण्डितमानिनम्॥
हीनाऽधिकविकाराङ्गं विकलाऽवयवान्वितम्।
पङ्गुमन्धं च वधिरं मलिनं व्याधिपीडितम्॥
उच्छिष्टं दुर्मुखं चापि स्वेच्छावेशधरं विटम्।
दुर्भिदग्धं कुचेष्टं च कुटिलं भीमवीक्षणम्॥
निद्राऽऽलस्ययुतं तन्द्राद्यूतादिव्यसनान्वितम्।
कपाटकुड्यस्तम्भादौ तिरोहिततनुं सदा॥
शून्यमुक्तकरं* क्षुद्रं श्रद्धाभक्तिविवर्जितम्।
किमेकवादिनं स्तब्धं†दूषकं चपलं शठम्॥
धनस्त्रीशुद्धिरहितं निषेधविधिवर्जितम्।
रहस्यभेदकं चापि ‡वेदकार्य्याऽर्थघातकम्॥
मार्जारबकवृत्तिं च रन्ध्राऽन्वेषणतत्परम्।
मायाऽन्वितं कृतघ्नं च §प्रच्छन्नान्तरदायकम्॥

---

* शून्यौ रिक्तौ मुक्तावसम्पुटितौ च करौ यस्य तमिति।
† प्रेषकमिति २ पु. पा.।
‡ देवेति २ पु. पा।
§ गुप्तविघ्नदायकमिति।

विश्वासघातकं देवद्रोहिणं पापकारिणम् ।
अविश्वासमविद्याङ्गमनर्थसिद्धिकाङ्क्षिणम् ॥
आततायिनमादित्सुं कुत्सितं *कूटसाक्षिणम् ।
सर्वत्र याचकं देवि सर्वोत्कृष्टाभिगामिनम् ॥
असत्यनिष्ठं चासक्तं ग्राम्यादिबहुभाषिणम् ।
दुर्विचारवितर्कादिकारकं कलहप्रियम् ॥
वृथाऽऽक्षेपकरं भ्रान्तं भ्रामकं वाग्विडम्बकम् ।
परोक्षे दूषणकरं प्रत्यक्षे प्रियवादिनम् ।
वाग्रुक्षवादिनं विद्याचौरमात्मप्रशंसकम् ।
गुणाऽसहिष्णुं सद्गीतमतिक्रोधसमन्वितम् ॥
चार्वाकं दुर्जनसखं सर्वलोकविगर्हितम् ॥
पिशुनं परसंतापं सर्वप्राणिभयंकरम् ।
अक्लेशवादिनं मित्रद्रोहिणं भ्रातृवञ्चकम् ॥
जिह्वोपस्थपरं देवि तस्करं पशुचेष्टितम् ।
अकारणद्वेषहास्यक्लेशक्रोधादिकारिणम् ॥
अतिहास्यस्य कर्त्तारं भ्रमान्तःपरिहासकम् ।
कामुकं चाऽतिनिर्लज्जं मिथ्यादुश्चेष्टसूचकम् ॥
असूयामदमात्सर्य्यदम्भाहंकारसंयुतम् ।
ईर्ष्यापैशुन्यपारुष्यकार्पण्यक्रोधमानिनम् ॥
अधीरं दुःखितं द्वेष्यमशक्तं तत्त्ववर्जितम् ।
†असिद्धकुमतिं मूढं चिन्ताकुलितमानसम् ॥
तृष्णालोभयुतं दीनमतुष्टं सर्वयाचकम् ।

---

* क्रूरसाक्षिणमिति २ पु. पा. । † अप्रसिद्धमतिमिति २ पु. पा

बह्वाशिनं कपटिनं भ्रामकं कुटिलं प्रिये ॥
भक्तिश्रद्धादयाशान्तिधर्माऽऽचारविवर्जितम् ।
मातापितृगुरुप्राज्ञमहतां हास्यकारकम् ॥
कुलद्रव्यादिवीभत्सं गुरुसेवाऽभिमानिनम् ।
स्त्रीदुष्टं समयभ्रष्टं गुरुशप्तं महेश्वरि ॥
इत्यादिविगुणोपेतं गुरुः शिष्यं परित्यजेत् ।
स्नेहाद्वा लोभतो वाऽपि यदि गृह्णाति दीक्षयेत् ॥
तस्मिन् गुरौ सशिष्ये च देवताशाप आपतेत् ।
तस्मादेवंविधं शिष्यं न गृह्णीयात् कदा चन ॥
यदि गृह्णाति मोहेन तत्पापैः प्राप्यते गुरुः ।
मन्त्रिपापं च राजानं पतिं जायाकृतं यथा ॥
तथा शिष्यकृतं पापं प्रायो गुरुमपि स्पृशेत् ।
ज्ञानेन कृपया वाऽपि गुरुः शिष्यं परीक्षयेत् ॥
संवत्सरं तदर्द्धं वा तदर्द्धं वा तदर्द्धतः ।
उत्तमानधमे कार्ये नीचानुत्तमकर्मणि ॥
प्राणद्रव्यप्रदानाद्यैरादेशैश्च समागमैः ।
तन्मर्मसूचकैर्वाक्यैर्मायाभिः क्रूरचेष्टितैः ॥
पक्षपातैरुदासीनैरनेकैश्च मुहुर्मुहुः ।
आहृष्टः पीडितश्चापि यो विषादं न याति च ॥
गुरुः कृपां करोतीति मुदा* संवेदयेत् सदा ।
श्रीगुरुस्मरणे वाऽपि कीर्त्तने चापि वन्दने ॥
परिचर्यायामाह्वाने प्रेषणेऽन्वेषणे प्रिये ।

---

* संचिन्तयेदिति.

आनन्दकम्परोमाश्रुस्वरनेत्रादिविक्रिया ॥
येषां स्यात् ते न योग्याः स्युर्मन्त्रसिद्धिरपीश्वरि ।

( मन्त्रमुक्तावल्याम् )

तयोर्वत्सरमात्रेण ज्ञाताऽन्योन्यं भविष्यति ।
गुरुता शिष्यता वाऽपि नान्यथेति विनिश्चयः ॥

( मेरुतन्त्रे )

धनार्थिनस्तु गुरवः शिष्याः सिद्ध्यर्थिनः कलौ ।
तस्मान्न चोभयोः सिद्धिर्देवतानां विडम्बनम् ॥

( लिङ्गागमे )

शिष्यश्च सद्गुरोर्मन्त्रं गृहीत्वा तं परित्यजेत् ।
गुरुत्यागकरः शिष्यः प्रायश्चित्ती भवेद्ध्रुवम् ॥

( रुद्रयामले )

गुरुत्यागाद्भवेन्मृत्युर्मन्त्रत्यागाद्दरिद्रता ।
गुरुमन्त्रपरित्यागाद्रौरवं नरकं व्रजेत् ॥

कौलिकेन पशोर्मन्त्रग्रहणे तु तत्परित्यागोऽपि देव्यागमे उक्तः ।

यदि दैवात् पशोर्विद्या लभ्यते कुलजैर्नरैः ।
द्विजं तु कौलिकं प्राप्य पुनर्विद्यामुपालभेत् ॥
यो गृह्णाति पशोर्दीक्षां तस्याऽऽधिर्गात्रपीडनम् ।
भवत्येव न संदेहो बन्धनं चैव वा भवेत् ॥
वटपत्रे लिखित्वा च तन्मन्त्रं श्रोतसि क्षिपेत् ।
सद्गुरुं वा समाश्रित्य गृह्णीयात् संस्कृतं मनुम् ॥

( कुलार्णवे )

श्रीगुरुं लक्षणोपेतं संशयच्छेदकारकम् ।

लब्ध्वा ज्ञानप्रदं देवि न गुर्वन्तरमाश्रयेत् ॥
अनभिज्ञं गुरुं प्राप्य संशयाच्छेदकारकम् ।
शिष्यो गुर्वन्तरं गत्वा तद्दोषैर्नाऽनुलिप्यते ॥

( शैवागमे )

गुरवो बहवः सन्ति कुमन्त्रौषधवेदिनः ।
निगमाऽऽगमशास्त्रोक्तमन्त्रज्ञो दुर्लभो भुवि ॥
सुविज्ञश्चोद्धरेन्मूर्खं न मूर्खो मूर्खमुद्धरेत् ।
शिलां संतारयेन्नौर्हि किं शिलां तारयेच्छिला ॥
मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥

( वाराहीतन्त्रे )

स्वनाम्ना न गुरुः कार्यो भार्या च मातृनामिका ।

अथोक्तलक्षणलक्षितस्यापि गुरोर्विशेषमाह । ( रुद्रयामले )

वैष्णवे वैष्णवो ग्राह्यः शैवे शैवश्च शाक्तिके ।
शैवः शाक्तोऽपि सर्वत्र दीक्षास्वामी न संशयः ॥
व्युत्क्रमेण महेशानि मन्त्रसिद्धिर्भवेन्न हि ।
न पत्नीं दीक्षयेद्भर्त्ता न पिता दीक्षयेत् सुताम् ॥
न पुत्रं च तथा भ्राता भ्रातरं च न दीक्षयेत् ।

न पत्नीं दीक्षयेद्भर्तेति पशुकल्पे । वीरकल्पे तु—

वीराणां कौलिकानां च भर्त्ता दीक्षणमाचरेत् ।
भर्त्तुर्दीक्षाप्रदाने तु न दोषः कौलिकाऽऽगमे ॥
शिवेन दीक्षा पूर्वं तु गौर्यै दत्ता शुभावहा—इत्युक्तम् ।

तथा—

पितुर्मन्त्रं न गृह्णीयात् तथा मातामहादपि ।

सोदराच्च कनिष्ठाद्वा वैरिपक्षाश्रितात् तथा ॥

( गणेशविमर्षिण्याम् )

पितुर्दीक्षा यतेर्दीक्षा दीक्षा च वनवासिनः ।
विविक्ताश्रमिणो दीक्षा सा न कल्याणदायिनी ॥

( योगिनीतन्त्रे )

निर्वीर्यं हि पितुर्मन्त्रं तथा मातामहस्य च ।
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥
प्रमादाद्वा तथाऽज्ञानात् पितृदीक्षां यदाऽऽचरेत् ।
प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत् ॥

अत्र पितुरित्यनादरे षष्ठी तेन पित्रादिष्वभक्तिरूपोऽनादरोऽतिपरिचयादिन यदि भवति तदा पुत्रादिना मन्त्रो न ग्राह्य इत्यर्थः । इति सुधार्णवकृतः ।

मत्स्यसूक्ते तु—

निर्वीर्यं हि पितुर्मन्त्रं शैवे शाक्ते न दुष्यति—इत्युक्तम् ।

( ताराकल्पे )

कथमपि मनुमेतं प्राप्य शिष्याय कस्मै
निजकुलतिलकाय ज्येष्ठपुत्राय दद्यात्—इदं ताराविषयकम् ।

श्रीविद्याविषयेऽपि न पितृदीक्षानिषेधः । तदुक्तम् ( श्रीक्रमे )

मनुर्विमृश्य दातव्यो ज्येष्ठपुत्राय धीमते ।

स्वीयमन्त्रग्रहणे तु गुरुविचारो न कर्त्तव्यः ।

स्वीयमन्त्रोपदेशे तु न कुर्याद्गुरुचिन्तनम् ।

इति भैरवतन्त्रवचनात् ।

तथा च—

ब्रह्मणा कथितं पूर्वं वशिष्ठाय महात्मने ।
वासिष्ठोऽपि स्वपुत्राय मत्पित्रे दत्तवान् स्वयम् ॥

प्रसन्नहृदयः स्वच्छः पिता मे करुणानिधिः ।
कुरुक्षेत्रे महातीर्थे सूर्यपर्वणि दत्तवान् ॥

इति विष्णुमन्त्रमधिकृत्य वैशम्पायनसंहितायां शौनकं प्रति व्यासवाक्यात्सिद्ध-मन्त्रेऽपि न पितृदीक्षानिषेधः ।

स तूपदेश्यः पुत्रश्च व्यत्ययी च सुतस्तथा ।

इति नारायणीयवचनादभक्तस्यैव पुत्रस्य पितृदीक्षानिषेधः । इति संप्रदायः । व्यत्ययी मन्त्रान्तरं दत्वा मन्त्रान्तरग्राहकः ।

( योगिनीतन्त्रे )

स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाऽष्टगुणा स्मृता ।
साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया ॥
सर्वमन्त्रार्थतत्त्वज्ञा सुशीला पूजने रता ।
गुरुयोग्या भवेत् सा हि विधवा परिवर्जिता ॥

( वैशम्पायनसंहितायाम् )

स्वप्नलब्धं स्त्रिया दत्तं संस्कारेणैव सिद्ध्यति ।

संस्कारश्च तत्रैव—

स्वप्नलब्धे च कलशे गुरोः प्राणान् निवेशयेत् ।
वटपत्रे कुङ्कुमेन लिखित्वा ग्रहणं कृतम् ॥
ततः सिद्धिमवाप्नोति विफलं त्वन्यथा भवेत् ।

सिद्धमन्त्रग्रहणे तु न कश्चिद्विचारः । तदुक्तं ( शक्तियामले )

सिद्धमन्त्रो यदि भवेत् तदा पत्नीं सुदीक्षयेत् ।
शक्तित्वेन वरारोहे न च सा पुत्रिका भवेत् ॥
पिता तथाविधः पुत्र्यै तथा दीक्षां समाचरेत् ।
भ्राता सिद्धमनुर्भूयात् गुरुर्भ्रातुस्तु शक्तितः ॥
सिद्धमन्त्रो नरः सर्वमयोग्यं योग्यतां नयेत् ।

( महाकपिलपञ्चरात्रे )

न मन्त्रे चाधिकारोऽस्ति शूद्राणां नियमः परः ।
मन्त्राभावादमन्त्रेण भाषितं सर्वकर्म हि ॥

( सातातपसंहितायाम् )

यावन्त्यक्षराणि मन्त्राणां स्त्रीशूद्रादेः प्रदापयेत् ।
तावत्यो ब्रह्महत्याः स्युः स्वयमाह प्रजापतिः ॥

इति वैदिकाविमंन्त्रपरम् ॥

( भविष्योत्तरे )

ब्राह्मणा क्षत्रिया वैश्याः शूद्रा ये शुचयोऽमलाः ।
तेषां मन्त्राः प्रदेया वै न तु संकीर्णवर्णिनाम् ॥

( देवीयामले )

स्वाहाप्रणवसंयुक्तं मन्त्रं शूद्रे दददू द्विजः ।
शूद्रो निरयगामी स्याद्विप्रः शूद्रत्वमाप्नुयात् ॥

( ब्रह्मपुराणे )

वैदिको मिश्रितो वाऽपि विप्रादीनां विधीयते ।
तान्त्रिको विप्रभक्तस्य शूद्रस्यापि प्रकीर्तितः ॥

( भागवते ११ स्कन्धे )

वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्च्चयेत् ॥

( साम्बपुराणे )

श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः ।
क्रमेण श्रुतिसिद्ध्यर्थं ब्राह्मणस्तं समाश्रयेत् ॥
पञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् ।
वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान् ॥

( आचारकुसुमावल्याम् )

ब्रह्मवीर्यसमुत्पन्नो ब्राह्मणीगर्भसंभवः ।

वेदोक्ताशेषसंस्कारसंस्कृतः सर्वदा शुचिः ॥
अधीतवेदवेदाङ्गो वेदान्तार्थविचक्षणः ।
त्रिकालविहितस्नानसंध्योपासनतर्पणः ॥
नित्यं सहस्रगायत्रीजापको वैश्वदेवकृत् ।
अग्निहोत्री सावधानो दैवे पैत्रे च कर्मणि ॥
स्वकर्मच्युतिभीतश्च भीतः कालव्यतिक्रमात् ।
प्रायश्चित्तेष्वभीतश्च सदाचारेषु सादरः ॥
गर्हिताऽऽचारविमुखः शान्तो दान्तः प्रसन्नधीः ।
इत्यादिलक्षणोपेतः कथितो वैदिको बुधैः ॥
एतदन्यब्राह्मणा ये वेदभ्रष्टाश्च ते मताः ।
वेदभ्रष्टद्विजातीनां मिश्रोऽध्वा सिद्धिदः कलौ ॥
वेदोक्त एव मार्गः स्याद्वैदिकस्य द्विजस्य च ।
परित्यक्तश्रौतमार्गः पतितः कथ्यते द्विजः ॥

( नारदपञ्चरात्रे )

स्त्रीशूद्रेभ्यो मनुं दद्यात् स्वाहाप्रणववर्जितम् ।

( कुलार्णवे )

स्त्रीशूद्राणामयं मन्त्रो नमोऽन्तश्च सुखावहः ।
एतज्ज्ञात्वा महेशानि चाण्डालानपि दीक्षयेत् ॥

( याज्ञवल्क्यसंहितायाम )

न वैदिकं जपेच्छूद्रः स्त्रियश्चैव कदा च न ।
नमोऽन्तं शैवमन्त्रं वा वैष्णवं चेष्यते बुधैः ॥

( मेरुतन्त्रे )

मोहाद्वा कामतः शूद्रः पुराणं संहितां स्मृतिम् ।
पठन्नरकमाप्नोति पितृभिः सह पापकृत् ॥

यः शूद्रो बुद्धिपूर्वं तु श‍ृणुयाच्छ्रावयेद्द्विजः ।
वेदं तौ दुःखितौ स्तोऽस्मिन् भवेऽन्यत्र तु नारकौ ॥
अधिकारमदायस्तु धनस्य मदतोऽपि वा ।
शूद्रस्तु श‍ृणुयाद्वेदं स निर्वंशश्च निर्धनः ॥
अज्ञानाच्चेच्छ्रुतो वेदः श्रावितो वा द्विजन्मना ।
प्राजापत्यत्रयं कृत्वा तौ द्वौ शुद्धौ भविष्यतः ॥

भूतशुद्धितन्त्रोक्तानि तन्त्रचिन्तामणिलिखितवचनानि ।

प्रणवोच्चारणाद्धोमाच्छालग्रामशिलार्चनात् ।
ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेत् ॥
शूद्रस्य प्रणवोच्चारं पुराणसंमतं प्रिये ।
तस्माद्यत्नेन कर्त्तव्यं तन्त्रोक्तं शूद्रजातिना ॥
महाविद्याप्रभावेण शूद्रो वैश्यत्वमाप्नुयात् ।
प्रणवाद्यं महेशानि गृह्णीयुः शूद्रजातयः ॥
एतद्दीक्षापरं तत्त्वं सुगोप्यं परमेश्वरि ।

(रुद्रयामले )

प्रवृत्ते भैरवीतन्त्रे सर्वे वर्णा द्विजातयः ।
निवृत्ते भैरबीतन्त्रे सर्वे वर्णाः पृथक् पृथक् ॥

अत्र द्विजातय इति वर्णद्वयजाताः । कुण्डादय इति नागोजिभट्टाः ।

( सौत्रामणितन्त्रे )

मायाबीजं ब्राह्मणः स्याच्छ्रीबीजं क्षत्रियः स्मृतः ।
कामबीजं भवेद्वैश्यो वाग्भवं शूद्र ईरितः ॥
चतुर्बीजपरित्यक्तो मन्त्रः पौलस्त्यसंज्ञकः ।
चतुर्बीजं ब्राह्मणानां क्षत्रियाणां त्रिबीजकम् ॥
बीजद्वयं तु वैश्यानां शूद्राणां त्वेकबीजकम् ।

(ब्रह्मपुराणे)

ॐकारादिसमायुक्तं नमस्कारान्तमीरितम्।
स्वनाम सर्वसत्त्वानां मन्त्र इत्यभिधीयते॥

(यामले)

स्वताराराशिकोष्ठानामनुकूलान् भजेन्मनून्।
शिष्यानुकूलं चक्रेभ्यो ज्ञात्वा दद्यान्मनुं गुरुः॥

अथ चक्रविचारः। तदुक्तम् (भुवनेश्वरीतन्त्रे)

ताराशुद्धिर्वैष्णवानां कोशशुद्धिः शिवस्य च।
राशिशुद्धिस्त्रैपुरे च गोपालेऽकडमः स्मृतः॥
अकडमो वामनस्य गणेशे दन्तचक्रकम्।
दन्तचक्रं वराहस्य महालक्ष्म्याः कुलाकुले॥
नामादिचक्रे सर्वेषां भूतचक्रे तथैव च।
दोषान् संशोध्य गृह्णीयाद् गुरुवाक्येन जल्पकः॥

(वाराहसंहितायाम्)

ताराचक्रं राशिचक्रं नामचक्रं तथैव च।
अत्र चेत् सगुणो मन्त्रो नान्यचक्रं विचारयेत्॥
अथ वक्ष्ये विचारोऽयं चक्राणां सिद्धिहेतवे।
ततस्तु प्रथमं वक्ष्ये स्वकुलाकुलचक्रकम्॥
कारणात् पञ्चभूतानामुद्भूता मातृका यतः।
अतो भूतात्मका वर्णाः पञ्चपञ्चविभागतः॥
वाय्वग्निभूजलाऽऽकाशाः पञ्चाशल्लिपयः क्रमात्।
पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः संधिसंभवाः॥
पञ्चशः कादयः षक्षलसहान्ताः समीरिताः।

पञ्चपञ्चेति दशवर्णा इत्यर्थः। वाय्वग्निभूजलाकाशा इति। अआएकचटतपयषा मारुताः। इईऐखछठथफरक्षा आग्नेयाः। उऊओगजडदबलला: भौमाः।

ऋॠऔघफठधभषसा जलीयाः* । लृॡअंङञणनमशहा नाभसाः । पञ्चह्रस्वा इति अइउऋऌ । पञ्चदीर्घा इति आईऊॠॡ । बिन्द्वन्ता इति बिन्दुरन्ते यस्य तेन अं इत्यर्थः । संधिसंभवा इति एऐओऔ ।

स्वनामाद्यक्षराणां तु मित्रं वा स्वकुलं वरम् ।

तद्यथा—

साधकस्याक्षरं पूर्वं मन्त्रस्यापि तथाऽक्षरम् ।
यद्येकभूतदैवत्यं जानीयात् स्वकुलं हि तत् ॥

मित्रमिति परस्परमैत्रम् । तदुक्तम् ( दीपिकायाम् )

पार्थिवं वारुणं मैत्रमाग्नेयस्यापि मारुतम् ।
पार्थिवानामक्षराणां शत्रुत्वे मारुतं स्थितम् ॥
आग्नेयस्याम्भसं शत्रुरम्भसस्तैजसं स्मृतम् ।
एतेषामेव सर्वेषामविरोधि तु नाभसम् ॥
परस्परविरुद्धानां न कुर्यान्मेलनं सुधीः ।
उक्तं कुलाकुलं चक्रं समस्तपुरुषार्थकम् ॥

| वायुः | अग्निः | भूः | जलम् | आकाशः |
|---|---|---|---|---|
| अ | इ | उ | ऋ | ऌ |
| आ | ई | ऊ | ॠ | ॡ |
| ए | ऐ | ओ | औ | अं |
| क | ख | ग | घ | ङ |
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |
| य | र | ल | व | श |
| ष | क्ष | ल | स | ह |

इति कुलाकुलचक्रम्† ।

---

* वारुणा इति २ पु. पा. ।
† अन्यत्रमेलनप्रकारो मन्त्रमहोदधौ विशेषतोऽभिहितः ।

वक्ष्ये अकथहं चक्रं प्रागूलिखेच्चतुरस्त्रकम् ।
मध्ये रेखाद्वयं दद्यात् प्रागग्रमुदगग्रगम् ॥
चतुरस्त्रं भवेत् तत्र चतुष्कोष्ठसमन्वितम् ।
पूर्वापराऽऽयतं दद्यान्मध्ये रेखाद्वयं ततः ॥
उदगूदक्षिणदीर्घं च दद्याद्रेखाद्वयं ततः ।
ततः षोडशकोष्ठाढ्यं जायते चक्रमुत्तमम् ॥
आदिक्षान्ताँल्लिखेद्वर्णान् क्रमेणानेन मन्त्रवित् ।
इन्द्व[१]ग्नि[३]रुद्र[११]नव[९]नेत्र[२]युगा[४]ऽर्क[१२]दिक्षु[१०]
ऋत्व[६]ष्ट[८]षोडश[१६]चतुर्दश[१४]भौतिकेषु[५] ।
पाताल[७]पञ्चदश[१५]वह्निहिमांशु[१३]कोष्ठे
वर्णाँल्लिखेल्लिपिभवान् क्रमशस्तु धीमान् ॥
आदौ चतुश्चतुष्कोष्ठे सिद्धादीन् परिकल्पयेत् ।
प्रदक्षिणक्रमादेवं स्वनामाक्षरमाद्यतः ॥
सिद्धसाध्यसुसिद्धारिक्रमेण गणयेद्बुधः ।
सिद्धादीन् सिद्धिदः सिद्धो जपात् साध्यो हुतादिभिः ॥
सुसिद्धः प्राप्तिमात्रेण साधकं भक्षयेदरिः ।
सिद्धाणां बान्धवा ज्ञेया साध्यास्ते सेवका मताः ॥
सुसिद्धाः पोषकाश्चैवं शत्रवो घातकाः स्मृताः ।

( पिङ्गलामते )

सिद्धः सिद्ध्यति कालेन साध्यस्तु जपहोमतः ।
सुसिद्धो ग्रहणादेव शत्रुर्मूलानि कृन्तति ॥

( मेरुतन्त्रे )

आदौ ज्ञेयं चतुष्केषु सिद्धाद्यं विदिशासु च ।

तत्स्थानसमकोष्ठात् तु पुनर्गणयं गुरूक्तितः ॥

( पिङ्गलामते )

सिद्धादीन् शोधयेन्मन्त्री पुनः सिद्धादिभिः स्मृतः ।
सिद्धसिद्धो जपात् सिद्धिर्द्विगुणात् सिद्धसाध्यकः ॥
सिद्धः सुसिद्धोऽर्धजपात् सिद्धारिर्हन्ति बान्धवान् ।
साध्यसिद्धो द्विगुणकः साध्यसाध्यो निरर्थकः ॥
साध्यसुसिद्धोऽर्धजपात् साध्यारिर्हन्ति गोत्रजान् ।
सुसिद्धसिद्धोऽर्धजपात् फलं दद्याद्यथेप्सितम् ॥
सुसिद्धसाध्यं सततं जपात् सिद्धिर्न चान्यथा ।
सुसिद्धसिद्धो यो मन्त्रः पूर्वजन्मकृतश्रमः ॥
तस्मात् तं सर्वसिद्धीनां साधने योजयेन्मनुम् ।
सुसिद्धारिर्विशेषेण स्वकुलं नाशयेद्ध्रुवम् ॥
अरिसिद्धः सुतं हन्ति अरिसाध्यस्तु कन्यकाम् ।
पत्नीमपि सुसिद्धस्तु अर्यरिर्मूलघातकः ॥

| | | | |
|---|---|---|---|
| अकथह<br>१ | उङप<br>२ | आखदक्ष<br>३ | ऊचफ<br>४ |
| ओडव<br>५ | ऌभम<br>६ | औढश<br>७ | ॡअय<br>८ |
| ईघन<br>९ | ऋजभ<br>१० | इगध<br>११ | ॠछब<br>१२ |
| अः तस<br>१३ | ऐठल<br>१४ | अंणष<br>१५ | एटर<br>१६ |

इत्यकथहचक्रम् ।

अथ ऋणिधनिचक्रम्। तत्र मन्त्राणां साधकानां ऋणित्वे धनित्वे च हेतुमाह (तन्त्रराजे)

पूर्वजन्मकृताभ्यासात् पापादस्याफलाप्तिकृत्।
पापे नष्टे फलावाप्तिः काले देहक्षयादृणी॥
मन्त्रसंप्राप्तिमात्रेण प्राक् पूतः सिद्धये भवेत्।
सिद्धमन्त्रान् गुरोर्लब्ध्वा मन्त्री यत्सिद्धिभाङ्नरः॥
लक्ष्मीवान् स सदा पूज्यो मन्त्रभोगमवाप्नुयात्।
स मन्त्रोऽस्य ऋणी ज्ञेयो भजनं तस्य पूर्वगम्॥
तस्मादृणविशुद्धिस्तु कार्या सर्वैस्तु सर्वतः॥

तदुक्तम् (सुन्दरीरहस्यवृत्तौ)

पूर्वाऽपरायतं लेख्यं रेखाद्वादशकं क्रमात्।
क्रमेणैवात्र जायन्ते कोष्ठा एकादश क्रमात्॥

तेषु वर्णाँल्लिखेन्मन्त्री स्वरादिक्रमयोगतः।
द्वौ द्वौ स्वरौ पञ्चसु कोष्ठकेषु
शेषान् स्वरान् षट्सु षडेकमेकम्।
कादीन् हशेषान् विलिखेत् ततोऽर्णा-
नेकैकमेकादशमात्रकेषु॥

साध्याङ्कान् विलिखेदूर्ध्वे साधकाङ्कानधो लिखेत्।
इन्द्र[14]र्क्ष[27]नेत्र[2]रवि[12]पञ्चदश[15]र्तु[6]वेद[4]—
वन्ह्या[3]युधा[5]ष्ट[8]नव[9]भिर्गुणिताँश्च साध्यान्।
दि[10]ग्भू[1]मुनि[7]श्रुति[4]गजा[8]ग्नि[3]मुनी[7]षु[5]वेद[4]-
ष[6]ड्वह्नि[3]भिश्च गुणितानथ साधकार्णान्।

साध्याङ्कान् साधकाङ्कांश्च पूरयेद्गृहसंख्यया ॥
नामाक्षरादकथहाद्गजभक्तशेषं
ज्ञात्वोभयोरधिकशेषमृणं धनं स्यात् ।
मन्त्रो यद्यधिकाङ्कः स्यात् तदा मन्त्रं जपेत् सुधीः ।
समेऽपि च जपेन्मन्त्री न जपेत् तदृणाधिके ॥

( मेरुतन्त्रे )

ऋणी तु साधको ज्ञेयः साधकाङ्को यदाऽधिकः ।
यावत् स्यादधिकस्तावत्संख्याकानि यदाऽऽचरेत् ॥
पुरश्चरणसंज्ञानि तदाऽस्य समता भवेत् ।
पुरश्चर्यां पुनः कृत्वा तदा स्यात् कार्यसाधकः ॥

( सुन्दरीरहस्यवृत्तौ )

गुणिते तु कृतेऽङ्कानां यच्छेषं जायते स्फुटम् ।
तदङ्कं कथयाम्यत्र एकादशगृहस्थितम् ॥

षट्[६]काल[६]काल[६]विय[०]दग्नि[३]समुद्र[४]वेद[४]-
खा[०]ऽकाश[०]शून्य[०]दहाना[३]: खलु साध्यवर्णाः ।
युग्म[२]द्वि[२]पञ्च[५]वियद[०]म्बर[०]युक्[२]शशाङ्क[१]-
व्योमा[०]ऽब्धि[४] वेद[४] शशिन[१]: खलु साधकार्णाः ॥

नामाक्षरादकथहाद्गजभक्तशेषं
ज्ञात्वोभयोरधिकशेषमृणं धनं स्यात् ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|---|---|---|---|---|---|
| ६ | ६ | ६ | ० | ३ | ४ | ४ | ० | ० | ० | ३ |
| १४ | २७ | २ | १२ | १५ | ६ | ४ | ३ | ८ | ८ | ६ |
| अआ | इई | उऊ | ऋॠ | ऌॡ | ए | ऐ | ओ | औ | अं | अः |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | ष | स | ह |
| १० | १ | ७ | ४ | ८ | ३ | ७ | ५ | ४ | ६ | ३ |
| २ | २ | ५ | ० | ० | २ | १ | ० | ४ | ४ | १ |

इति ऋणिधनिचक्रम् ।

अथ वर्गचक्रम् । तदुक्तम् ( तन्त्रराजे )

मन्त्राणामरिशोधार्थं नामाद्यक्षरपूर्वकम् ।
अष्टौ कोष्ठान् समालिख्य वर्गानष्टौ लिखेत् ततः ॥
पक्षिमार्जारपञ्चास्यश्वानः सर्पाखुदन्तिनः ।
मेषः क्रमादकारादिवसुवर्गयुता इमे ॥
पक्षिमार्जारयोर्वैरं वैरं मार्जारपक्षिणोः ।
वैरं पक्षिभुजङ्गानां शात्रवं गजसिंहयोः ॥
मेषकुक्कुरयोर्वैरं प्रीतिं युक्त्या विचारयेत् ।
भुजङ्गसिंहयोर्मैत्री मेषमूषकयोस्तथा ॥
लोकादन्यच्च विज्ञेयं व्यवहारप्रयोगतः ।
एवं यन्त्रवरं ज्ञात्वा गृह्णीयान्मन्त्रमुत्तमम् ॥

तदुक्तम् ( वाराहीतन्त्रे )

मार्जारकुक्कुरव्यालैः पक्षिणां वैरिता भवेत् ।

मार्जारस्य शुनाखुभ्यां सिंहस्य दन्तिना सदा ॥
कुक्कुरस्य खगोतुभ्यां खगाऽऽखुभ्यां च भोगिनः ।
उन्दुरस्योतुसर्पाभ्यां हरिणा सह दन्तिनः ॥
गरुत्मत्सर्पयोर्वैरं तथा च गजसिंहयोः ।

| | | | |
|---|---|---|---|
| अ १६ पक्षी | क ५ मार्जारः | च ५ सिंहः | ट ५ श्वा |
| त ५ नागः | प ५ आखुः | य ५ गजः | श ४ मेषः |

इति वर्गचक्रम् ।

अथ राशिचक्रं तत्रैव—

सूत्रद्वयं पूर्वपरायतं त-
न्मध्ये द्वयं याम्यकुबेरभेदात् ।
एकैकमीशाननिशाचरे तु
हुताशवाय्वोर्विलिखेत् ततोऽर्णान् ॥
वेदा[४]ऽग्नि[३]वह्नि[३]युगल[२]श्रवणा[२]क्षि[२]संख्यान्
पञ्चे[५]षु[५]बाण[५]शर[५]पञ्च[५]चतुष्टया[४]न्तान् ।
मेषादितः प्रतिलिखेत् सकलाँस्तु वर्णान्
कन्यागतान् प्रविलिखेदथ शाद्यवर्णान् ॥

( वाराहीतन्त्रे )

वेदा[४]ग्नि[३]वह्नि[३]*युगल[२]श्रवण[२] द्वि[२]बाण[५]-
बाणे[५]षु[५]बाणे[५]षु[५]पयोधि[४]संख्यान् ।
मेषादिकोष्ठेष्वभिलिख्य वर्णान्
षडेव शादीन् युवतौ लिखित्वा ॥

* युगलश्रवणे स्वत्रद्विकरेति छन्दोऽभिमतः पाठः ।

यदाहुराचार्याः।

चतुर्भिर्यादिभिः सार्धं स्यात् क्षकारस्तु मीनगः। इति ॥

एको वाऽप्यथ पञ्चमोऽथ नवमो राशेः स्वकाद्बान्धवो
· राशेः स्याद्दशमो द्वितीयसहितः षष्ठो भवेत् सेवकः।
रुद्राऽग्निस्वरसंख्यया निगदितो मन्त्रः स्वयं पोषकः
स्याच्चेदष्टमवत्सरश्रुतिमितो मन्त्रः स्वयं घातकः ॥

लग्नो [1]धनं [2]भ्रातृ[3]शत्रु[4]पुत्र[5]मित्र[6]कलत्रका[7]ः।
मरणं[8]धर्म[9]कर्मा[10]ऽऽय[11]व्यया[12] द्वादश राशयः ॥

अत्र राशिचक्रे चतुर्थस्थानं शत्रुर्न तु बन्धुः। एवं षष्ठस्थानं बन्धुर्न च शत्रु-रिति केचित्।

अन्यच्च।

जप्तुः स्वराशितो वर्ज्याः षष्ठाऽष्टरविगाः शुभाः।
एकद्वित्रिचतुष्पञ्चसप्ताऽङ्कदशरुद्रगाः ॥
लग्नो धनं भ्रातृबन्धुपुत्रशत्रुकलत्रकाः।
मरणं धर्मकर्माऽऽयव्यया द्वादश राशयः ॥
नामानुरूपमेतेषां शुभाऽशुभफलं दिशेत्।
स्वराशेर्मन्त्र*पर्यन्तं गणनीयं विचक्षणैः ॥
राशीनां शुद्धता ज्ञेया त्यजेच्छत्रुमृती व्ययम्।

तस्यायमुपदेशः।

पूर्वपश्चिमायतं रेखाद्वयम्। दक्षिणोत्तरायतं रेखाद्वयम्। ईशानराक्षसकोणयो रेखाद्वयम्, । अग्निवायव्यकोणयो रेखाद्वयम्, । एवं रेखाष्टकम्। तत्कोष्ठेषु प-ञ्चाशद्वर्णान् मेषादितो वक्ष्यमाणक्रमेण लिखेत्।

तद्यथा।

अ.आ.इ.ई. मेषे। उ.ऊ.ऋ. वृषे। ॠ.ऌ.ॡ. मिथुने। ए.ऐ. कर्कटे। ओ.औ. सिंहे। अं.अः श.ष.स.ह. कन्यायाम्। क.ख.ग.घ.ङ. तुलायाम्। च.छ.ज.झ.ञ. वृश्चिके। ट.ठ.ड.ढ.ण. धनुषि। त.थ.द.ध.न. मकरे। प.फ.ब.भ.म. कुम्भे। य.र.ल.व.ळ.क्ष. मीने।

* मन्त्रराश्यन्तमिति २. पु. पा.

| | | |
|---|---|---|
| उ ऊ ऋ २ / ॠ ऌ ॡ ३ | अ आ इ ई १ | य र ल व क्ष १२ / प फ ब भ म ११ |
| ए ऐ ४ | | त थ द ध न १० |
| ओ औ ५ / ६ अं अः श ष स ह | क ख ग घ ङ ७ | ट ठ ड ढ ण ९ / च छ ज झ ञ ८ |

इति राशिचक्रम् ।

अथ नक्षत्रचक्रं तत्रैव ।

पूर्वापरायता रेखा दश देयाः प्रयत्नतः ।
उदग्दक्षिणदीर्घा च देया रेखाचतुष्टयी ॥
नवत्रितयसंयुक्ता कोष्ठानां सप्तविंशतिः ।
जायते च तथा कुर्याल्लिखेद्वर्णाँस्तु तेषु च ॥
पक्षैकैत्र्यब्धिरूपावनिभुजशशियुग्युग्मभूयुग्मपक्षा
युग्मैकाद्वीत्रिरूपत्र्यवनिशशिशशिद्व्येकपक्षाग्निवेदाः ।
अश्विन्यादिक्रमेणाऽक्षरमिह गदितं शेषभे विन्दुसर्गौ
जप्तुर्नक्षत्रभूतादथ परिगणयेज्जन्मसंपत्क्रमेण ॥
जन्म संपद्विपत् क्षेमः प्रत्यरिः साधको वधः ।
मैत्राऽतिमैत्रताराः स्युस्त्रिरावृत्त्या नवैव हि ॥
गणयेत् तत्क्रमादेव फलं नामानुरूपतः ।
जन्मर्क्षे च भवेद्धानिः संपत्तिः स्याच्च संपदि ॥

विपत्तारे विपत्तिः स्यात् क्षेमे मङ्गलमादिशेत् ।
प्रत्यरौ शत्रुवृद्धिः स्यात् साधके सिद्धिसाधनी ॥
बधर्क्षेषु बधो ज्ञेयो मित्रर्क्षे मित्रवर्द्धनम् ।
अतिमित्रे भवेत् सौख्यं ताराचक्रमिति स्मृतम् ॥
विपद्बधः प्रत्यरिश्च परित्याज्यो मनीषिभिः ।

राश्यज्ञाने ।

निजनामादिकं वर्णमादाय पुरतः प्रिये ।
मन्त्राद्यक्षरपर्यन्तं गणनीयाश्च सूरिभिः ॥

इत्यविज्ञातराश्यादिविषयम् ।
तथा च ।

प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो बुधः ।
प्रणष्टजन्मभं यस्य तस्य नामर्क्षतो बुधः ॥

पिङ्गलामते ।

प्रायं[२]सोमं [१]गुणं[३]वेद[४]रूपं[१]रूपं[१]यमं[२]शशि[१] ।
प्रायं[२]प्रायं[२]तथाचन्द्रं[१]त्रिप्रायम्* सोम[१]युग्मकम्[२] ॥
गुणै[३]क[१]त्रि[३]गुणंसोमं† यमाख्यं सोम[१]यु[२]ग्गुणम्[३] ।
वेदं[४] चेति न्यसेदङ्काँस्तत्संख्यां च न्यसेल्लिपिम् ॥
रसा[६]ष्ट[८]नव[९]भद्राणि युग्मयुग्मप्रभेदतः ।
इतराणि न भद्राणि ज्ञातव्यं मन्त्रकोविदैः ॥
आरभ्य जन्मनक्षत्रं मन्त्रताराऽवसानिकम् ।

---

* त्रिप्रायमित्यनेन त्रिवारं द्वावतः २. २. २. ।
† गुणं सोममित्यनेन त्रिवारमेकं तेन १. १. १. ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अ आ<br>अश्विनी<br>देवः | इ<br>भरणी<br>मनुष्यः | ई उ ऊ<br>कृत्तिका<br>राक्षसः | ऋ ॠ लृ ॡ<br>रोहिणी<br>मनुष्यः | ए<br>मृगशिराः<br>देवः | ऐ<br>आर्द्रा<br>मनुष्यः | ओ औ<br>पुनर्वसुः<br>देवः | क<br>पुष्यः<br>देवः | ख ग<br>आश्लेषा<br>राक्षसः |
| घ ङ<br>मघा<br>राक्षसः | च<br>पूर्वफा०<br>मनुष्यः | छ ज<br>उत्तरफा०<br>मनुष्यः | झ ञ<br>हस्तः<br>देवः | ट ठ<br>चित्रा<br>राक्षसः | ड<br>स्वाती<br>देवः | ढ ण<br>विशाखा<br>राक्षसः | त थ द<br>अनुराधा<br>देवः | ध<br>ज्येष्ठा<br>राक्षसः |
| न प फ<br>मूलम्<br>राक्षसः | ब<br>पूर्वाषा०<br>मनुष्यः | भ<br>उत्तराषा०<br>मनुष्यः | म<br>श्रवणा<br>देवः | य र<br>धनिष्ठा<br>राक्षसः | ल<br>शतभिषा<br>राक्षसः | व श<br>पूर्वभाद्रः<br>मनुष्यः | ष स ह<br>उत्तरभाद्रः<br>मनुष्यः | ळ क्ष अं अः<br>रेवती<br>देवः |

इति नक्षत्रचक्रम् ।

अथ गणचक्रम् ( तत्रैव )

पूर्वोत्तरत्रयं पश्चाद्भरण्यार्द्राऽथ रोहिणी ।
इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥

ज्येष्ठाशतभिषामूलधनिष्ठाऽऽश्लेषकृत्तिकाः।
चित्रामघाविशाखाः स्युस्तारा राक्षसदैवताः॥
अश्विनीरेवतीपुष्यस्वातीहस्ताः पुनर्वसुः।
अनुराधामृगशिरःश्रवणा देवतारकाः॥

अन्यच्च ज्योतिःशास्त्रे।

दे-मा-रा-मा-दे-मा-दे-दे-रा-रा-मा-म-दे-रा-द-रा-।
दे-रा-रा-म-म-दे-रा-रा- मा-मा-दे- गणभानि च।

तदुक्तम् ( दीपिकायाम् )

हस्तस्वातिमृगाऽश्विनीहरिगुरुः पौष्णाऽनुराधाऽदिति-
राद्रीरोहिणिकोत्तराणि भरणी पूर्वाणि भानि त्रयम्।
ज्येष्ठाऽऽश्लेषविशाखमूलवरुणा वस्वग्निचित्रामघाः
कथ्यन्ते मुनिभिर्यथाक्रममिमे देवा नरा राक्षसाः॥

इति गणचक्रम्*।

अथाकडमचक्रं तत्रैव।

चक्रं वक्ष्येऽकडमाख्यं प्रसिद्धं सर्वसिद्धिदम्।
मन्त्राणां ग्रहणे मन्त्री सर्वथा तं विचारयेत्॥
राशिचक्रं लिखेन्मन्त्री वर्णान् क्लीबविवर्जितान्।
अकारादिक्षकारान्तान् विलिखेत् क्रमतः सुधीः॥
आदिकोष्ठे यथा वर्णा जायन्तेऽकडमाः क्रमात्।
विलिख्य गणयेज्जप्तुर्नामाद्यक्षरपूर्वकम्॥
सिद्धसाध्यसुसिद्धारिक्रमेणैव पुनः पुनः।

अन्यच्च।

अकारादिक्षकारान्तं दक्षपार्श्वक्रमेण तु।
मेषादितोऽभिमीनान्तं गणयेत् क्रमतः सुधीः॥

---

* एतदर्थं नक्षत्रचक्रं विलोक्यम्।

जप्तुः स्वनामतो मन्त्री यावन्मन्त्राद्यमक्षरम् ।
सिद्धसाध्यसुसिद्धारिक्रमेणैव पुनः पुनः ॥
सिद्धः सिद्ध्यति कालेन साध्यः सिद्ध्यति वा न वा ।
सुसिद्धो ग्रहणादेव रिपुर्मूलं निकृन्तति ॥

| | | |
|---|---|---|
| अःठ मक्षः<br>अं टबक्ष | अकडम | आख ढय<br>इग णर |
| औझफल | | ईघतल |
| ओझ पह<br>ऐ जनस | पछधष | उङ थव<br>ऊ चदश |

इत्यकडमचक्रम् ।

अथोदितचक्रम् । तदुक्तम् ( सुन्दरीरहस्यवृत्तौ )

उदिताख्यं महाचक्रं कथयामि समासतः ।
षट्कोणं विलिखेच्चक्रं समरेखं मनोहरम् ॥
पूर्वादि विलिखेद्वर्णानादिक्षान्तान् यथाक्रमम् ।
उदिते सम्पदुद्दिष्टा द्वितीये संपदां क्षयः ॥
तृतीये च धृतिं विद्याच्चतुर्थे बन्धुविप्लवः ।
पञ्चमे संशयात्मा स्यात् षष्ठे सर्वविनाशकः ॥
नामाऽऽद्यक्षरमारभ्य यावन्मन्त्राद्यदर्शनम् ।




इत्युदितचक्रम् ।

अथ षट्पदमातृकाचक्रम् । ( मेरुतन्त्रे )

यस्तु बीजात्मको मन्त्रस्तत्र षट्पदमातृका ।
विज्ञेयं तत्र पद्मं तु रचयेत् षट्दलं शुभम् ॥
तत्र न्यसेन्मातृकाऽर्णान् कूटषण्ढविवर्जितान् ।
स्वनामाद्यक्षरं यत्र तदारभ्य विचारयेत् ॥
सम्पद्दारिद्र्यधैर्याणि बन्धुविग्रहसंशयाः ।
सर्वनाशक्रमादेतन्नामाद्यर्णस्य कोष्ठतः ॥

कूटं क्षकारः । षण्ढवर्णा ऋकारादयश्चत्वारः ।



इति षट्पदमातृकाचक्रम ।

( वाराहीतन्त्रे )

कोष्ठशुद्धिर्वराहे च महालक्ष्म्यां कुलाकुलम् ।
नामादिचक्रं सर्वेषां भूतचक्रं तथैव च ॥
ताराशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवे भवेत् ।
त्रैपुरे राशिशुद्धिः स्याद्गोपालेऽकडमः स्मृतः ।

अपवादमाह ( यामले )

यदि मन्त्रा न शोभन्ते विचारेण कथंचन ।
तदा निषेधमाश्रित्य गृह्णीयान्मन्त्रमुत्तमम् ॥
नृसिंहाऽर्कवराहाणां प्रासादप्रणवस्य च ।
नित्यानां हंसमन्त्राणां सिद्धादीन् नैव शोधयेत् ॥

तथा च ( कालिकापुराणे )

नृसिंहार्कवराहाणां प्रासादप्रणवस्य च ।
एकाक्षरद्व्यक्षराणां सिद्धादीन् नैव शोधयेत् ॥

( अग्निपुराणे )

हंसस्याष्टाक्षरस्यापि तथा पञ्चाक्षरस्य च ।
नपुंसकस्य मन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥

नपुंसको नमोऽन्तः ।

तदुक्तम् ( शारदायाम् )

मातृकावर्णभेदेभ्यः सर्वे मन्त्राः प्रजज्ञिरे ।
मन्त्रविद्याविभेदेन द्विविधा मन्त्रजातयः ॥
मन्त्राः पुंदेवता ज्ञेया विद्याः स्त्रीदेवताः स्मृताः ।
पुंस्त्रीनपुंसकात्मानो मन्त्राः सर्वे समीरिताः ॥
पुंमन्त्रा हूँफडन्ताः स्युर्द्वि*ठान्ताः स्युः स्त्रियो मताः ।
नपुंसका नमोऽन्ताः स्युरित्युक्ता मनवस्त्रिधा ॥

( सनत्कुमारसंहितायाम् )

सिद्धः साध्यः सुसिद्धश्च अरिश्चैव च नारद ।
गोपालेषु न बोद्धव्यः स्वप्रकाशो यतः स्वयम् ॥

( गणेशविमर्षिण्याम् )

एकाक्षरे तथा कूटे मालामन्त्रे त्रिबीजके ।
स्वप्नलब्धे स्त्रिया दत्ते सिद्धादीन्नैव शोधयेत् ॥

मालामन्त्रलक्षणं च ( नारायणीतन्त्रे )

विंशत्यर्णाधिका मन्त्रा मालामन्त्राः प्रकीर्त्तिताः ।

(देवीपुराणे )

कालिकायां च तारायां कुल्लुकायां त्रिकूटके ।
तथैकाक्षरकूटे च शिवपञ्चाक्षरेऽपि च ॥
षडक्षरे तु तस्यै†व विष्णोरष्टाक्षरेऽपि वा ।
विष्णोर्द्वादशवर्णे च राममन्त्रेऽथ तारके ॥
वैष्णवेषु च भैरव्यां सुन्दरीमन्त्रवर्यके ।
सारस्वते च बालायां सिद्धादीन्नैव शोधयेत् ॥

---

* द्विठान्ताः स्वाहान्ताः ।
† शिवस्य ।

( गौतमीये )

सर्वेषु मन्त्रवर्गेषु श्रेष्ठो वैष्णव उच्यते ।
वैष्णवेषु च सर्वेषु कृष्णमन्त्राः फलाधिकाः ॥
विशेषतो दशार्णोऽयं जपमात्रेण सिद्ध्यति ।
स्त्रिया दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणाधिका ॥
स्वप्नलब्धा च या विद्या तत्र नास्ति विचारणा ।

( योगिनीतन्त्रे )

गारुडादिषु सौरेषु वैष्णवे बौद्धजैनयोः ।
महामन्त्रेषु कूटेषु नैव सिद्धादिशोधनम् ॥
बिभ्रत्यद्भुतभूतिभूतपवचोवैचित्र्यचित्रामृत–
स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
सद्युक्तिस्फुटमौक्तिकोत्कररुचोत्तुङ्गस्तरङ्गो गतः
आद्यः श्रीनरदेवनिर्मितपुरश्चर्यार्णवे प्रस्फुरन् ॥

इति श्रीमन्महाराजाधिराजप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे षडाम्नायदेवतातदाचारादिनिर्णयपूर्वकचक्रविवेचनं नाम प्रथमस्तरङ्गः ।



# अथ दीक्षाकालनिर्णयः ।

तत्रादौ मासफलम । तदुक्तम ( यामले )

वैशाखे तु शिवा दीक्षा विपुलां श्रियमादिशेत् ।
ज्येष्ठे मृत्युप्रदा चैव आषाढे सुखसम्पदौ ॥
श्रावणे रत्नलाभः स्याद्भाद्रे दुःखप्रदा मता ।
आश्विने सर्वसिद्धिः स्यात् कार्त्तिके ज्ञानसिद्धिदा ॥
शुभकृन्मार्गशीर्षे च पौषे ज्ञानविनाशिनी ।
मेधावृद्धिकरी माघे फाल्गुने सर्ववश्यकृत् ॥
चैत्रे च पीडाजननी मलमासं विवर्जयेत् ।

( सिद्धान्तशेखरे )

शरत्काले च वैशाखे दीक्षा श्रेष्ठफलप्रदा ।
फाल्गुने मार्गशीर्षे च ज्येष्ठे दीक्षा च मध्यमा ॥
आषाढे माघमासे च कनिष्ठा सा प्रकीर्त्तिता ।
निन्दितश्चैत्रमासस्तु पौषो भाद्रपदस्तथा ॥

गोपालमन्त्रदीक्षायां तु चैत्रोऽपि प्रशस्तः । तदुक्तं गौतमेन ।

मन्त्रारम्भस्तु चैत्रे स्यात् समस्तपुरुषार्थदः ।
वैशाखे रत्नलाभः स्यात् ज्येष्ठे तु मरणं ध्रुवम् ॥
आषाढे बन्धुनाशः स्यात् पूर्णायुः श्रावणे भवेत् ।
प्रजानाशो भवेद्भाद्रे आश्विने रत्नसंचयः ॥
कार्त्तिके मन्त्रसिद्धिः स्यात् मार्गशीर्षे तथा भवेत् ।
पौषे तु शत्रुपीडा स्यान्माघे मेधाविवर्धनम् ॥
फाल्गुने सर्वकामाः स्युर्मलमासं विवर्जयेत् ।

अथ पक्षफलम् । तदुक्तम् ( रुद्रयामले )

शुक्लपक्षे शुभा दीक्षा कृष्णेऽप्यापञ्चमीदिनम् ।
क्षीणेन्दौ व्रतदीक्षां च न कुर्यान्मन्त्रवित्तमः ॥

कृष्णाष्टमीमारभ्य शुक्लचतुर्दशीं यावत् क्षीणचन्द्रः ।
अथ तिथिफलम् । तदुक्तम् ( यामले )

प्रतिपत्संस्कृता दीक्षा ज्ञाननाशकरी मता ।
द्वितीयायां भवेज्ज्ञानं तृतीयायां सुखी भवेत् ॥
चतुर्थ्यां धननाशः स्यात् पञ्चम्यां बुद्धिवर्धनम् ।
षष्ठ्यां ज्ञानक्षयं सौख्यं लभते सप्तमीदिने ॥
अष्टम्यां बुद्धिनाशः स्यान्नवम्यां वपुषः क्षयः ।
दशम्यां राजसौभाग्यमेकादश्यां शुचिर्भवेत् ॥
द्वादश्यां सर्वसिद्धिः स्यात् त्रयोदश्यां दरिद्रता ।
तिर्यग्योनिश्चतुर्दश्यां कृमिर्मासावसानके ॥
पक्षान्ते सर्वसिद्धिः स्यादस्वाध्यायं विवर्जयेत् ।
सन्ध्यागर्जननिर्घोषे भूकम्पोल्कानिपातने ॥
त्रिरात्रं वर्जयेन्मन्त्री श्रुत्युक्तानपि वर्जयेत् ।

( तत्त्वसारसंहितायाम् )

तां तां तिथिं समालोच्य तद्भक्तांस्तत्र दीक्षयेत् ।
ब्रह्मणः पूर्णमास्युक्ता द्वादशी चक्रधारिणः ॥
चतुर्दशी शिवस्योक्ता वाचः प्रोक्ता त्रयोदशी ।
द्वितीया च श्रियाः प्रोक्ता पार्वत्याश्च तृतीयका ॥
चतुर्थी गणनाथस्य भानोः प्रोक्ता च सप्तमी ।
नित्यामार्गेषु पार्वत्या अष्टमी च चतुर्दशी ॥

अथ मासान्तपक्षान्तावित्युक्तत्वान्मासान्तं संक्रान्तेर्गतदिनं पक्षान्तं पूर्णमास्यवास्ये । तदुक्तम् ( गौतमीये )

सौरमासि शुभा दीक्षा न चान्द्रे न च तारके।

इति वचनान्मासान्तं सौरमासान्तं ज्ञेयम्।

अथ वारफलम्।

रविवारे भवेद्वित्तं सोमे शान्तिर्भवेत् किल।
आयुरङ्गारके हन्ति तत्र दीक्षां विवर्जयेत्।
बुधे सौन्दर्यमाप्नोति ज्ञानं स्यात् तु बृहस्पतौ॥
शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे।

अथ नक्षत्रफलम्। तदुक्तम् (त्रिपुरार्णवे)

अश्विन्यां सुखमाप्नोति भरण्यां मरणं ध्रुवम्।
कृत्तिकायां भवेद्दुःखी रोहिण्यां वाक्पतिर्भवेत्॥
मृगशीर्षे सुखावाप्तिरार्द्रायां बन्धुनाशनम्।
पुनर्वसौ धनाढ्यः स्यात् पुष्ये शत्रुविनाशनम्॥
आश्लेषायां भवेन्मृत्युर्मघायां दुःखमोचनम्।
सौन्दर्यं पूर्वफाल्गुन्यां प्राप्नोतीति न संशयः॥
ज्ञानं चोत्तरफाल्गुन्यां हस्तायां च बली भवेत्।
चित्रायां ज्ञानसिद्धिः स्यात् स्वात्यां शत्रुविनाशनम्॥
विशाखायां भवेत् सौख्यमनुराधा च बुद्धिदा।
ज्येष्ठायां सुतहानिः स्यान्मूलायां कीर्त्तिवर्धनम्॥
पूर्वाषाढोत्तराषाढे भवेतां कीर्त्तिदायिके।
श्रवणायां भवेद्दुःखी धनिष्ठायां दरिद्रता॥
बुद्धिः शतभिषायां स्यात् पूर्वभाद्रे सुखी भवेत्।
सौख्यं चोत्तरभाद्रे स्याद्रेवत्यां कीर्त्तिवर्धनम्॥

(रत्नावल्याम)

प्रतिपत्पूर्वाषाढा च पञ्चमीकृत्तिका तथा।

पूर्वभाद्रपदा षष्ठ्यां दशमीरोहिणी तथा ॥
द्वादश्यां सार्पनक्षत्रमर्यम्णा च त्रयोदशी ।
नक्षत्रलुप्ता इत्येते देवानामपि नाशदा ॥

अथ लग्नफलम् ( राजमार्तण्डे )

गुर्वर्कभार्गवाऽशुद्धौ दीक्षा दारिद्र्यकारिणी ।
शुभेऽह्नि शुभलग्ने च दीक्षैश्वर्यप्रदायिनी ॥

( रुद्रयामले )

वृषे सिंहे च कन्यायां धनुर्मीनाख्यलग्नके ।
चन्द्रतारानुकूलेऽह्नि दद्याद्दीक्षां सदा गुरुः ॥

( मेरुतन्त्रे )

सदा दुःखं सदा हानिर्वामिनां मिथुने शुभम् ।
वामिनां यवनानां च निरुद्धं बहुधा शुभम् ॥

( स्मृतिसंहितायाम् )

स्थिर*लग्नं विष्णुमन्त्रे शिवमन्त्रे चरं† स्मृतम् ।
द्विस्वभाव‡गतं लग्नं शक्तिमन्त्रेषु शस्यते ॥

( गौतमीये सौभाग्यरत्नाकरे च )

त्रिषडायगताः पापाः सौम्याः केन्द्रत्रिकोणगाः ।
दीक्षायां तु शुभाः प्रोक्ता रन्ध्रस्थाः सर्वनाशकाः ॥
स्थिरे लग्ने शुभा दीक्षा द्विस्वभावे च मध्यमा ।
नैव कुर्याच्चरे लग्ने दीक्षां चैव शुभेच्छुभिः ॥
तृतीयैकादशः षष्ठो दशमस्थः शुभः शशी ।

अथ योगफलम् ( मेरुतन्त्रे )

विष्कम्भादिकयोगानां नामतुल्यं फलं भवेत् ।
आनन्दादिकयोगानां सर्वत्राऽविकलं फलम् ॥

---

* मे. क. तु. म एतानि चरलग्नानि । † वृ. सि. वृ. कु एतानि स्थिरलग्नानि
‡ मि. क. ध. मी एतानि द्विस्वभावलग्नानि ।

मन्वाद्यासु युगाद्यासु दीक्षा सर्वसमृद्धिदा ।

ताश्चोक्ताः (मुहूर्त्तचिन्तामणौ)

न्वाद्यास्त्रितिथी मधौ तिथिरवी ऊर्जे शुचौ दिक्तिथी
ज्येष्ठेऽन्त्ये च तिथिस्त्विषे नव तपस्यश्वाः सहस्ये शिवाः ।
ाद्रेऽग्निश्च सिते त्वमाऽष्ट नभसः कृष्णे युगाद्यासिते
गोघ्नी बाहुलराधयोर्मदनदर्शौ भाद्रमाघाऽसिते ॥

(अग्निपुराणे)

नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम् ।
त्रेताऽसिततृतीयायां वैशाखे द्वापरं युगम् ॥
दर्शे तु माघमासस्य त्रयोदश्यां नभस्यके ।
कृष्णे कलिर्द्विसप्ता स्तु ज्ञेया मन्वन्तरादयः ॥

( योगिनीतन्त्रे )

रविसंक्रमणे चैव सूर्यस्य ग्रहणे तथा ।
तत्र लग्नादिकं किंचिन्न विचार्यं कदाचन ॥
महाष्टम्यां विशेषेण धर्मकामार्थसिद्धये ।

(बृहच्छ्रीक्रमे)

विषुवेऽयनयोर्द्वन्द्वे संक्रान्त्यां मदनोत्सवे ।
गुरुपर्वदिने चैव दीक्षा शुभफलप्रदा ॥

गुरुपर्वाणि च (भुवनेश्वरीतन्त्रे)

षष्ठीभाद्रपदे मासि इषे कृष्णा त्रयोदशी ।
कार्त्तिके नवमी शुक्ला तृतीया मार्गशीर्षके ॥
पौषस्य नवमी शुक्ला माघे चैत्र चतुर्थिका ।
फाल्गुने नवमी शुक्ला चैत्रे कामत्रयोदशी ॥
वैशाखे चाक्षया [illegible]व ज्येष्ठे दशहरा तथा ।
आषाढे पञ्चमी शुक्ला श्रावणे कृष्णपञ्चमी ॥

एतानि गुरुपर्वाणि पुण्यान्याहुर्मनीषिणः ।

(सारसंग्रहे)

पञ्चम्येकादशी शुक्ला सप्तमी च त्रयोदशी ।

दशमी शुक्लपक्षस्य द्वादशी तु विशेषतः ॥

तृतीया विहिता नित्यं षष्ठी सर्वत्र निन्दिता ।

विष्णुयामले ।

देवीबोधं समारभ्य यावत् स्यान्नवमीतिथिः ।

(रत्नावल्याम्)

योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः शुभः ।

सुकर्मा च धृतिर्वृद्धिर्ध्रुवः सिद्धिश्च हर्षणः ॥

वरीयाँश्च शिवः सिद्धो ब्रह्मा इन्द्रश्च षोड़श ।

अथ करणनिर्णयः ( गौतमीयतन्त्रे )

शुभानि करणान्याहुर्दीक्षायां च विशेषतः ।

शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत् ॥

अथ सूर्यराशिफलम् ( सारसंग्रहे )

मन्त्राद्यारम्भणे मेषो धनधान्यप्रदो भवेत् ।

वृषे मरणमाप्नोति मिथुनेऽपत्यनाशनम् ॥

कर्कटे सर्वसिद्धिः स्यात् सिंहे मेधाविवर्धनम् ।

कन्या लक्ष्मीप्रदा नित्यं तुलायां सर्वसिद्धयः ॥

वृश्चिके सर्वसिद्धिः स्याद्धनुर्ज्ञानविनाशनम् ।

मकरः पुत्रदः प्रोक्तः कुम्भो धनसमृद्धिदः ॥

मीनो दुःखप्रदो नित्यमेवं राशिफलं प्रिये ।

( गार्ग्यसंहितायाम् )

निन्दितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा ।

सूर्यग्रहणकालस्य समानो नास्ति भूतले ॥

तत्र यद्यत् कृतं कर्म अनन्तफलदं भवेत् ।

एता एव महेशानि दश विद्याः प्रकीर्त्तिताः।
नात्र सिद्धाद्यपेक्षाऽस्ति नक्षत्रादिविचारणा॥
कालादिशोधनं नास्ति साध्यादिदूषणं न हि।

(संमयातन्त्रे)

अयने विषुवे चैव युगाद्यासु तथैव च।
ग्रहणे च महातीर्थे न कालस्य विचारणा॥
तुलसीनिकटे बिल्वमूले धात्रीतले तथा।
अनादिदेवसान्निध्ये महाक्षेत्रे गवां गृहे॥
देवीपूजादिने वाऽपि नास्ति कालस्य निर्णयः।

(यामले)

मन्वाद्यासु युगाद्यासु दीक्षा सर्वसमृद्धिदा।

ताश्चोक्ता (मुहूर्त्तचिन्तामणौ)

मन्वाद्यास्त्रितिथी मधौ तिथिरवी ऊर्जे शुचौ दिक्तिथी
ज्येष्ठेऽन्त्ये च तिथिस्त्रिवषे नव तपस्यश्वाः सहस्ये शिवा।
भाद्रेऽग्निश्च सिते त्वमाऽष्ट नभसः कृष्णो युगाद्यासिते
गोघ्नी बाहुलराधयोर्मदनदर्शौ भाद्रमाघाऽसिते॥

(अग्निपुराणे)

नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम्।
त्रेताऽसियतृतीयायां वैशाखे द्वापरं युगम्॥
दर्शे तु माघमासस्य त्रयोदश्यां नभस्यके।
कृष्णे कलिर्हिसस्तास्तु ज्ञेया मन्वन्तरादयः॥

(योगिनीतन्त्रे)

रविसंक्रमणे चैव सूर्यस्य ग्रहणे तथा।
तत्र लग्नादिकं किंचिन्न विचार्यं कदाचन॥
महाष्टम्यां विशेषेण धर्मकामार्थसिद्धये।

बृहच्छ्रीक्रमे ।

विषुवेऽयनयोर्द्वन्द्वे संक्रान्त्यां मदनोत्सवे ।
गुरुपर्वदिने चैव दीक्षा शुभफलप्रदा ॥

गुरुपर्वाणि च (भुवनेश्वरीतन्त्रे)

षष्ठीभाद्रपदे मासि इषे कृष्णा त्रयोदशी ।
कार्त्तिके नवमी शुक्ला तृतीया मार्गशीर्षके ॥
पौषस्य नवमी शुक्ला माघे चैव चतुर्थिका ।
फाल्गुने नवमी शुक्ला चैत्रे कामत्रयोदशी ॥
वैशाखे चाऽक्षया चैव ज्येष्ठे दशहरा तथा ।
आषाढे पञ्चमी शुक्ला श्रावणे कृष्णपञ्चमी ॥
एतानि गुरुपर्वाणि पुण्यान्याहुर्मनीषिणः ।

(सारसंग्रहे)

पञ्चम्येकादशी शुक्ला सप्तमी च त्रयोदशी ।
दशमी शुक्लपक्षस्य द्वादशी तु विशेषतः ॥
तृतीया विहिता नित्यं षष्ठी सर्वत्र निन्दिता ।

विष्णुयामले ।

देवीबोधं समारभ्य यावत् स्यान्नवमीतिथिः ।
कृता तासु बुधैर्दीक्षा सर्वाभीष्टफलप्रदा ॥
बोधने चैव दुर्गायाः कालाकालं न शोधयेत् ।
अशोकाख्याऽष्टमी यत्र रामाख्या नवमी तथा ॥

( स्मृतिसंहितायाम् )

व्यतीपातो वैधृतिश्च दीक्षायोगाः शुभावहाः ।

तदुक्तम् (राजमार्त्तण्डे)

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

नागदैवतमाश्लेषा । मस्तके प्रथमपदे ।

कन्यायां यदि वा स्यातां मेषे भूमिजभानुजौ ॥

तामसी शनिवारे च सप्तमी कुम्भभास्करे ।

सूर्यग्रहशतैस्तुल्यो व्यतीपातः स उच्यते ॥

तामसी कृष्णा । ( महोग्रताराकल्पे )

कृष्णपक्षस्य चाष्टम्यां शुभलग्ने शुभे क्षणे ।

पूर्वभाद्रपदे शुक्ले मित्रतारासुसंयुते ॥

अथवा चाऽनुराधायां रेवत्यां तु प्रशस्यते ।

जानीयाच्छोभनं कालं मन्त्रस्य ग्रहणं प्रति ॥

इषे चैव विशेषेण कार्त्तिके च विशेषतः ।

महाचीनक्रमेणैव न दोषो नीलशारदे ॥

( शैवागमे )

धर्मदः प्रातःकालः स्यात् संगमो राज्यदायकः ।

मध्याह्ने सर्वसिद्धिः स्यात् सायाह्नो मध्यमो भवेत् ॥

रजनी मन्त्रदाने तु निषिद्धा दैशिकोत्तमैः ।

( क्रियाकाण्डशेखरे )

मौमुक्षवीं प्रत्यथ न कालादिनियमः स्मृतः ॥

निन्द्यानि तानि सर्वाणि प्रशस्तानि विमुक्तये ।

सर्वास्तारा ग्रहाः सर्वे नक्षत्राणि च राशयः ॥

यस्मिन्नहनि संतुष्टो गुरुः सर्वे शुभावहाः ।

संतुष्टे तु गुरौ तत्र संतुष्टाः सर्वदेवताः ॥

यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ।

न कालनियमस्तत्र न देशनियमस्तथा ॥

गुरुं संतोषयेद्भक्त्या स्वयमेव तथा भवेत् ।

अथ दीक्षास्थाननिर्णयः । तदुक्तम् ( पूर्णपद्धतौ )

गोशालायां गुरोर्गेहे देवागारे च कानने ।
पुण्यक्षेत्रे तथोद्याने नदीतीरे च स्वाश्रमे ॥
धात्रीबिल्वसमीपे च पर्वताऽग्रे गुहासु च ।
गङ्गायां तत्कृतं सर्वं कोटिकोटिगुणं भवेत् ॥

( यामले )

पुण्यतीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये ।
प्रयागे श्रीगिरौ काश्यां कालाकालं न शोधयेत् ॥

( योगिनीतन्त्रे )

गयायां भास्करक्षेत्रे विरजे चन्द्रपर्वते ।
चत्वरे च मतङ्गे च तथा कन्याश्रमेषु च ॥
न गृह्णीयात् ततो दीक्षां तीर्थेष्वेतेषु पार्वति ।

अथ मन्त्रविशेषेषु देवताविशेषाणां शापाः प्रोक्ताः ( मेरुतन्त्रे )

सुरया सुधया पूर्वदेवा देवा विमोहिताः ।
यदा तदा तु भगवान् प्रोवाच मधुसूदनः ॥
कः पूज्यो भवतां मध्ये श्रेष्ठस्तन्मे निगद्यताम् ।
उन्मत्ताश्च तदा देवाः श्रेष्ठोऽहमिति चाऽब्रुवन् ॥
किंचित् स्मित्वा तु भगवान् मोहयन्नात्ममायया ।
इत्यवोचद्यस्य वाक्यं शापे चानुग्रहे क्षमम् ॥
स एव देवः श्रेष्ठोऽत्र पूर्वो वाऽप्यपरोऽपि वा ।
इति श्रुत्वा वचो विष्णोरशपँश्च परस्परम् ॥
मन्त्ररूपाण्यतो देवि संस्कारैः शापमोक्षणम् ।
विना तु शापमोक्षेण कः सिद्धिं प्राप्नुयाज्जनः ॥

श्रीदेव्युवाच ।

शापः केन कथं दत्तः शप्ते जप्ते च किं फलम् ।

निःशापत्वं कथं तेषां सिद्धिः स्यादिति मे वद ॥

श्रीशिव उवाच ।

आदिमध्यावसानेषु वायुर्यस्य व्यवस्थितः ।
चतुराद्यो चैकबीजोऽनेकधा यत्र संगतः ॥
केनाथवा समाक्रान्तः स मन्त्रश्छेदितोऽसिना ।
कार्त्तिकेयेन तज्जापाच्छिद्यन्तेऽस्य मनोरथाः ॥
आदौ मध्येऽवसाने वा भूर्बीजयुगलं भवेत् ।
आदौ यद्वा द्विधा वर्ज्जी त्रिधा मध्ये ततो द्विधा ॥
रुद्धौ शक्रस्य शापेन भुक्तिमुक्तिविवर्जितौ ।
जातो मन्त्रो वामदक्षमार्गयोरपि सेवितौ ॥
ह्रीं मँक्रें श्रीँ ष्वेकतमं यत्र बीजं न दृश्यते ।
हूँकारो वा स मन्त्रस्तु शक्तिहीनः कृतः सुरैः ॥
एतादृशश्चेत् संजप्तः सामर्थ्यं हन्ति मन्त्रिणः ।
शक्तिहीनस्य वामस्य मरणं नात्र संशयः ॥
नादौ ह्रीँ न च मध्ये क्रीँ क्रौँ ते वा नैव दृश्यते ।
असौ पराङ्मुखो मन्त्रो जातः सूर्यस्य शापतः ॥
पराङ्मुखं भजेन्मन्त्री देवता स्यात् पराङ्मुखी ।
दैवस्य कार्येऽपि संसिद्धे लोकः स्याच्च पराङ्मुखः ॥
आदावन्ते तथा मध्ये हं वा सं वा न दृश्यते ।
बधिरास्ते कृता मन्त्रा देवाचार्येण शापतः ॥
जप्ते तु बधिरे मन्त्रे विस्मृतिस्तस्य जायते ।
जायते बधिरो नूनं महाकालेन भाषितम् ॥
सूर्यबीजं हकारः स्याच्चन्द्रबीजं तु सः स्मृतः ।

रेफोऽग्निबीजमुद्दिष्टमेतन्नेत्रत्रयं मम ॥
पञ्चाक्षरे यन्त्रमन्त्रे यत्रैक*मपि नास्ति चेत् ।
मम शापान्नेत्रहीनो दुःखशोकामयप्रदः ॥
नादौ मध्ये न चान्ते वा हूसौं वा हंस वाथ हैं ।
ऐं वा फें वाऽथवा हूँ वा नमो वा ह्रीं मनुः स तु ॥
शापेन कीलितो देवि राजदेवेन पार्वति ।
यदा तु कीलितो मन्त्रो न सिद्धिमुपगच्छति ॥
मध्ये एको लकारो वा फट् वाऽन्ते लद्वयं यदि ।
फट्द्वयं वा त्रयं वाऽन्ते न चेत् स स्तम्भितो मनुः ॥
शापेन भैरवेणास्मात् सिद्धं भवति शोभनम् ।
कदाचिन्नैव दुःखं च प्रायशो बहुलं भवेत् ॥
आदौ तु यस्य मन्त्रस्य क्रमात् सप्ताक्षराणि चेत् ।
रेफेण वा यकारेण संयुक्तानि मनुः स तु ॥
वाय्वग्निशापसंदग्धः साधकं परितापयेत् ।
तस्मात् संस्कारयेद्देवि सिद्ध्यै साधकोत्तमः ॥
द्वाभ्यां त्रिभिरथो षड्भिरष्टभिर्वा प्रदृश्यते ।
यदाऽक्षरैरन्तरितः फट्कारः स निगद्यते ॥
नारसिंहस्य शापेन त्रस्तः संत्रासयेत् सदा ।
स्वप्नादौ साधनं नैव सिद्धिः संदृश्यते क्वचित् ॥
ओं वा हूँ वा सकारो वा नादौ भीतो मनुः स तु ।
ब्रह्मशापाद्धीनसिद्धिर्भवेदत्यन्तकष्टदः ॥
आदिमध्यावसानेषु मिलित्वा मचतुष्टयम् ।

---

*उक्तनेत्रत्रयादेकमपीति ।

स मन्त्रो मलिनो मायाशापान्मालिन्यकारकः ॥
हूँ चादौ वा मन्त्रमध्ये वाऽन्ते फट्-युगलं भवेत् ।
तिरस्कृतो रुद्रशापात् साध्यं कुर्यात् तिरस्कृतम् ॥
आंदौ तारद्वयं चान्ते वषडस्त्रं च मध्यगम् ।
कुटुम्बकलहं कुर्याद्बालाशापेन भेदितः ॥
हकारेण सकारेण रहितस्त्र्यक्षरस्तु यः ।
सुषुप्तः सिंहशापेन प्रोक्तोऽभीष्टफलापहः ॥
अष्टादशाक्षरादिर्यः पञ्चफट्कारपूर्वकः ।
चामुण्डाशापतो जातो मदोन्मत्तो न शोभनः ॥
मध्ये चेत् पञ्च फट्काराः कालिकाशापतः स तु ।
मूर्छितो मूर्छितं कुर्याद्बामिनं तु विशेषतः ॥
एवमन्ते च फट्कारपञ्चकं स तु रम्भया ।
हतवीर्यस्तु शापेन कृतः क्षीणत्वकारकः ॥
चत्वारो यत्र फट्कारा आदिमध्याऽवसानिकाः ।
अष्टादशाक्षरो हीनो हानिर्भैरवशापतः ॥
एकोनविंशत्यर्णश्च ह्रौँक्रोमोकाँरसंयुतः ।
प्रध्वस्तः कामशापेन ध्वंसयेत् कामकारणात् ॥
सप्तवर्णो मनुर्बालः कुमारोऽष्टाक्षरः स्मृतः ।
षोडशार्णस्तु तरुणः प्रौढो व्योमाब्धिवर्णकः ॥
त्रिंशत्कलाः शतं वेदकाष्ठावर्णास्तु यत्र तु ।
सकृद्धि एते कालेन शप्ता दुःखानि कुर्वते ॥
नवार्णा आँकारयुतश्चामुण्डाशापतो मनुः ।
निस्त्रिंशः साधकं छिन्द्यान्निस्त्रिंशेन न संशयः ॥

अन्ते नमो वा स्वाहा वा नास्ति वा यस्य मध्यतः
वषट् वौषट् सहूँफट् च एतद्वा नास्त्यसौ मनुः ॥
निर्बीज इति संशप्तो भुवनेश्याऽस्य साधकः ।
सेवां कुर्याल्लभेद्वंशनाशं वंशत्रयादितः ॥

आदिमध्यावसानेषु फट्फट्कारस्तु यस्य तु ।
कौमार्यास्तु स शापेन सिद्धिहीनो न सिद्धिकृत् ॥
दशाक्षरो यस्तु मन्त्रः स गणेशस्य शापतः ।
मन्दो जप्तस्तु मूर्खत्वं कुर्याज्जन्मनि जन्मनि ॥

आदिव्यञ्जनसंयोग एक एव स्वरो भवेत् ।
तत् कूटं कूटतो हानिर्मातङ्ग्याः शापतः स्मृतः ॥
द्विवर्णः सत्त्वहीनः स्यादाश्विनेयस्य शापतः ।
नाशयेत् साधकबलं राज्ञः सैन्यं विनाशयेत् ॥
चतुर्वर्णः केकरस्तु जातः सूर्यातिशापतः ।
जपित्वा केकरं मन्त्रं चक्षुषा नैव पश्यति ॥

षडक्षराणि बीजहीना जाता रावणशापतः ।
नाशयेत् साधकबलं राज्ञः सैन्यं विनाशयेत् ॥
वंशवृद्धिर्न तज्जापादन्यथा स्त्रीसुखं न हि ।
सार्धत्रिसप्तसूर्यार्णा धूमावत्याश्च शापतः ॥

धूमताऽव्याकुलं चित्तं जायते साधकस्य तु ।
विंशत् तथैकाविंशश्च त्रिंशद्वर्णस्तु तारया ॥
शप्त आलिङ्गितश्चायं जपात् स्वप्नरते मृतिः ।
द्वाविंशत्यक्षरो मन्त्रः सरस्वत्यास्तु शापतः ॥
मोहितं साधकं कुर्यात् पानादिव्यसनाकुलम् ।

चतुर्विंशतिवर्णो यः सप्तविंशतिवर्णकः ॥
क्षुधार्त्तो राजमातङ्ग्याः शापाद्दारिद्र्यकारकः ।
त्रयोविंशास्त्रयो रुद्रा वर्णाः कौलिकशापतः ॥
मन्त्रा दृप्तास्तज्जपेन छान्दसो जायते जनः ।
षड्विंशदेकोनत्रिंशत् त्रिंशत् षट्त्रिंशदक्षरः ॥
पूष्णः शापादङ्गहीनः कामनापूरको न हि ।
अष्टाविंशदेकत्रिंशद्वर्णो नन्दीशशापतः ॥
अतिक्रूरः साध्यनाशं कृत्वा नश्येच्च साधकः ।
अष्टत्रिंशाक्षरो मन्त्रो मातृकाणां तु शापतः ॥
अतिक्रुद्धस्तज्जपेन स्वकृतः स्वस्य संक्षयः ।
चत्वारिंशत् समारभ्य त्रिषष्टिं यावदक्षरम् ॥
सव्रीडा मालिकाशापात् सव्रीडास्तस्य साधकाः ।
पञ्चषष्ट्यक्षरा ये स्युर्मन्त्रास्ते शान्तमानसाः ॥
कामशापेन तज्जापादुद्योगस्य फलं न हि ।
षट्षष्टितो नवनवतिपर्यन्तं कुलस्य तु ॥
स्थानभ्रष्टास्तु शापेन जातास्तादृक् च साधकः ।
क्वातिधृतिर्व्यतिधृतिः कङ्कयुग्मं द्विगोकराः ॥
शतत्रयं यत्र वर्णाः शापिताश्छिन्नमस्तया ।
यूयं भवत निःस्नेहाः साधकानां भयापहाः ॥
निष्काममतिभिर्जप्ताः संसारस्नेहनाशकाः ।
चतुःशतान्यथारभ्य यावद्वर्णसहस्रकम् ॥
अतिवृद्धा यज्ञशापात् पौष्टिकादिषु वर्जिताः ।
सहस्रार्णाधिका मन्त्रा दण्डपाणेस्तु शापतः ॥

दण्डकाख्यापीडिताश्च तज्जपात् कष्टमाप्नुयात् ।
द्विसहस्राधिका मन्त्रा भार्गवस्य तु शापतः ॥
खण्डीकृताः सप्तधा ते सिद्धिखण्डकराः स्मृताः ॥
अन्यच्छृण्वन्तु भो देवा मुनीनां जपतां यदा ॥
सिद्धिर्न जाता तु तदा दत्तः शापः सुदारुणः ।
आश्वासनं देवतानां जातं सिद्धेरकारणात् ॥
उपदेशे गुरुः कुर्यात् तस्मात् तन्मन्त्रशोधनम् ।

मन्त्रशोधनप्रकारमाह ।

तत्प्रकारं प्रवक्ष्यामि शृण्वन्तु सकलाः सुराः ॥
गुरुः सिद्धासने संस्थो गुदमेढ्रान्तरं दृढम् ।
वामेन पार्ष्णिनाऽऽपीड्य तस्योपरि तु विन्यसेत् ॥
पादं तु दक्षिणं गुल्फग्रन्थ्योरन्योन्यमर्दनम् ।
यथा स्यात् तत् प्रकर्त्तव्यं ततो दक्षिणपार्ष्णिना ॥
लिङ्गमूलं विनिष्पीड्य स्थिरकाय उपाविशेत् ।
गुदमाकुञ्च्य पवनमपानाख्यं तथा गुरुः ॥
उत्थापयेत् ततः प्राणवायुं सम्यङ्निरोधयेत् ।
अपानप्राणयोः कुर्यात् संघट्टं चैकदृङ्मनाः ॥
मूलाधारे चित्स्वरूपकुण्डल्यां परमात्मनि ।
जातदोषं स्वस्य मन्त्रं चिन्तयेत् तत्र सद्गुरुः ॥
तस्य मन्त्रस्याक्षराणि क्रमादेकैकशस्ततः ।
सुषुम्णायास्तु मार्गेण मूलाधारे प्रवेशयेत् ॥
स्वाधिष्ठाने ततश्चक्रे मणिपूरे ह्यनाहते ।

विशुद्ध आज्ञाचक्रे च भित्वाभित्वा प्रवेशयेत् ॥
एवं नीत्वा ब्रह्मरन्ध्रं तत्रत्यात् सोममण्डलात् ।
निर्गतामृतसंसिक्तान् मन्त्रार्णान् सुविभावयेत् ॥
पुनः सुषुम्णामार्गेण आज्ञाचक्रेऽवतारयेत् ।
विशुद्धेऽनाहते वाऽपि मणिपूरे च चक्रके ॥
स्वाधिष्ठाने ततो भेदान्मूलाधारे प्रवेशयेत् ।
ततस्तन्मन्त्रमृष्यादिन्यासपूर्वं जपेत् पुनः ॥
अष्टोत्तरसहस्रं तु तेन शुद्धो भवेन्मनुः ।
*अनुक्तशापान्निर्मुक्तं पश्चादुपदिशेच्च तम् ॥

अनुक्तशापादिति मानसशापादित्यर्थः। वाचिकशापानां तु वक्ष्यमाणदशसंस्करनाश्यत्वादिति भावः। छिन्नत्वादिदोषाणामुक्तयोनिबन्धनाश्यत्वं नागभट्टैरप्युक्तम्।

छिन्ना रुद्धास्तम्भिताः कीलिका ये
सुप्ता मन्त्रा मूर्च्छिता हीनवीर्याः ।
दग्धास्त्रस्ताः शत्रुपक्षे स्थिता ये
बाला वृद्धा गर्विता यौवनेन ॥
ये निर्जीवा ये च सत्त्वेन हीनाः
षण्ढीभूताश्चाङ्गमन्त्रैर्विहीनाः ।
एते मुद्राबन्धनेनैव योन्या
मन्त्राः सर्वे वीर्यवन्तो भवन्ति ॥

---

* उक्तशापाद्विनिर्मुक्तमिति मेरुतन्त्रे उपलभ्यते ।

( शारदायाम् )

दोषानिमानविज्ञाय यो मन्त्रान् भजते जडः ।
सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ॥

मन्त्राणां दशसंस्कारास्तत्रैव ।

जननं[१] जीवनं[२] पश्चात् ताडनं[३] बोधनं[४] तथा ॥
तथाऽभिषेको[५] विमलीकरणा[६]ऽऽप्यायने[७] पुनः ।
तर्पणं[८] दीपनं[९] गुप्ति[१०]र्दशैता मन्त्रसंस्क्रियाः ॥

जननादिप्रकारास्तु ( मेरुतन्त्रे )

वाचिकानां तु शापानां नाशाद्यर्थमथोच्यते ।
श्रीपर्ण्या वा चन्दनस्य पीठे चूतादिकस्य वा ॥
कस्तूरीकुङ्कुमाद्यैश्च विलिखेत् पाञ्चभौतिकम् ।
चक्रमावाहयेत् तत्र मातृकाख्यां सरस्वतीम् ॥
यथोक्तविधिना पूजां कृत्वा चाष्टोत्तरं शतम् ।
जपित्वा मातृकां तस्या मध्यात् स्वाभीष्टमन्त्रकम् ॥
स्वरव्यञ्जनविन्दूंश्च सर्गयोगाक्षराणि च ।
पृथक् पृथगथोद्धृत्य चैकीकृत्य गुरूक्तितः ॥
गृहीतं जनयेन्मन्त्रं प्रोक्तं संजननं त्विदम् ।
आद्यन्तं प्रणवं कृत्वा प्रणवान्तरितं जपेत् ॥
अष्टोत्तरशतं मन्त्रं वर्णानेतत् तु जीवनम् ।
रोचनाकुङ्कुमाभ्यां च भूर्जपत्रे लिखेन्मनुम् ॥
प्रत्यक्षरं शतं वारं ताडयेच्चन्दनाम्भसा ।
समुच्चरन् वायुबीजमेतत् ताडनमुच्यते ॥

कुण्ठिताः शाबरा मन्त्रास्ताडिताः सिद्धिकारकाः।
पूर्वोक्तपीठे संलिख्य तन्मन्त्राक्षरसंख्यया॥
आदाय करवीरस्य पुष्पाण्यथ समुच्चरन्।
प्रत्यक्षरं च तैः पुष्पैः शतवारं हनेदिति॥
उच्चरन् वह्निबीजं च बोधनं त्वेतदुच्यते।
(शारदायां) तु हनेदित्युक्ते हन्यादित्युक्तम्।
*विलिखेन्मन्त्रयन्मन्त्री प्रसूनैः करवीरजैः।
तन्मन्त्राक्षरसंख्यातैर्हन्याद्रान्तेन बोधितम्—इति॥
रान्तेन वह्निबीजेन (भैरी)
प्राग्वत् पीठे च तैर्द्रव्यैः पद्ममष्टदलं लिखेत्॥
तत्कर्णिकायां मालत्या लिखेत् कलिकयैकया।
एकैकार्णं तु मन्त्रस्य तन्मन्त्राक्षरसंख्यया॥
बोधिद्रु†पल्लवान् गृह्य‡ तमेवं मन्त्रमुच्चरन्।
अभिषिञ्चाम्यमुं मन्त्रं नम इत्यभिषेचयेत्॥
नानासुगन्धितोयेन पल्लवैकेन चाक्षरम्।
एकमष्टोत्तरशतमभिषिञ्चेदयं स्मृतः॥
अभिषेको मन्त्रशुद्धिं कुर्यान्नृणां यथा जलम्।
ज्योतिर्मन्त्रश्चिन्तनीयो मूलाधारेऽग्निमण्डले॥
संस्कर्त्तव्यं मनुं तस्य ऊर्ध्वमेवं विभावयेत्।
आणवाख्यः साहजिक आगन्तुः कार्मणः स्मृतः॥
योगाख्यो मायिकः प्रोक्तः स्वमन्त्रे तु मलत्रयम्।

---

* विलिख्य मन्त्रं तन्मन्त्रीति २ पु. पा.।
† बोधिद्रुरश्वत्थवृक्षः।
‡ गृहीत्वेह गृह्येति पाठः प्रामादिकः।

ज्योतिर्मन्त्रेण निर्दग्धमेकमेकं विचिन्तयेत् ॥
एवं तु विमलो जातः स्वमन्त्र इति चिन्तयेत् ।
ज्योतिर्मन्त्रस्तु वेदादिह्रौमिति व्यक्षरो मतः ॥
विमलीकरणं ह्येतत् प्रयोगान्तेऽपि कारयेत् ।
प्राग्वत् पीठे कुङ्कुमादिद्रव्यैर्मन्त्रं विलेखयेत् ॥
ताम्रादिपात्रं कर्पूरवासितेन जलेन च ।
शुद्धेनाऽऽपूर्य लिखितमन्त्रेणाष्टोत्तरं शतम् ॥
अभिमन्त्र्य जलं तेन मन्त्रेण कुशविन्दुभिः ।
प्रत्यक्षरं प्रोक्षयेत् त्रिरेतदाप्यायनं मतम् ॥
पुरश्चर्याक्लेशितानां समावर्त्तनवत् त्विदम् ।
कस्तूर्याद्यैस्ताम्रपात्रमध्ये मन्त्रं विलेखयेत् ॥
पात्रान्तरे च कर्पूरादिकवासितसज्जलम् ।
गृहीत्वा चार्घपात्रेण पठन्मन्त्रमिमं मनुम् ॥
तर्पयामि* नमश्चे ति तर्पयेदिति तर्पणम् ।
ॐह्रीँश्रीँपूर्वकं मन्त्रं जपेदष्टोत्तरं शतम् ॥
जपेदेतद्दीपनं स्यात् सर्वमन्त्रेष्वपीष्यते ।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ॥
संस्कारा दश संप्रोक्ताः सर्वतन्त्रेषु गोपिताः ।
"यान्† कृत्वा संप्रदायेन मन्त्री वाञ्छितमश्नुते" ॥

अथ मन्त्राणां जागृतिस्तत्रैव ।

अथादौ सर्वमन्त्राणां जागृतिः प्रोच्यते मया ।
गुरुणा सा प्रकर्त्तव्या शिष्यस्य सिद्धिहेतवे ॥

---

* नमश्चोक्तेति वा. पा. मुक्ताकल्लोलिन्याम् ।
† मेरुतन्त्रस्य मूलपुस्तके नैवमुपलभ्यते ।

* तारान्त्याग्नि † वियद्युक् च यस्मिन्नाग्नेयकः स तु ।
अन्यः सौम्यः स्वापकाल इडायामग्निरूपिणः ॥
सौम्यस्य पिङ्गलायां स्यात् तयोरन्यत्र जागृतिः ।
प्रबोधकाले संजप्तो जाग्रतो जायते मनुः ॥
अथ वा संपुटीकृत्य लान्तानाद्यान् स विन्दुकान् ।
पुनश्च सविसर्गान्तान् त्वकारं केवलं पठेत् ॥
एवं जप्तो यदीष्टश्चेत् प्रबुद्धः शीघ्रसिद्धिदः ।

शाबरमन्त्रेषु विशेष उक्तस्तत्रैव ।

अथ शाबरमन्त्राणां जागृतिं शृणु पार्वति ॥
कांस्यभाजनमानीय शुद्धं भस्मादिभिः कृतम् ।

---

* तारः ओं, अन्त्यः क्षः, अग्नी रेफः, वियत् हकारः एतेषां बहूनां युक् योगो यस्मिन् मन्त्रे स आग्नेयः। न तूक्तवर्णानां मध्ये एकवर्णस्य योगेनाग्नेयः। यथोक्तं शारदायाम् । अग्नीषोमात्मका मन्त्रा विज्ञेयाः क्रूर सौम्ययोः। कर्मणोर्वह्नितारान्त्यवियत्प्रायाः समीरिताः ॥ आग्नेया मनवः सौम्या भूयिष्ठेन्द्वमृताक्षराः । आग्नेयाः संप्रबुद्ध्यन्ते प्राणे चरति दक्षिणे ॥ भागेऽन्यस्मिन् स्थिते प्राणे सौम्या बोधं प्रयान्ति च। नाडीद्वयं गते प्राणे सर्वे बोधं प्रयान्ति च ॥ प्रयच्छन्ति फलं सर्वे प्रबुद्धा मन्त्रिणां सदा। अत्र प्रकृतोपयोगिवह्नितारेत्यादिवचनव्याख्या राघवभट्टकृता। वह्नी रेफः। तारः ओं। अन्त्यः क्षकारः। वियत् हकारः। प्रायः शब्दो बाहुल्यवाची । प्रायो भूम्न्यन्तगमन इत्यमरः। एते आग्नेयाः। इन्दुः सः । तत्त्वन्यासे इन्दुमण्डलस्य सकारादित्वेन न्यस्तत्वात्। अमृतं वः । अत्रैकस्य बाहुल्ये तत्त्वं तदुक्तमीशानशिवेन । “ताराकाशाद्यन्तवाद्यन्तवर्णा आग्नेयाः स्युः सौम्यवर्णास्ततोऽन्ये। आग्नेयोऽपि स्यात् तु सौम्यो नमोऽन्तः सौम्योऽपि, स्याद्ग्निमन्त्रः फडन्तः ॥ स्यादाग्नेयैः क्रूरकार्यस्य सिद्धिः सौम्यैः सौम्यं कर्मकुर्याद्यथाव” दिति। नारायणीयेऽपि। “तारान्त्याग्निवियत्प्रायो मन्त्र आग्नेय इष्यते। शिष्टाः सौम्याः प्रशस्तौ तौ कर्मणोः क्रूरसौम्ययोः ॥ आग्नेयमन्त्रः सौम्यः स्यात् प्रायशोऽन्ते नमोऽन्वितः । सौम्यमन्त्रस्तथाऽऽग्नेयः फट्कारेणान्वितोऽन्तत” इति ॥पिङ्गलामतेऽपि । रौद्रोऽपि शान्ततामेति शान्तजातिसमन्वितः । मन्त्रः शान्तोऽपि रौद्रत्वं हुँफट्पल्लवितो यदि इति। तत्र नारायणीये विशेषः। मन्त्रावाग्नेयसौम्याख्यौ ताराद्यन्तौ द्वयोर्जयेदिति।

† वियत् फड्युक् इति वा. पा. । एतत्पाठसहितस्य तारान्त्याग्नीत्यारभ्य-जाग्रते मनुरित्यन्तं श्लोकद्वयस्याभिप्राय उपर्युक्तटिप्पण्या विशदीभवति ।

प्रजपेद्रविरात्रौ तु यामे यामे शताष्टकम् ॥
खादिर्या ताडयेद्यष्ट्या कांस्यपात्रं वदेदिति ।
जाग्रतो भव मन्त्रस्य भाषयाऽथ तुरीयके ॥
यामे दद्याद्बलिं काल्या मन्त्रजं भैरवस्य तु ।
कुक्कुटंऽचान्यदेवेषु स्फोटयेन्नारिकेरकम् ॥

मन्त्रस्य भाषयेति । यद्देशीयभाषात्मकः शाबरमन्त्रस्तद्देशीयभाषयैव मन्त्रं संबोध्य त्वं जाग्रतो भवेति वदेदित्यर्थः ।

अथ दीक्षोपयुक्तमण्डपार्थं भूमिपरीक्षा ।

प्लवस्थानं च गम्भीरं दीर्घतोयाशयाश्रयः ।
अग्निशालाऽग्निहोतॄणां पुण्यस्थानं परिश्रुतम् ॥
द्विजानां सव्रतानां च आश्रयः स्वाश्रमोऽथवा ।
दीक्षायामतिशस्तानि स्थानान्येतानि पार्वति ॥
न च दीक्षां प्रकुर्वीत निकुञ्जे गहने वने ।
द्विसीम्नि च महारण्ये मात्सर्यमृगसेविते ॥

( तन्त्रान्तरे )

महानदीनां तीराणि गङ्गासागरसङ्गमः ।
प्रशस्तानि च तीर्थानि क्षेत्राणि चाश्रमा अपि ॥
अरण्यानि च सर्वाणि पर्वताः सकला अपि ।
सनिर्झराऽप्यपगिरि देवतायतनान्यपि ॥

( महाकपिलपञ्चरात्रे )

तत्र भूमिं परीक्षेत वास्तुज्ञानविशारदः ।
स्फुटिता च सशल्या च वल्मीकारोहिणी तथा ॥
दूरतः परिवर्ज्या भूः कर्त्तुरायुर्धनापहा ।
स्फुटिता मरणं कुर्यादूषरा धननाशिनी ॥
सशल्या क्लेशदा नित्यं विषमा शत्रुतो भयम् ।

ईशकोणप्लवा सा च कर्त्तुः श्रीदाऽऽशु निश्चितम् ॥
पूर्वप्लवा वृद्धिकरी वरदा तूत्तरप्लवा ।
दक्षिणप्लवा या भूमिर्नित्यं मृत्युभयप्रदा ॥
गृहक्षयकरी सा च भूमिर्या नैर्ऋतप्लवा ।
धनहानिकरी पृथ्वी कीर्त्तिता वरुणप्लवा ॥
वायुप्लवा तथा भूमिर्नित्यमुद्वेगकारिणी ।
अग्निकोणप्लवा या च पुत्राऽऽयुर्धननाशिनी ॥
( गौतमीये )
भूमेः परिग्रहं कुर्याद्यावदायतनं भवेत् ।
शुक्लमृत्स्ना च या भूमिर्ब्राह्मी सा परिकीर्त्तिता ॥
क्षत्रिया रक्तमृत्स्ना च हरिद्वैश्या प्रकीर्त्तिता ।
कृष्णा भूमिर्भवेच्छूद्रा चतुर्धा परिकीर्त्तिता ॥
( महाकपिलपञ्चरात्रे )
ब्राह्मणी भूः कुशोपेता क्षत्रिया स्याच्छराकुला ।
कुशकाशाकुला वैश्या शूद्रा सर्वतृणाकुला ॥
( गौतमीयतन्त्रे )
ब्राह्मी सर्वार्थसिद्ध्यैः स्यात् क्षत्रिया राज्यदा तथा ।
धनधान्यकरी वैश्या शूद्रा तु निन्दिता मुने ॥
( वासिष्ठधाम )
खन्यमाने यदा कुण्डे पाषाणः प्राप्यते भुवि ।
तदाऽपमृत्यवे चास्थिकेशाङ्गारैर्धनक्षयः ॥
भस्मनाऽग्निभयं प्रोक्तं तुषैः प्रोक्ता दरिद्रता ।
शल्यज्ञानार्थमहिबलचक्रमाह ( आदियामले )
अहिचक्रं प्रवक्ष्यामि यथा सर्वज्ञभाषितम् ।
द्रव्यं शल्यं तथा शून्यं येन जानन्ति साधकाः ॥

निधिर्निवर्त्तनैकस्थः संभ्रान्तो यत्र भूतले ।
तत्र चक्रमिदं स्थाप्यं स्थानद्वारमुखस्थितम् ॥
*"अहिगत्या च नक्षत्रं तत्काले यत्र चन्द्रमाः ।
द्रव्यं शल्यं भवेत् तत्र चन्द्रभास्कर†सादज"म् ॥
ऊर्ध्वरेखाऽष्टकं लेख्यं तिर्यक् पञ्च तथैव च ।
अहिचक्रे भवन्त्यत्येवमष्टाविंशतिकोष्ठकाः ॥
तत्र पौष्णाश्विनीयाम्यकृत्तिकामघभाग्यकम् ।
उत्तराफाल्गुनी लेख्या पङ्क्तौ तत्सप्तके ध्रुवम् ॥
अहिर्बुध्न्याजपादर्क्षं शतभं ब्राह्मयसार्पभम् ।
पुष्यं हस्तं समालेख्यं द्वितीयपङ्क्तिसंस्थितम् ॥
अभिजिद्विष्णुधनिष्ठाः सौम्यं रौद्रं पुनर्वसुम् ।
चित्रभं च तृतीयायां पङ्क्तौ धिष्ण्यादिसप्तके ॥
विश्वर्क्षं तोयभं मूलं ज्येष्ठां मैत्रं विशाखभम् ।
स्वातीं पङ्क्तौ चतुर्थ्यां तु कृत्वा चक्रं विलोकयेत् ॥

अहिबलचक्रम् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| रे २७ चं | अ १ चं | भ २ चं | कृ ३ चं | म १० चं | पू ११ | उ १२ |
| उ २६ | पू २५ चं | श २४ | रो ४ | श्ले ९ चं | पु ८ चं | ह १३ |
| अभि | श्र २२ चं | ध २३ चं | मृ ५ | आ ६ चं | पु ७ चं | चि १४ |
| उ २१ चं | पू २० चं | मू १९ | ज्ये १८ | अ १७ | वि १६ | स्वा १५ |

* नरपतिजयचर्यां काहिबलचक्रलक्षणे नेदमुपलभ्यते

† सादो गमनम् । एतेन यस्मिन् नक्षत्रे चन्द्रस्य सूर्यस्य च गमनं तज्ज्ञं तद्व द्रव्यं शल्यं च क्रमात् तत्र भूतले भवेदिति ज्ञेयम् ।

रेवत्यश्विनीभरणीकृतिकामघापूर्वोत्तराः प्रथमपङ्क्तौ। उत्तरभाद्रपदपूर्वभाद्रपदशतभिषारोहिण्याश्लेषापुष्यहस्ता द्वितीयपङ्क्तौ। अभिजित्श्रवणधनिष्ठामृगशिरआर्द्रापुनर्वसुचित्रास्तृतीयपङ्क्तौ। तत उत्तराषाढापूर्वाषाढामूलज्येष्ठाऽनुराधाविशाखास्वात्यश्चतुर्थपङ्क्तौ।

एवं प्रजायते चक्रे प्रस्तारः पन्नगाकृतिः।
द्वारशाखे मघायाम्ये द्वारस्था कृत्तिका मता॥
अश्वीशपूर्वषाढादित्रिकपञ्चचतुष्टयम्।
रेवतीपूर्वभाद्रेन्दोर्भानि शेषाणि भास्वतः॥
उदयादिगता नाड्यो भघ्नाः षष्ट्याप्तशेषके।
दिनेन्दुभुक्तयुक्तोऽसौ भवेत् तत्कालचन्द्रमाः॥
*"षष्टिघ्न तं निशानाथं शरवेदाप्तकं पुनः।
युगैः शेषं भवेद्यत् तत् प्रागादिचक्रवक्रगम्"॥
चन्द्रवत् साधयेत् सूर्यमृक्षस्थं चेष्टकालिकम्।
पश्चाद्विलोकयेत् तौ च स्वऋक्षेऽथान्यभे स्थितौ॥
चन्द्रऋक्षे यदाऽर्केन्दू तत्र स्यान्निश्चितो निधिः।
भानुऋक्षे स्थितौ तौ चेत् तदा शल्यं न चान्यथा॥
स्वस्वभे द्वितयं ज्ञेयं नास्ति किं चिद्विपर्यये।
स्थितं न लभते द्रव्यं चन्द्रे क्रूरग्रहान्विते॥
हेमतारं च ताम्रारं रत्नं† ताम्रायसं त्रपुः।
नागं चन्द्रे विजानीयाद्भास्करादिग्रहे स्थिते॥
मिश्रैर्मिश्रं भवेद्द्रव्यं शून्य दृष्टिविपर्यये।
सर्वग्रहस्थिते चन्द्रे निर्दिष्टोऽसौ महानिधिः॥
शुभक्षेत्रगते चन्द्रे लाभो भवति निश्चितम्।

---

* नरपतिजयचर्यायामिदमुपलभ्यते।
† कांस्यायसम् इति २ पु. पा.।

पापक्षेत्रे न लाभः स्याज्ज्ञातव्यं स्वरवेदिभिः ॥
पुष्टे चन्द्रे भवेन्मुद्रा क्षीणे चन्द्रेऽल्पको निधिः ।
ग्रहदृष्टिवशात् सोऽपि विज्ञेयो नवधा बुधैः ॥
हेमतारं च ताम्रारं पाषाणं मृन्मयायसम् ।
सूर्यादिगृहगे चन्द्रे द्रव्यभाण्डं प्रजायते ॥
भुक्तराश्यंशमानेन भूमानं कांविकैः करै—रिति ।

तद्यथा ।

चन्द्रस्थाने निधिर्ज्ञेयः सूर्यस्थाने च शल्यकम् ॥

*इदं च निर्वर्त्तनं परिमितभूमावेकमेव कुर्यात् ।

निर्वर्त्तनस्वरूपं च ।

दण्डस्तु दशहस्तः स्यात् त्रिंशद्दण्डैर्निवर्तनम् इति ।

अथ वा महाकापिलपञ्चरात्रोक्तप्रकारेण शल्योद्धारः कर्त्तव्यः । तद्यथा ।

प्रासादारम्भकाले च यदङ्गं स्पृशते पुमान् ।
वास्तुदेहे हृढं तत्र शल्यं विद्याद्विचक्षणः ॥
कण्डूयति शिरः पुंसः शिरःशल्यं समुद्धरेत् ।
शल्यं तत्रास्थि विज्ञेयं खन्यमाने करत्रये ॥
अग्निदाहश्च रोगश्च धनहानिश्च जायते ।
यत्नेनोत्पाटयेच्छल्यं यदीच्छेत् सिद्धिमात्मनः ॥
बाहौ कण्डूयमाने तु निर्दिशेल्लोहशृङ्खलम् ।
हस्तद्वयेन संतिष्ठेल्लक्षणं कथितं तव ॥
स्वामिनो मरणं विद्याद्विदेशगमनं तथा ।
यत्नेनोत्पाटयेच्छल्यं यदीच्छेद्भद्रमात्मनः ॥
ऊरौ कण्डूयमाने तु कांस्यशल्यं विनिर्दिशेत् ।
हस्तैकेन च संतिष्ठेल्लक्षणं कथितं तव ॥

---

* अस्यैव ग्रन्थस्य ६८ पृ. १ पंक्त्यां संबन्धः ।

असती च भवेद्भार्या यशोहानिश्च जायते ।
यत्नेनोत्पाटयेच्छल्यं यदीच्छेद्भद्रमात्मनः ॥
हस्ते कण्डूयमाने तु कङ्कालं च विनिर्दिशेत् ।
त्रिहस्तेन च संतिष्ठेत् खन्यमाने न चान्यथा ॥
अग्निदाहश्च रोगश्च सशल्ये मरणं ध्रुवम् ।
यत्नेनोत्पाटयेच्छल्यं यदीच्छेद्भद्रमात्मनः ॥
पृष्ठे कण्डूयमाने तु बाहुशल्यं विनिर्दिशेत् ।
हस्तेनैकेन संतिष्ठेन्नात्र कार्या विचारणा ॥
स्वामिनाशो भवेत् तत्र भार्या वा जायतेऽसती ।
पादे कण्डूयमाने तु हस्तशल्यं विनिर्दिशेत् ॥
सार्धहस्तेन संतिष्ठेल्लक्षणं गदितं तव ।
गोनाशो राजदण्डश्च सस्यहानिश्च जायते ॥
यत्नेनोत्पाटयेच्छल्यं यदीच्छेत् सिद्धिमात्मनः ।
कुक्षौ कण्डूयमाने तु पाषाणं तत्र निर्दिशेत् ॥
हस्तद्वितयमानेन लक्षणं गदितं तव ।
भुजङ्गदंशस्तत्र स्यात् तस्माच्छल्यं समुद्धरेत् ॥
जानौ कण्डूयमाने तु भस्म तत्र विनिर्दिशेत् ।
हस्तद्वयेन संतिष्ठेल्लक्षणं गदितं तव ॥
अग्निदाहो महाँ*स्तापः क्लेशदुःखभयानि च ।
करोत्येवंविधं कर्म तस्मात् तं वै समुद्धरेत् ॥
गोशृङ्गं पीतमण्डूकः शङ्खं शुक्तिश्च मण्डपः ।
शम्बूकश्च प्रशस्ताः स्युर्याश्चान्या रत्नजातयः ॥

* मनस्ताप इति २ पु. पा. ।

अङ्गारं वै तुषं केशमस्थिशल्यं विवर्जयेत् ।

अथ वा ब्रह्मयामलोक्तप्रकारेण शल्यं ज्ञात्वा तदुद्धारः कर्त्तव्यः । तत्र शल्यज्ञानं यथा ।

नवकोष्ठे कृते चक्रे पूर्वादिषु च दिक्षु च ।
व क च त ए ह स प या वर्णा लेख्या अनुक्रमात् ॥

ब्रह्मयामलोक्तशल्योद्धारचक्रम् ।

| | | |
|---|---|---|
| प | व | क |
| स | य | च |
| ह | ए | त |

प्रकारान्तरम् ।

| | | |
|---|---|---|
| प | व | क |
| स | य | च |
| ह | ए | त |

गन्धपुष्पादिनैवेद्यधूपदीपादिभिर्गृहे ।
शिशुमानीय सुस्नातं प्रष्टव्यं फलपुष्पकैः ॥
पूर्वार्धे पुष्पनाम्ना च शेषार्धे फलनामतः ।
दिनस्य शल्यं नास्त्यस्ति फलपुष्पाद्यवर्णतः ॥
कोष्ठारे पुष्पफलयोर्भवेदाद्यक्षरं यदि ।
तदा शल्यं च तत्कोष्ठे यदि तत्रास्ति नास्ति तत् ॥
सपादहस्तभूमिस्थं नृशल्यं नरनाशनम् ।
खरशल्यं सर्पशल्यं भीतिदं सार्धहस्ततः ॥
हस्तद्वये वाजिशल्यं गृहिणां मृत्युदुःखदम् ।
सार्धद्विहस्ते हस्तिशल्यं गृहशून्यप्रवासदम् ॥
श्वशल्ये महिषे मृत्युः सपादद्वयहस्तके ।
बिडालशल्यं हस्तेन त्रिहस्ते मित्रनाशनम् ॥
सार्धत्रये कपेः शल्यं दुःस्वप्नं धननाशकम् ।

वास्तुमात्रे चाखुशल्यं कुलवित्तविनाशनम् ॥
नरादिशल्यं ज्ञातव्यं वकारादावनुक्रमात् ।
यदङ्गं स्पृशते दूत*स्तदङ्गोद्भवशल्यकम् ॥
नवभागं गृहं कृत्वा तद्भागं च पुनःपुनः ।
यद्भागे पुष्पफलयोराद्यवर्णं च तत्फलम् ॥

(तत्त्वकौमुद्यां) तु

गृहारम्भे कण्डूतिश्च स्वाम्यङ्गे यत्र जायते ।
शल्यमस्तीति वक्तव्यं प्रासादे भवनेऽपि वा ॥

कवचतैहसपयाः शल्याक्षराणि । नरखरोष्ट्रशिशुमार्जारगोकपिपुरुषद्विजास्थीनि नदीपुष्पफलदेवतानां नामानि ।

शिशुसीमन्तिनीमूर्खवक्त्रात् तत्क्षणमागतम् ।
अक्षरं द्विगुणं कृत्वा मात्रां चैव चतुर्गुणाम् ॥
नवभिश्च हरेद्भागं विषमे शल्यं समे न हि ।

धरणीधारणीकरणभूत्यै नमः, इति शल्योद्धारणमन्त्र इति विशेष उक्तः । अन्यत् सर्वं ब्रह्मयामलोक्तवदिति ।

चत्वारः शल्योद्धारप्रकारा दर्शिताः । एतेषामन्यतमेन प्रकारेण शल्योद्धारं विधाय निर्दोषां भूमिं ज्ञात्वा वक्ष्यमाणप्रकारेण वास्तुयागं विधाय तत्र मण्डपं कुर्यात् । शल्योद्धारप्रकारान्तरेण भूमेः परीक्षा कर्त्तव्या तत्प्रकारश्च (प्रयोगसारे) ।

वितस्तिमात्रविस्तारं निर्माय विवरं भुवि ।
निःक्षिपेत् ता मृदस्तस्मिँस्तासु शिष्टासु शोभनम् ॥
समासु मध्यमं विद्यान्न्यूनास्वधममुच्यते ।

( गौतमीयतन्त्रे )

ततो भूमिं परीक्षेत वास्तुज्ञानविशारदः ।
शल्यादिशोधनं कुर्यात् तुषाङ्गारादि दूरयेत् ॥
एतस्याकरणे मन्त्री न किंचित् फलमाप्नुयात् ।

---

* शल्यप्रश्नकर्त्तेति ।

( महाकपिलपञ्चरात्रे )

खन्यमाने जलं यावत् शल्यदोषो विनश्यति ।
दूरनीचस्थितं वारि खनितुं नैव शक्यते ॥
पञ्चहस्तं प्रखातव्यं शल्यदोषोपशान्तये ।
शल्योद्धारं ततः कृत्वा पूरयेत् सुसमं यथा ॥
वास्तुयागं ततः कुर्यात् सर्वविघ्नोपशान्तये ।

वास्तुयागस्यावश्यकत्वमाह यमः ।

गृहादिकरणे यत्र नार्चितो वास्तुदैवतः ।
तत्र शून्यं भवेत् सर्वं रक्षोविघ्नादिभिर्हतम् ॥
तस्माद्वास्त्वर्चनं सम्यक् कार्यं सम्पदभीप्सुभिः ।

( महाकपिलपञ्चरात्रे )

भूमेः परिग्रहे पूर्वं शिलानां स्थापने तथा ।
जलाधारगृहार्थं च यतेद्वास्तुं विशेषतः ॥
अपरेष्वपि कार्येषु यागहोमादिकेषु च ।
वास्तुमण्डलकं कुर्यात् सूत्रयित्वा समं गुरुः ॥

वास्तुयागोत्पत्तिमाह (मेरुतन्त्रे)

वास्तुनामा पुरा कश्चिदसुरोऽभून्महाबलः ।
त्रैलोक्यं निर्जितं तेन त्रिपञ्चाराश्च देवताः ॥
ये रणे संमुखे यातास्तेन ते विनिपीडिताः ।
पुनःपुनर्जिता युद्धे स एवासीत् प्रजापतिः ॥
दिव्यवर्षसहस्रान्ते देवाः शरणमागताः ।
विष्णोर्मम च पार्वत्या दैत्येन्द्रेणापि तच्छ्रुतम् ॥
योद्धुकामः सोऽभ्यधावन्नारदेन प्रचोदितः ।
कृतं युद्धं तेन सार्धमस्माभिर्वर्षपञ्चकम् ॥
ततो दैत्यो मदोत्सिक्तो विष्णुमायाविमोहितः ।

उवाच वचनं तुष्टो व्रियतां व्रियतामिति ॥
नेन्द्रेण न कुबेरेण मम तोषकरं कृतम्।
ससैन्येनापि तद्युद्धं त्वया तु जटिलेन हि ॥
कृतं विष्णुसहायेन पार्वत्यर्धाङ्गधारिणा।
तेनाहं तुष्टिमापन्नस्त्रैलोक्यपरमेश्वरः ॥
अदेयं नास्ति मे किंचिद्याचयन्तु त्रयोऽपि च।
इत्याकर्ण्य वचस्तस्य शिवयोर्भ्रूप्रचोदितः ॥
हरिः प्राह महाधन्य दैत्येन्द्र त्वत्समोऽस्ति कः।
सत्यं त्रिवारं कुरुषे तदा याच्यो मया वरः ॥
शिवेनापि च पार्वत्या एक एवापरो न हि।
त्रिरुवाच ततो दैत्यस्तदा विष्णुर्व्यजिज्ञपत् ॥
यथा ते त्वरितं मृत्युः स उपायः प्रदृश्यताम्।
विष्णोश्छलमिति ज्ञात्वा दैत्येन्द्रः समभाषत ॥
अवश्यमेव गन्तव्यं सर्वैः कालमुखे हरे।
तथा च स्वप्रतिज्ञार्थं यो गच्छति स जीवति ॥
परं त्वेकं न मे वंशे यैश्च मत्सेवनं कृतम्।
तस्य मार्गं दर्शयित्वा देहोऽयं विनिपात्यताम् ॥
काले तस्मिँश्च भो देवा वागुवाचाशरीरिणी।
दैत्येन्द्र कुरु मा शोकं भूमेर्जन्म तवाभवत् ॥
तत्रैव त्वं लयं याहि त्वत्तोषार्थं वरं शृणु।
ये वर्णाः स्वस्य भोगार्थं करिष्यन्ति नवं गृहम् ॥
तत्र त्वदुत्सवमृते नानादुःखैरुपद्रुताः।
कालवर्ण्यादिका दास्यो विनायकमुखाश्च ते ॥

सेवकाः पीडयिष्यन्ति इत्याज्ञा पारमेश्वरी ।
इत्याकर्ण्य वचः सोऽपि गर्त्तं गत्वा महाबिलम् ॥
प्रविवेश ततो देवैर्मृत्पाषाणैः प्रपूरितम् ।
तेन ये निर्जिता देवाः पुनरुद्गमशङ्कया ॥
तस्यार्थं च त्रिपञ्चाशन्निवासं चक्रुरुद्यताः ।
तस्मादवश्यं ते पूज्या गृहवाससुखेच्छया ॥

अथ वास्तुयागविधिस्तत्रैव ।

शृण्वन्तु तद्विधिं देवा वामदक्षिणमार्गतः ।
पाषाणे प्रतिमायां वा वास्तोष्पते प्रतिज्ञाति ॥
इति वैदिकमन्त्रेण तस्यावाहनपूजनम् ।
नाममन्त्रेण चान्येषां पूजां कृत्वा प्रपूरयेत् ॥
नैर्ऋत्यकोणे गेहस्य चतुरस्राकृतिं शुभाम् ।
कृत्वा समतलां भूमिं वितस्त्युच्चां च वेदिकाम् ॥
विस्तारायामतो हस्तमात्रां तत्र लिखेद्बुधः ।

( महाकपिलपञ्चरात्रे ) तु विशेषः ।

गृहप्रासादकूपानां मण्डपस्य जलस्य च ।
वास्तुमण्डलकं कार्यमष्टहस्तं तु नापरम् ॥
भद्रभूमिं प्रशोध्येत दशदण्डं समालिखेत् ।
अधोऽधस्तिर्यगादौ च तेनैकाशीतिकोष्ठकम् ॥

( मेरौ )

एकाशीतिपदं चक्रं वैदिकास्तत्र दैवताः ।
मध्यकोष्ठेषु नवसु त्वादौ ब्रह्माण'मर्चयेत् ॥
आपवत्सं 'तदीशाने प्रागर्यम्णां' त्रिकोष्ठके ।
आग्नेये सवितारं"च विवस्वन्त'मवाक्त्रिषु ॥

इन्द्रं[६] नैर्ऋतदिग्भागे मित्रं[७] पश्चिमगं त्रिषु ।
वायव्ये राजयक्ष्माणं[८] सुमेरुं[९]चोत्तरत्रये ॥
वेदकोष्ठेषु चैशान्यामीशकोणाच्च देवताः ।
शिखी[१०]पर्जन्य[११] आप[१२]श्च दितिः[१३]प्राक्कोष्ठयोर्द्वयोः ॥
क्रमादेते पञ्च देवा ज्ञातव्याः सव्यमार्गतः ।
जयन्ते[१४]न्द्रौ [१५]सूर्य[१६]सत्यौ [१७]भृश[१८]आग्नेयकोणके ॥
अन्तरिक्षं[१९]तथा वातः[२०]पूषा [२१]सावित्र[२२]एव च ।
चतुष्क ईशतो देवास्ततो दक्षिणपञ्चके ॥
युग्मक्रमाच्च वितथो[२३]बृहत्क्षत्र[२४]यमौ [२५]तथा ।
गन्धर्वो[२६]भृङ्गराज[२७]श्च नैर्ऋताष्टचतुष्टके ॥
ईशानीतो जय[२८]मृगौ[२९] पितृ[३०]दौवारिकौ[३१] तथा ।
ततः पश्चाद्द्विके पञ्च सुग्रीवः[३२]पुष्पदन्तकः[३३] ॥
वरुणा[३४]सुर[३५]शोषा[३६] श्च वायव्ये ईशतस्त्वहि[३७]ः ।
रुद्र[३८]श्च पापयक्ष्मा[३९] च रोग[४०]श्चोत्तरपञ्चसु ॥
मुख्यो[४१] भल्लाट[४२]सोमौ[४३] च भुजग[४४]श्चादिति[४५]स्तथा ।
देवा एते पञ्चचत्वारिंशदर्च्यास्तु भक्तितः ॥
इद*मेकाशीतिपदं वैदिकं वास्तुमण्डलम् ।

तान्त्रिकमार्गे चतुःषष्टिपदं वास्तुमण्डलं तत्रैवोक्तम ।

अथ तान्त्रिकमार्गे तु चतुःषष्टिपदे तथा ।
कोणयोः सूत्रयुगलं मध्ये ब्रह्माणमर्चयेत् ॥

(गौतमीयतन्त्रे)

विप्राशिषा वेदघोषैर्मङ्गलाचारपूर्वकैः ।
वास्तोर्मण्डलकं कुर्याद्यथाशोभं यथाविधि ॥

---

* एतच्चक्रमग्रिमपृष्ठे विलोक्यम ।

एकाशीतिपदं वास्तुचक्रम् ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शिखी | पर्जन्यः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | अन्त-रिक्षः | वातः |
| दितिः | आपः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | सावित्रः | पूषा |
| अदितिः | अदिति | आप-वत्सः | अर्यमा | अर्यमा | अर्यमा | सविता | वितथः | वितथः |
| भुजगः | भुजगः | सुमेरुः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | बृहत्-क्षत्रः | बृहत्-क्षत्रः |
| सोमः | सोमः | सुमेरुः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | यमः | यमः |
| भल्लाटः | भल्लाटः | सुमेरुः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | गन्धर्वः | गन्धर्वः |
| मुख्यः | मुख्यः | राजय-क्ष्मा | मित्रः | मित्रः | मित्रः | इन्द्रः | भृङ्गराजः | भृङ्गराजः |
| अहिः | रुद्रः | शोषः | असुरः | वरुणः | पुष्पदन्तः | सुग्रीवः | अयः | मृगः |
| रोगः | पाप-यक्ष्मा | शोषः | असुरः | वरुणः | पुष्पद-न्तः | सुग्रीवः | दौवारि-कः | पिता |

( शारदायाम् )

पूर्वापरायतं सूत्रं विन्यसेद्धस्तमानतः ।
तन्मध्यं किंचिदालम्ब्य मत्स्यौ द्वौ परितो लिखेत् ॥
तयोर्मध्ये स्थितं सूत्रं विन्यसेद्दक्षिणोत्तरम् ।
द्वाभ्यां द्वाभ्यां तथाऽग्राभ्यां कोणेषु मकराँल्लिखेत् ॥
मत्स्यमध्ये स्थिताग्राणि तत्र सूत्राणि पातयेत्* ।
चतुरस्रं भवेत् तत्र चतुष्कोष्ठसमान्वितम् ॥
तत् पुनर्विभजेन्मन्त्री चतुःषष्टिपदं यथा ।
ईशानाद्राक्षसं यावद्यावदग्नेः प्रभञ्जनम् ॥

---

* इत्यादिना सचतुष्कोष्ठचतुरस्रं बहुधा मत्स्यादिरचनया गौरवेण प्रदर्शितम् । तत् पुनश्चतुःषष्टिविभागैर्विभज्य चतुःषष्टिपदं वास्तुचक्रमुदितम् । एतच्चक्रावलोकनतः स्पष्टमित्यलं मत्स्यादिरचनप्रपञ्चप्रदर्शनेनेति ।

एवं सूत्रद्वयं दद्यात् कर्णसूत्रं *समाहितः ।
ब्रह्माणं[1] पूजयेदादौ मध्यकोष्ठचतुष्टये ॥
दिक्चतुष्के तु पूर्वादि यजेदार्य[2]मनन्तरम् ।
विवस्वन्तं[3]ततो मित्रं[4] महीधर[5]मनन्तरम् ॥
कोणार्धकोष्ठद्वन्द्वेषु वह्न्यादि परितः पुनः ।
सावित्रं[6] सवितारं च[7] शक्र[8]मिन्द्रजयं[9] पुनः ।
रुद्रं[10] रुद्रजयं[11] विद्वानापं[12] चाऽथापवत्सकम्[13] ॥
तत्कर्णसूत्रोभयतः कोष्ठद्वन्द्वेषु दैशिकः ।
शर्वं[14] गुहं[15] चार्यमाणं[16] जृम्भकं[17] पिलपिच्छिकाम्[18] ॥
चरकीं[19] च विदारीं[20] च पूतना[21] मर्चयेत् क्रमात् ।
पूजयेद्दिक्षु पूर्वादिसार्द्धाद्यन्तपदेष्विमान् ॥
अष्टावष्टविभागेन दैवतान् दैशिकोत्तमः ।
क्रमादीशान[22]पर्जन्य[23]जयन्ताः[24]शक्र[25]भास्करौ[26] ॥
सत्यो[27]वृषा[28]न्तरिक्षौ[29] च दिशि प्राच्यां व्यवस्थिताः ।
अग्निः[30] पूषा[31] च वितथो[32] यम[33]श्च गृहरक्षकः[34] ॥
गन्धर्वो[35] भृङ्गराज[36]श्च मृगो[37] दक्षिणदिग्गताः ।
निर्ऋति[38]र्दौवारिकश्च[39] सुग्रीव[40]वरुणौ[41] ततः ॥
पुष्पदन्ता[42]ऽसुरौ[43] शोष[44] रोगौ[45] प्रत्यग्दिशि स्थिताः ।
वायु[46]र्नाग[47]श्च मुख्य[48]श्च सोमो[49] भल्लाट[50] एव च ॥
अर्गलाख्यो[51] दित्य[52]दिती[53]कुवेरस्य दिशि स्थिताः ।
देवा एते त्रिपञ्चाशत् पूजनीयाः प्रयत्नतः ॥

( हयशीर्षपञ्चरात्रे )

एकाशीतिपदं वास्तु गृहकर्मणि शस्यते ।
चतुःषष्टिपदं वास्तु प्रासादेषु प्रशस्यते ॥

---

* स्वस्थचित्त इत्यर्थः ।

चतुःषष्टिपदं वास्तुचक्रम् ।

शर्वः । पिलपिच्छिका ।

पूतना । जृम्भकः । (left side)

स्कन्दः । चरकी । (right side)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| आदितिः / ईशानः | पर्जन्यः | जयन्तः | शक्रः | भास्करः | सत्यः | वृषः | अन्तरिक्षः / अनिलः |
| अदितिः | दितिः / पर्जन्यः | जयन्तः | शक्रः | भास्करः | सत्यः | पूषा / वृषः | पूषा |
| अर्गलः | अर्गलः | आपः / आपवत्सः | आर्यमा | आर्यमा | सावित्रः / सविता | वितथः | वितथः |
| भल्लाटः | भल्लाटः | महीधरः | ब्रह्मा | ब्रह्माः | विवस्वान् | यमः | यमः |
| सोमः | सोमः | महीधरः | ब्रह्मा | ब्रह्मा | विवस्वान् | गृहरक्षकः | गृहरक्षकः |
| मुख्यः | मुख्यः | रुद्रजयः / रुद्रः | मित्रः | मित्रः | इन्द्रजयः / इन्द्रः | गन्धर्वः | गन्धर्वः |
| नागः | शोषः / नागः | असुरः | पुष्पदन्तः | वरुणः | सुग्रीवः | दौवारिकः / मृगः | भृङ्गराजः |
| रोगः / वायुः | शोषः | असुरः | पुष्पदन्तः | वरुणः | सुग्रीवः | दौवारिकः | निर्ऋतिः / पितरः |

अर्यमा विदारी ।

( मेरुतन्त्रे )

ब्रह्मस्थानं रक्तवर्णैर्दिशः पीतैर्विदिक् सितैः ।
ततो दिशस्तु हरितैर्विदिशः कृष्णवर्णकैः ॥
अरुणः परिधिः कार्यः सुन्दरं मण्डलं भवेत् ।
मध्ये पदानां नवकं मार्जयित्वा प्रपूरयेत् ॥
सितेन रजसा भूयस्तद्दिक्षु चतसृष्वपि ।
षट्कं संमार्ज्य रजसा रक्तेन परिपूरयेत् ॥
तयोर्मध्ये चतुर्दिक्षु कोष्ठं द्वादशसंख्यकम् ।

मार्जयित्वा हरिद्राद्यैर्यथाशोभं प्रपूरयेत् ।
कोणे कोणेऽष्टयुग्मं पीतवर्णेन पूरयेत् ॥
शिष्टानि च पदान्यत्र यथाशोभं प्रकल्पयेत् ।
विचित्राणि ततो मध्ये ब्रह्माणं संप्रपूजयेत् ॥

( गौतमीयतन्त्रे )

उक्तानामपि देवानां पदान्यापूर्य पञ्चभिः ।
रजोभिस्तेष्वथो तेभ्यः पायसान्नैर्वलिं हरेत् ॥
पायसैर्मधुरैः सर्वान् संयजेन्मधुरान्वितैः ।
तत्तद्द्रव्यैर्वा मतिमान् पूजयेद्दोषशान्तये ॥

( मेरुतन्त्रे )

व्रीहिमुद्गयवैः क्षौद्रघृतदुग्धप्लुतैः क्रमात् ।
अष्टोत्तरशतं वाऽष्टोत्तरविंशतिमेव वा ॥
प्रत्येकं तैर्हुनेद्द्रव्यैर्मन्त्रैस्तद्वच्च पायसैः ।
वलिं च तेषां कुर्वीत पायसैर्व्यञ्जनान्वितैः ॥
ससितैर्दुग्धकदलीफलापूपादिसंयुतैः ।
एवं सिंहगते भानौ पूर्णायां प्रतिवत्सरे ॥
स्वगेहे वास्तुपूजायां मण्डपेषु समाचरेत् ।
न बालमरणं व्याधिर्भूतप्रेतादिकानि च ॥
न सर्पपीडा नान्योन्यकलहाद्यशुभानि च ।
पुत्रपौत्रधनारोग्यं पशुदासीसमृद्धिभाक् ॥
अरोगी विजयख्यातश्चिरं जीवति तद्गृहे ।
राजवेश्मसु सर्वत्र तथा च महिषीगृहे ॥
सचिवामात्यसेनानीभवनेषु परे तथा ।
विदध्यात् प्रतिवर्षं तु प्रोक्तसिद्ध्यै तु दैशिकः ॥

न चेदुक्तान्यथारूपफलैः क्लेशोऽनिशं भवेत् ।
भैरवक्षेत्रपालानां योगिनीनां विशेषतः ॥
वामाचारैर्बलिः कार्यो महिषैर्वाऽपि कुक्कुटैः ।
आराधितास्तु वामेन जायन्तेऽतिबुभुक्षिताः ॥
देवता बलिमिच्छन्ति तद्धीनं घ्नन्ति साधकम् ।

वास्तुध्यानम् ( सोमशम्भुतन्त्रे )

आकुञ्चितकरं वास्तुमुत्तानमसुराकृतिम् ।
स्मरेत् पूजासु कुड्यादिनिवेशे त्वधराननम् ॥
जानुनीकूर्पराशक्ते दिशि वातहुताशयोः ।
पैत्र्यां पादपुटौ रौद्र्यां शिरोऽस्य हृदयेऽञ्जलिः ॥

पैत्र्यामिति । प्रकृतिमण्डले पितृदेवताधिष्ठितायां रक्षोदिशि न तु दक्षिणस्यामिति ध्येयम् ।

( महाकपिलपञ्चरात्रेऽपि )

पूर्वमासीन्महानुग्रः सर्वभूतभयङ्करः ।
स देवैर्निहतो भूमौ स वास्तुपुरुषः स्मृतः ॥
यावद्भूमिः स्थिरा लोके तावद्वास्त्वसुरः स्थिरः ।
संहारे तु लयं याति देवैः सर्वग्रहादिभिः ॥
विस्तारोऽस्य समन्ताच्च शतकोटिस्तु योजनम् ।
संस्थितोऽसौ धरां व्याप्य प्रोत्तानः कृष्णवर्णकः ॥

अत्रायं क्रमः । आदौ * यजमान आचार्यं ब्रूयात् । तत आचार्यः प्रोक्तलक्षणां भूमिं परिगृह्य तस्याः शुद्धिं विधाय पञ्चगव्यैः संसिच्य तन्मध्ये शुक्लडोरकं प्रसार्य कनकशलाकया रत्नेन रजतशलाकया वा तदभावे पुष्पफलधान्यानामन्यतमेन वा ।

शान्ता[१] यशोवती[२] कान्ता[३] विलासा[४] प्राणवाहिनी[५] ।

---

* आचार्ययजनं वृणुयात् इति २ पु. पा. ।

सती[६] वसुमती[७] नन्दा[८] सुभद्रा[९] नवमी मता ॥

इति नव रेखाः प्रागपरायता दक्षिणोपक्रमा उदगपवर्गा विलिख्य

हिरण्या[१] सुव्रता[२] लक्ष्मी[३]र्विभूति[४]र्विमला[५] प्रिया[६] ।
जया[७] काला[८] विशोका[९] च नवमी संस्कृता बुधैः ॥

इति नव रेखा दक्षिणोत्तरायताः पश्चिमोपक्रमाः पूर्वापवर्गा विलिख्यैवं चतुःषष्टिपदं वास्तुमण्डलं निर्माय पञ्चरजोभिः पदानि परिपूर्य मध्येऽष्टदलं वक्ष्यमाणरीत्या निर्माय तन्मध्ये ब्रह्माणं ध्यात्वा आवाह्य तत्तत्पदेषु तत्तद्देवता आवाह्य प्रणवादिनमोऽन्तैस्तन्नाममन्त्रैः पूजयेत्। मण्डलाद्बहिःकोष्ठेषु कोष्ठचतुष्टयमतिरिक्तं निर्माय तत्र गुरुगणेशदुर्गाक्षेत्रपालान् पूजयेत्। ऐशान्यां कलशं संस्थाप्य वरुणं यथाविधि पूजयेदिति राघवभट्टाः।

एषां ध्यानानि तन्त्रान्तरे—

उक्तानां सर्वदेवानां स्वरूपं च निगद्यते।
अक्षमालां स्रुवं दक्षे वामे दण्डकमण्डलुम् ॥
दधानमष्टनयनं यजेन्मध्येऽम्बुजासनम्।
सर्वे चतुर्भुजा देवा वास्तुदेहे व्यवस्थिताः ॥
कृताञ्जलिपुटा ऊर्द्ध्वे खड्गखेटकपाणयः।
ब्रह्माणं संनिरीक्षन्ते तद्वक्त्राभिमुखाश्च ते ॥
स्वस्वस्थानस्थिताश्चैव साधारणमुदाहृतम्।
मरीचिः श्वेतवर्णः स्याद्विवस्वानभ्रवर्णकः ॥
शातकुम्भनिभो मित्रः कृष्णावक्रस्तु भूधरः।
सविता नीलवर्णाभः सावित्रो धूम्रविग्रहः ॥
इन्दुश्चारुणवर्णाभः शुक्लश्चेन्द्रजयस्तथा।
रुद्रः प्रवालसदृशः पीतो रुद्रजयस्तथा ॥
आपो गोक्षीरधवल आपवत्सो जपाद्युतिः।
ईशानः क्षीरधवलः पर्जन्योऽञ्जनसंनिभः ॥
जयन्तोऽञ्जनसंकाशो महेन्द्रः श्यामलद्युतिः।

आदित्यो रक्तवर्णः स्यात् सत्यकश्चित्रवर्णकः ॥
वृषो बन्धूकपुष्पाभः कुन्दाभश्चान्तरिक्षकः ।
उद्यद्दिनकराभोऽग्निः पूषा रक्ताभसन्निभः ॥
वितथश्चेन्द्रचापाभो विद्युद्वर्णो गृहरक्षकः ।
निर्ऋतिः पावकाभश्च पीतो दौवारिकः स्मृतः ॥
सुग्रीवो नीलकण्ठाभश्चन्द्राभः पुष्पदन्तकः ।
वरुणः स्फटिकाभाङ्गो भृङ्गाभश्चासुरो मतः ॥
यमश्चाञ्जनसङ्काशो गन्धर्वः पद्मरागवत् ।
भृङ्गराजश्च भृङ्गाभो मृगो जीमूतसंनिभः
शोषश्चोत्पलसंकाशो रोगश्चैवेन्द्रनीलवत् ।
वायुः कृष्णाभवर्णः स्यान्नागः शेषेन्दुसंनिभः ॥
मुख्यो मौक्तिकसंकाशो भल्लाटः श्वेतपद्मवत् ।
सोमः स्फटिकसंकाशोऽर्गलो रक्तोत्पलद्युतिः ॥
दितिः कुन्देन्दुधवला कपिला चादितिः स्मृता ।
चरकी शङ्खसदृशी विदारी पावकद्युतिः ॥
पूतना हिमसंकाशा मेघाभा पिलपिञ्छिका ।
खड्गं च पानपात्रं च छुरिकां कर्त्तरीं तथा ॥
दधाना भीमरूपास्ता राक्षस्यः परिकीर्त्तिताः ।
सितो रक्तश्च पीतश्च कृष्णः स्कन्दादिका ग्रहाः ॥
वज्रं शक्तिं च खड्गं च पाशं च विकृताननाः ।
दधाना भीषणाः प्रोक्ता ग्रहाः स्कन्दादिकाश्च ते ।

एवं ध्यात्वा पञ्चोपचारैः संपूज्य वास्तुपुरुषमपि यथोक्तं ध्यात्वा वैदिकम् उक्तवैदिकमन्त्रेण तान्त्रिकमते तु ओँवास्तोष्पतये नमः इति मन्त्रेण पञ्चोपचा[रैः] संपूज्य तत्पूर्वदिशि तत्पश्चिमदिशि वा हस्तमात्रं त्रिमेखलं कुण्डं स्थण्डिलं [वा] निर्माय तत्र वक्ष्यमाणक्रमेणाग्निमुपसमाधाय मण्डलाब्जस्थादिदेवतास्तत्रावा

तेभ्यः पूर्वोक्तसंख्यया आहुतीर्हुत्वा पूर्णाहुतिं विधाय पुनर्मण्डले देवानानीय तेभ्यः प्रत्येकं वलिं दद्यात् ।

वलिमन्त्रा द्रव्यभेदाश्च ( गौतमीयमहाकपिलपञ्चरात्रयोः )

पायसौदनलाजैश्च युक्तं धूपप्रसूनकैः ।
अन्नादिभिश्च संयुक्तं माषभक्तादिमण्डितम् ॥
गृहाणेमं वलिं ब्रह्मन् वास्तुदोषं प्रणाशय ।
गन्धादिशर्करारूपं पायसोपरिसंयुतम् ॥
आर्यकाख्य गृहाणेमं सर्वदोषं प्रणाशय ।
चन्दनाद्यर्चितं नाथ कर्पूरागुरुमण्डितम् ॥
विवस्वन् वै गृहाणेमं सर्वदोषं प्रणाशय ।
सगुडं पायसं नाथ पुष्पादिसुसमन्वितम् ॥
गृहाणेमं वलिं हव्यं मित्र शान्तिं प्रयच्छ मे ।
माषौदनं समांसं च गन्धादिक्षीरसंयुतम् ॥
गृहाणेमं महीभृत् त्वं सर्वदोषं प्रणाशय ।
एवं मध्ये तु संपूज्य ईशानादि वलिं हरेत् ॥

एतेन पूजायामाग्नेयादिक्रमेऽपि वलावीशानादिक्रमः ।
अन्यत्रापि ।

ईशानाद्दक्षिणावर्त्तो वलिः सामान्यभाषितः ।
सर्वेषां खलु वस्तूनां विशेषः पदनिर्णये ॥

क्वचित् तु पूजाऽपि तथैवोक्ता ।

ईशकोणादिषु सुरान् पूजयेच्च विधानतः ।
ईशानादिचतुष्कोणसंस्थितान् पूजयेद्बुधः—इति ॥

था ।

क्षीरखण्डसमायुक्तं पुष्पादिभिरलंकृतम् ।
गृहाणेमं वलिं गृह्यमाप शान्तिं प्रयच्छ मे ॥

दधीदं गुडसंमिश्रं गन्धादिभिः सुसंयुतम् ।
गृहाणेमं वलिं वत्स विघ्नमत्र प्रणाशय ॥
पुष्पादिकुशपानीयं शर्करागुरुवासितम् ।
सावित्र वै गृहाणेमं शान्तिमत्र प्रयच्छ मे ॥
पिष्टकं सगुडं नाथ रक्तगन्धादिशोभितम् ।
गृहाणेमं वलिं सूर्य विघ्नमत्र प्रणाशय ॥
शीतमन्नं तथा पुष्पं कुङ्कुमादिसुमण्डितम् ।
गृहाणेमं वलिं गृह्य शक्रदेव नमोऽस्तु ते ॥
ओदनं घृतसंयुक्तं वस्त्रगन्धादिमण्डितम् ।
गृहाणेमं वलिं गृह्यमिन्द्रजय नमोऽस्तु ते ॥
पक्वापक्वमिदं मांसं वस्त्रपुष्पादिसंयुतम् ।
गृहाणेमं वलिं गृह्य रुद्रदेव नमोऽस्तु ते ॥
समांसं घृतसंपक्वं गन्धपुष्पादिसंयुतम् ।
गृहणेमं वलिं रुद्रजय स्वस्ति नमोऽस्तु ते ॥
रक्तपुष्पं समांसं वै रक्तवस्त्रादिसंयुतम् ।
विदारि वै गृहाणेमं रक्षोविघ्नं विनाशय ॥
पित्तरक्तास्थिसंयुक्तं रक्तगन्धाविमण्डितम् ।
गृहाणेमं पूतने त्वं रक्षोविघ्नं विनाशय ॥
सघृतं माषभक्तं च रक्तगन्धादिसंयुतम् ।
वलिं गृहाण शर्व त्वं रक्षोविघ्नं विनाशय ॥
मांसपुष्पादिसंयुक्तं माषभक्तोपशोभितम् ।
गृहाणेमं वलिं स्कन्द रक्षोविघ्नं विनाशय ॥
श्वमांसं पिष्टकैर्युक्तं पक्वमांसोदकान्वितम् ।
अर्यमन् वै गृहाणेमं सर्वविघ्नं विनाशय ॥

रक्तमांसौदनं मत्स्यं गन्धधूपसमन्वितम् ।
जृम्भक त्वं गृहाणेमं रक्षोविघ्नं विनाशय ॥
छागकर्णान्वितं मांसं वस्त्रगन्धादिसंयुतम् ।
पिलिपिच्छे गृहाणेमं रक्षोविघ्नं विनाशय ॥
घृतेन साधितं मांसं वस्त्रगन्धादिसंयुतम् ।
चरकि त्वं गृहाणेमं रक्षोविघ्नं विनाशय ॥
सघृतं सात्वतं भक्तं वस्त्रगन्धाद्यलंकृतम् ।
गृहाणेमं वलिं त्वीश वास्तुदोषापहारकम् ॥
उत्पलं पायसैर्युक्तं वस्त्रादिकसमन्वितम् ।
गृहाणेमं वलिं गृह्यं मेघराज नमोऽस्तु ते ॥
पञ्चहस्तं सुपीतं च ध्वजं भक्तादिमण्डितम् ।
गृहाणेमं वलिं गृह्य जिष्णुसुत नमोऽस्तु ते ॥
ओदनं घृतसंपूर्णं पञ्चरत्नादिमण्डितम् ।
गृहाणेमं वलिं हृद्यं देवराज नमोऽस्तु ते ॥
रक्तपुष्पयुतं भक्तं रक्तगन्धादिभिर्युतम् ।
गृहाणेमं वलिं हृद्यं भास्कराय नमोऽस्तु ते ॥
वितानं धूम्रवर्णाभं गन्धादिकसुशोभितम् ।
रक्तपुष्पं गृहाणेमं वलिं सत्य नमोऽस्तु ते ॥
इदं तु मांसभक्तं वै वस्त्रगन्धादिपूजनम् ।
गृहाणेमं वृष वलिं वास्तुदोषं विनाशय ॥
इदं तु शाद्वलं मांसं नैवेद्यादिसुसंयुतम् ।
गृहाणेमं वलिं हृद्यं व्योम शान्तिं प्रयच्छ मे ॥
सुवर्णं पिष्टकं चाथ वस्त्रगन्धादिभिर्युतम् ।

घृतान्वितं गृहाणेमं सप्तजिह्व नमोऽस्तु ते ॥
क्षीरं लाजासमायुक्तं गन्धपुष्पादिसंयुतम् ।
गृहाणेमं बलिं हृद्यं पूषदेव नमोऽस्तु ते ॥
मांसौदनं गन्धमाल्ययुतं वस्त्रादिभूषितम् ।
वितथेश बलिं गृह्णन् वास्तुदोषं विनाशय ॥
मत्स्यमांसयुतं भक्तं गन्धपुष्पाद्यलंकृतम् ।
यमराज गृहाणेमं बलिं शान्तिं प्रयच्छ मे ॥
पक्वमांसौदननवनीतं वस्त्रादिमण्डितम् ।
गृहाणेमं प्रीतिकरं गृहरक्ष नमोऽस्तु ते ॥
नानागन्धसमायुक्तं रक्तगन्धादिभिर्युतम् ।
बलिं गृहाण गन्धर्व सर्वदोषं प्रणाशय ॥
इमां तु शाकुनीं जिह्वां माषभक्तोपरिस्थिताम् ।
गृहाणेमं भृङ्गराज बलिं शान्तिं प्रयच्छ मे ॥
एवं तिलघृतोपेतं गन्धपुष्पादिभिर्युतम् ।
गृहाणेमं बलिं हृद्यं मृगदेव नमोऽस्तु ते ॥
शर्करामण्डितं खण्डं वस्त्रगन्धाद्यलंकृतम् ।
प्रीतो बलिं गृहाणेमं रक्षोराज नमोऽस्तु ते ॥
चन्दनागुरुकाखण्डं वस्त्रगन्धादिभिर्युतम् ।
गृहाणेमं बलिं हृद्यं दौवारिक नमोऽस्तु ते ॥
इदं तु पायसं नाथ गन्धपुष्पादिमिश्रितम् ।
सुग्रीव वै गृहाणेमं बलिं शान्तिं प्रयच्छ मे ॥
यवाग्वलंकृतं दुग्धं भक्तोपरिसमन्वितम् ।
गृहाणेमं बलिं हृद्यं जलदेव नमोऽस्तु ते ॥

माषभक्तं कुशस्तम्बं घृतगन्धादिसंयुतम् ।
पुष्पदन्त गृहाणेमं वास्तुदोषं प्रणाशय ॥
मधुना साधितं पिष्टं गन्धाद्यैरुपशोभितम् ।
वलिं गृहाणासुरेन्द्र सर्वदोषं प्रणाशय ॥
घृतं चान्नसमायुक्तं कर्पूरादिसमायुतम् ।
गृहाणेमं वलिं शोष सर्वशान्तिं प्रयच्छ मे ॥
यवजं तण्डुलं नाथ गन्धपुष्पादिशोभितम् ।
गृहाणेमं वलिं रोग सर्वदोषं प्रणाशय ॥
सघृतं मोदकं * चेदमन्नाद्यैरुपशोभितम् ।
गृहाणेमं वलिं हृद्यं मृगवाह नमोऽस्तु ते ॥
इदं तु कृसरान्नं मे दुग्धगन्धादिसाधितम् ।
पातालेश गृहाणेमं विघ्नमत्र प्रणाशय ॥
नारिकेलोदकं भक्तं पीतवस्त्रादिसंयुतम् ।
गृहाणेमं वलिं मुख्य वास्तुदोषं प्रणाशय ॥
दधिगन्धादिभिर्युक्तं पीतपुष्पसमन्वितम् ।
वलिः प्रगृह्यतां सोम सर्वदोषं प्रणाशय ॥
ओदनं घृतसंमिश्रं गन्धपुष्पसमन्वितम् ।
गृहाणेमं वलिं गृह्यं भल्लाटक नमोऽस्तु ते ॥
माषान्नं तु घृताभ्यक्तं गन्धपुष्पादिमण्डितम् ।
गृहाणेमं वलिं हृद्यमर्गलाख्य नमोऽस्तु ते ॥
क्षीरखण्डसमायुक्तं नानापुष्पोपशोभितम् ।
दैत्यमातर्गृहाणेमं सर्वदोषं प्रणाशय ॥

---

* मण्डकमिति २ पु. पा.

पौरिकां मधुसंमिश्रां वस्त्रगन्धादिसंयुताम् ।
गृहाणेमं वलिं गृह्यं देवमातर्नमोऽस्तु ते ॥
स्वर्गपातालमर्त्येषु देवता वास्तुदेवताः ।
गृह्णन्त्विमं वलिं हृद्यं तुष्टा यान्तु स्वमन्दिरम् ॥
मातरो भूतवेताला ये चान्ये वलिकाङ्क्षिणः ।
विष्णोः पारिषदा ये च तेऽपि गृह्णन्त्विमं वलिम् ॥
पितृभ्यः क्षेत्रपालेभ्यो वलिं दत्वा प्रकामतः ।
अभावादुक्तमार्गस्य कुशपुष्पादिभिर्यजेत् ॥

( प्रयोगसारे )

वास्तुशेषः क्रियापूतः सर्वरक्षाविधानकृत् ।
भूतिप्रीतिकरश्चास्मिन् दिशां वलिमुदीरयेत् ॥
दिक्पालपरिषत्सर्वभूतानुद्दिश्य नामभिः ।
पूजाविसर्जनान्तो यः स विज्ञेयो दिशो वलिः ॥
दध्यम्बुरजनी * पुष्पलाजसक्तुतिलान्धसा ।
द्रव्येण वितरेद्दिश्यं वलिं दिक्क्रमयोगतः ॥
सुराणां तेजसां चैव प्रजानां रक्षसामपि ।
तथा जलानां प्राणानां नक्षत्राणां च तत्पुनः ॥
विद्यानामधिपानां च नान्यथोक्तान् वलिं हरेत् ।
सवाहनपदं प्रोक्ता परिवाराय शक्तये ॥
तत्पार्षदेभ्यश्च ततः सर्वेभ्य इति संयुतः ।
भूतेभ्यश्च क्रमाद्भूयः प्रादक्षिण्यान् क्षिपेद्वलिम् ॥
द्विषत्पिशाचवेतालरक्षोरक्षार्थिनामिह ।

---

* हरिद्रा ।

दिशां वलिर्विशेषेण सर्वसंपत्समृद्धिदः ॥
वास्तौ गृहप्ररोहे भूतद्रोहे गृहप्रवेशे च ।
वितते च शान्तिहोमे दिशां वलिः सिद्धये प्रयोक्तव्यः ॥

इति वलिं दत्वा पुनस्तान् समभ्यर्च्य यथाशक्ति जप्त्वा स्तुत्वा प्रणम्य विसर्जयेत् ।

विसर्जनमन्त्रो यथा ।

यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।
इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥

इति देवान् विसृज्य कुद्दालं पूजयेत्

तदुक्तं तन्त्रान्तरे ।

भद्रं मुहूर्त्तमाश्रित्य खन्यतां वास्तुकोष्ठकम् ॥
स्वर्णकुद्दालरूप त्वं भूमेः खननकर्मणि ।
विश्वकर्मायुधो नित्यं नमस्ते चास्त्रमूर्त्तये ॥

इति स्वर्णकुद्दालं प्रपूज्य खनितृपुरुषं विश्वकर्मधिया पूजयेत् ।

द्विभुजः पीतदेहस्तु जटाधारी कजासनः ।
विश्वकर्मा सदा गौरो ज्ञानमुद्राक्षसूत्रभृत् ॥
विश्वकर्मन् जगद्व्यापिन् संसारसृष्टिकारक ।
अत्र कुद्दालहस्तस्त्वं विश्वकर्मन्नमोऽस्तु ते ॥
एकाशीतिकोष्ठभेदे वास्तौ विश्वात्मकर्मक ।
कुद्दालं गृह्यतामत्र खननं कुरु साम्प्रतम् ॥

इति तद्धस्ते कुद्दालं दक्षिणां च दद्यात् । ततः पृथिवीं प्रार्थयेत् ।

कुद्दालदारितैरत्र कीटकोटिशतैरपि ॥
क्षम्यतां पृथिवीदेवि विष्णुस्थापनहेतवे ।

इति पृथ्वीं संप्रार्थ्य विश्वकर्मात्मकखनितृपुरुषो वास्तुपुरुषस्य कक्षान्तरे खननं कुर्यात् ।

तदुक्तं तन्त्रान्तरे ।

शुभाशुभानि वास्तूनां क्रमेणैव वदाम्यहम् ।
कक्षान्तरे च नित्यं च सर्वत्र भद्रमादिशेत् ॥
शीर्षे चैव भवेन्मृत्युः कण्ठे वै दुःखभागिता ।
हस्ते चौरभयं विद्यादुरसा पशुनाशनम् ॥
जानौ विदेशगमनं पादाभ्यां च निरर्थकम् ।
वामदक्षिणमित्येवं वास्तुक्षेत्रमुदीरितम् ॥
निपुणः कारयेन्मन्त्री कल्याणं पूर्णताकृतम् ।
समाहितमना भूत्वा खनयेद्वास्तुकक्षके ॥

इति वास्तुयागविधिः ।

अथ दीक्षोपयुक्तमण्डपनिर्णयः ।

तत्रादौ मण्डपरचनार्थं पूर्वादिदिग्ज्ञानोपायः ।

तदुक्तम् ( क्रियासारे )

कृत्वा भूमिं समां तत्र वृत्तं हस्तमितं समम् ।
द्वादशाङ्गुलमानोच्चं शङ्कुं खादिरनिर्मितम् ॥
अलाभे यज्ञवार्क्षं वा तत्र संस्थापयेत् सुधीः ।
तच्छाया संस्पृशेद्यत्र तन्मध्ये मध्यमं स्मृतम् ॥
तिर्यक् प्रसारयेत् सूत्रं मध्ये याम्योत्तरे स्मृते ।
कोणाः स्युरन्ये चत्वारश्चतुःसूत्रप्रसारणात् ॥
एवं मानपरिज्ञानं समाख्यातं यथा स्फुटम् ।
ज्ञात्वैवं मण्डपादीनि कुर्यात् सम्यग्विचक्षणः ॥

( महाकपिलपञ्चरात्रे )

विषुवे तु गते सूर्ये शङ्कुमानं समाचरेत् ।
खादिरं विन्यसेच्छङ्कुं द्वादशाङ्गुलविस्तृतम् ॥
निश्चलीकृत्य हन्तव्यं गृहीत्वा लोहमुद्गरम् ।
अष्टधा च स्वयं हन्यात् प्रशस्तं क्रमतो लघु ॥

हन्यमाने यदा शङ्कौ हस्तात् पतति मुद्गरः ।
तदा ताडयितुः शोको जायते दुस्तरो महान् ॥
मौञ्जं कार्पासकौशेयं प्राणिवालजमेव च ।
चतुर्यवपरीणाहं सूत्रं शङ्कौ तु वेष्टयेत् ॥
वेष्ट्यमानं यदा सूत्रं शङ्कुं मुञ्चति तत्क्षणम् ।
पुत्रस्य मरणं विद्याच्छिन्ने वै स्वविनाशनम् ॥
तत्रापि नारसिंहेन होमेनाशुभनाशनम् — इति ।

( शारदायाम् )

नक्षत्रराशिवाराणामनुकूले शुभेऽहनि ।
ततो भूमितले शुद्धे तुषाङ्गारादिवर्जिते ॥
पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम् ।
पञ्चभिः सप्तभिर्हस्तैर्नवभिर्वामिनां वरम् ॥

अत्र यथाश्रुतव्याख्याने कुण्डाष्टकवेद्यृत्विक्प्रचारस्थलाद्यनुपपत्त्या पञ्चभिः सप्तभिरित्यनेन द्वादशहस्तः पञ्चभिर्नवभिरित्यनेन चतुर्दशहस्तः सप्तभिर्नवभिरित्यनेन च षोडशहस्तो मण्डप इति राघवभट्टैः पदार्थादर्शे व्याख्यातम् । ताराभक्तिसुधार्णवे नृसिंहठक्कुरैरपि तथैवोक्तम् । एतेन द्वादशहस्तः कनीयान्, चतुर्दशहस्तो मध्यमः, षोडशहस्तश्चोत्तम इति त्रिविधो मण्डप उक्तः । तदुक्तम् ( प्रतिष्ठासारसंग्रहे )

स्वल्पो द्वादशहस्तोऽयं द्विद्विवृद्ध्या ततः क्रमात् ।

यत् तु

राज्ञां होमाभिषेकादिप्रयोगार्थं तु मण्डपम् ।
विदध्यान्नवहस्तेन विस्तारायामसंयुतम् ॥

इति ( तन्त्रराजवचनम् ) तद्दीक्षातिरिक्तकर्मोपयुक्तमण्डपपरम् ।

( सिद्धान्तशेखरे )

स्थूलादर्काङ्गुलोच्छ्रायं मण्डपस्थलमीरितम् ।

( महाकपिलपञ्चरात्रे तु )

उच्छ्रायो हस्तमानं स्यात् सुसमं च सुशोभनम् —इत्युक्तम्।

( शारदायाम् )

षोडशस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः ।

अष्ट हस्ताः समुच्छ्रायाः संस्थाप्या द्वादशाभितः ॥

पञ्चहस्तप्रमाणास्ते निश्छिद्रा ऋजवः शुभाः ।

तत्पञ्चमांशं निखनेन्मेदिन्यां तन्त्रवित्तमः ॥

( वास्तुशास्त्रे )

पञ्चमांशं न्यसेद्भूमौ सर्वसाधारणो विधिः ।

( शारदायाम् )

नारिकेलदलैर्बाह्ये छादयेत् तत्समन्ततः ।

नारिकेलदलैरित्युपलक्षणम् ।

तथा च ( मेरुतन्त्रे )

नारिकेलदलैर्वंशैः कटैराच्छादयेत् पुनः ।

झञ्झामारुतवृष्ट्यादिभयं न स्याद्यथा तथा ॥

( वास्तुशास्त्रेऽपि )

कटैः सद्भिस्तु संछाद्या विजयाद्यास्तु मण्डपाः—इति।

स्तम्भनिवेशनं चाग्नेयादिक्रमेण कार्यम् ।

स्तम्भोच्छ्राये शिलान्यासे सूत्रयोजनकीलके ।

खननावटसंस्कारप्रारम्भो वह्निगोचरे —इति वचनात्॥

( सिद्धान्तशेखरे )

मध्ये स्तम्भचतुष्कं स्यात् तन्मध्ये वेदिका मता ।

वेदीकोणेषु विन्यस्य स्तम्भान् वेदस्वरूपकान् ॥

( पञ्चरात्रे )

सारदारुभवान् स्तम्भान् दृढान् कुर्यादृजून् समान् ।

( क्रियासारे )

याज्ञीयवृक्षो वेणुर्वा क्रमुकः स्तम्भकर्मणि ।

अन्ये विशुद्धवृक्षा वा भवेयुर्नापभूरुहः ॥

गृहशल्यः स्वयं शुष्कः कुटिलश्च पुरातनः ।

असौम्यभूमिजनितः संत्याज्यः स्तम्भकर्मणि ॥

( मन्त्रमुक्तावल्याम् )

दिक्षु द्वाराणि चत्वारि विदध्यात् पञ्चमांशतः ।

( पञ्चरात्रे )

कनीयसि स्याद्द्विकरं चतुरङ्गुलवृद्धितः ।

मध्यमोत्तमयोर्द्वारमिति पश्येन्मनोहरम् ॥

( सोमशम्भुमते )

प्लक्षोदुम्बरिकाश्वत्थवटजास्तोरणाः क्रमात् ।

पूर्वादितो विधातव्या यद्वाऽऽद्यन्तविपर्ययः ॥

अलाभादेकमेवैषां सर्वाशासु निवेशयेत् ।

( सिद्धान्तशेखरे )

एकमेषामलाभे स्यात् तदभावे शमीद्रुमः ।

जम्बूः खदिरसारश्च तालो वा तोरणे स्मृताः ॥

( महाकपिलपञ्चरात्रे )

देवास्तोरणरूपेण संस्थिता यज्ञमण्डपे ।

विघ्नविध्वंसनार्थं च रक्षार्थं त्वध्वरस्य च ॥

न्यसेन्न्यग्रोधमैन्द्र्यां तु याम्यां चोदुम्बरं तथा ।

वारुण्यां पिप्पलं चैव कौबेर्यां प्लक्षकं न्यसेत् ॥

सुशोभनं तु पूर्वस्यामृग्वेदादिसुमन्त्रितम् ।

इषे त्वेति च मन्त्रेण सुभद्राख्यं तु दक्षिणे ॥

सुकर्माख्यं तु वारुण्यां सामवेदादिकेन तु ।

शन्नो देवीति मन्त्रेण सुहोत्रं तूत्तरे न्यसेत् ॥

ऋग्वेदादीति । अग्निमीळे पुरोहितमिति मन्त्रेणाभिमन्त्रितमित्यर्थः । सामवेदादिकेन अग्न आयाहीति मन्त्रेण ।

( शारदायाम् )

द्वारेण तोरणानि स्युः क्रमात् क्षीरमहीरुहाम् ।
स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक् ॥
दशाङ्गुलप्रमाणेन तत्परीणाह ईरितः ।
तिर्यक्फलकमानं स्यात् स्तम्भमानार्धमानतः ॥
शूलानि कल्पयेन्मध्ये तोरणे हस्तमानतः ।

सप्तहस्तै*रित्यधममण्डपपक्षे ।

तदुक्तम् ( वास्तुशास्त्रे )

पञ्चहस्तप्रमाणास्ते विस्तारेण द्विहस्तकाः ।
षडङ्गुलादिवृद्ध्या तु सप्तहस्तास्तथोत्तमे ॥

षडङ्गुलादीति । तेनाधममण्डपे तोरणस्तम्भयोरन्तरालभूमिर्द्विहस्ता । मध्यमे षडङ्गुलाधिकद्विहस्ता । उत्तमे द्वादशाङ्गुलाधिकद्विहस्ता । एतेन मण्डपतिर्यक्फलकमानमप्युक्तं भवति । अधमोत्तमयोः पञ्चहस्तसप्तहस्तोच्छ्रायकथनान्मध्यमे षड्ढस्तोच्छ्रायतोक्ता भवतीति सुधार्णवकृतः । शूलादि कल्पयेदिति । त्रिशूलविन्यासः शैवशाक्तादौ । वैष्णवे तु विशेष उक्तः ।

( मेरुतन्त्रे )

वैष्णवे द्वादशांशेन शङ्खचक्रगदाम्बुजान् ।
प्रागादिक्रमयोगेन न्यसेत् सौरोऽपि वैष्णवः ॥

( शारदायाम् )

दिक्षु ध्वजान्निबध्नीयाल्लोकपालसमप्रभाम् ।
वितानदर्भमालाद्यैरलंकुर्वीत मण्डपम् ॥

( प्रतिष्ठासारसंग्रहे )

पीतरक्तादिवर्णाश्च पञ्चहस्ता ध्वजा स्मृताः ।
द्विपञ्चहस्तैर्दण्डैस्ते वंशजैः संयुता समाः ॥

द्विपञ्चहस्तैर्दशहस्तैः

---

* रित्युपमण्डपपक्षे । इति. २ पु. पा. ।

अन्यत्रापि ।

पञ्चहस्ता ध्वजाः कार्या वैकल्पे तु द्विहस्तकाः ।
दण्डश्च दशहस्तश्च दशदिक्षु च तान् न्यसेत् ॥

(हयशीर्षपञ्चरात्रे)

दर्पणैश्चामरैर्घण्टैस्तम्भान् वस्त्रैर्विभूषयेत् ।
कलशैर्घण्टिकाभिश्च साधारैः कर्करैस्तथा ॥

तत्र प्रतितोरणमेकैकः कलशः स्थाप्यः । प्रतिद्वारपार्श्वे द्वौ द्वौ । प्रतिकोणं चैकैकः ।

तदुक्तम् ।

गन्धपुष्पाम्बरोपेतान् कुम्भाँस्तेषु विनिःक्षिपेत् ।

तेषु तोरणेषु ।

ध्रुवं धरां वाक्पतिं च विघ्नेशं तेषु पूजयेत् ।
मण्डपस्य तु कोणस्थकलशेषु क्रमादमी ॥
अमृतो दुर्जयश्चैव सिद्धार्थो मङ्गलस्तथा ।
पूजाद्वारस्थकुम्भेषु शक्राद्यास्तन्मनूत्तमैः ॥

अन्यत्रापि ।

मण्डपे कलशौ द्वौ द्वौ द्वारे द्वारे निवेशयेत् ।
गालितोदकसंपूर्णावाम्रपल्लवशोभितौ ॥

(शारदायाम्)

तत्त्रिभागमिते क्षेत्रेऽरत्निमात्रसमुच्छ्रिताम् ।
चतुरस्त्रां ततो वेदीं मण्डलाय प्रकल्पयेत् ॥

(त्रिपुरासारसमुच्चये)

चतुर्द्वारयुक्तं ततस्तस्य मध्ये
बुधस्तत्त्रिभागैकभागेन वेदीम् ।
अरत्निप्रमाणोन्नतां दर्पणान्त-
र्निभायां मनोहारिणीं चापि कुर्यात् ॥

अत्रारत्निमात्रोन्नतां हस्तमात्रसमुच्छ्रिताम् ।

R

तैश्चतुर्भिर्भवेन्मुष्टिर्वितस्तिस्तैस्त्रिभिर्गुणैः ।
अरत्निस्तद्द्वयेन स्याद्धस्तस्तद्वदतः शिवे ॥

इति मन्त्रराजवचनादरत्निहस्तशब्दयोः पर्यायतोक्तेति सुधार्णवकृतः ।
( क्रियासारेऽपि )

त्रिभागं मण्डपं कृत्वा मध्यभागे तु वेदिका ।
हस्तमानं तदुत्सेधश्चतुरस्रं समं यथा ॥

( मेरुतन्त्रे )

त्रिधारं वामदीक्षायां शङ्खाभं वैष्णवे मखे ।
चतुरस्रा चतुष्कोणा वेदी सर्वफलप्रदा ॥

तत्रैव ।

मण्डपोपरि बध्नीयादतिश्वेतं वितानकम् ।
अलंकुर्यात् पुष्पमालादिभिरेनं तु वेष्टयेत् ॥
आम्राश्वत्थदलोत्पन्नयुक्तया दीर्घमालया ।
स्तम्भान् दुकूलैः संवेष्ट्य मध्ये कुर्याच्च वेदिकाम् ॥
इष्टिकाभिरपक्वाभिर्हस्तविस्तृतपिण्डिकाम् ।
मण्डपायामरुद्रांशनवसप्तेषुरामकैः ॥
अंशैः समुन्नतां वाऽपि तारतम्यं विलोक्य च ।
सामग्र्यादेः समावेशो यथा स्यादिति मण्डपः ॥

इति मण्डपलक्षणम् ।

अथ* कुण्डानि ।

( शारदायाम् )

प्राक्प्रोक्ते मण्डपे विद्वान् वेदिकाया बहिस्त्रिधा ।
क्षेत्रं विभज्य मध्यांशे पूर्वादि परिकल्पयेत् ॥
अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमात् ।
चतुरस्रं योनिमर्धचन्द्रं त्र्यस्रं च वर्तुलम् ॥

---

* एतच्चित्राणि १३७-१३८ पृष्ठयोर्विलोक्यानि ।

षडस्रं पङ्कजाकारमष्टास्रं तानि नामतः ।
आचार्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोः ॥

( त्रिपुरासारसमुच्चयेऽपि )

वेदास्रं[1] योनि[2]मर्धोडुपनिभ[3]मनलास्रं[4] सुवृत्तं[5] षडस्रं[6]
पद्माकारं[7] गजास्रं[8] हरिहरहरिदारभ्य तस्यां विदध्यात् ।
मध्ये वृत्तं च गौरीपतिसुरपदिशोः पण्डिताः केचिदूचु-
र्वायव्ये पञ्चकोणं[9] दिशि मदनरिपोः सप्तकोणं[10] च कुण्डम् ॥

क्रमेणैषां लक्षणानि तत्रैव ।

प्राक् सूत्रं प्रथमं निधाय विदधीतार्धेन तस्याङ्कितं
मध्ये मत्स्ययुगं दिशोरमलधीः कीनाशवित्तेशयोः ।
ताभ्यां सूत्रमपि प्रसार्य चतुरः कोणाँस्ततो लाञ्छयेत्
क्षेत्रं स्याच्चतुरस्रमत्र रचयेदन्यानि कुण्डान्यपि ॥

क्षेत्रे क्षिप्त्वा बहिरिह च पुरो भूतभागांशमेकं
कोणार्धार्धे सुनिशितमतिर्भ्रामयेत् संप्रगृह्य ।
यावत्कोणं परमपि तथा सूत्रयुग्मस्य पातं
मध्ये कुर्याद्भवति तदिदं मन्मथावासकुण्डम् ॥

परित्यज्य भागद्वयं पङ्क्तिभागी-
कृतेऽत्रोपरिष्टादधस्ताच्च विद्वान् ।
परिभ्रामयेत् तेन मानेन सम्यग्-
भवेदर्धचन्द्राह्वयं कुण्डमेतत् ॥

शर्वरीशार्धभागीकृतक्षेत्रतः
पार्श्वयोर्न्यस्य भागद्वयं पण्डितः ।
तेन मानेन सूत्रद्वयं विन्यसेत्
कुण्डमेतद्भवेदुद्रनेत्रास्रकम् ॥

दिग्गजाभ्यधिकपङ्क्तिभागतः क्षेत्रतो निशितधीर्बहिर्न्यसेत्।
भागमेककमनेन सर्वतो भ्रामयेद्भवति वृत्तमुत्तमम् ॥
भूयांसेंशद्वयमिह बहिः पार्श्वयोर्न्यस्य मध्यात्
क्षेत्राभ्यांसे तु विमलमतिस्तेन मानेन कृत्वा ।
पार्श्वद्वन्द्वे झषयुगयुगं सूत्रषट्कस्य पातं
कुर्यात् कुण्डं भवति तदिदं तर्ककोणं मनोज्ञम् ॥
दशांशेऽत्र विन्यस्य बाह्येंशमेकं
परिभ्राम्य तेनैव वृत्तं दलानाम् ।
बहिर्मध्यमे कर्णिकां चापि कुर्याद्-
भवेदष्टपत्रं बुधः पद्मकुण्डम् ॥
क्षेत्रे क्षिप्त्वाऽत्र बाह्ये दिशि दिशि मिहिरद्वन्द्वकांशेंशमेकं
कृत्वा नेत्राब्धिकोणं पुनरपि मतिमान् कोणतोऽर्धं गृहीत्वा।
तत्कोणाभ्यां विदध्यादिह खलु परितस्तेन मानेन चिह्ना
न्यष्टास्रं स्यात् समन्तादपि च वितनुयादष्टसूत्रप्रयोगम्।
हयांशेऽत्र भागे बहिर्न्यस्य वृत्तं
परिभ्राम्य भूयो युगांशीकृतांशैः ।
त्रिभिः पट्टदीर्घे भवेत् पञ्चसूत्रं
प्रयोगादिदं तेन पञ्चास्रकुण्डम् ॥
क्षेत्रव्यासैर्दशांशैर्बहिरिह विनिधायैकमंशं सुवृत्तं
मानेनानेन कृत्वा पुनरपि च चतुःषष्टिभागीकृतेऽत्र ।
पट्टायामप्रमाणं दृढमतिरमुना सत्रिकैस्त्रिंशदंशैः
कुर्यात् सप्तास्रकुण्डं भवति हि तदिदं सप्तसूत्रप्रयोगात् ॥

अत्र चतुर्विंशत्यङ्गुलानि हस्तमात्रकुण्डस्य व्यासः ।
तदुक्तम् ( शारदायाम् )

चतुर्विंशत्यङ्गुलाद्यं हस्तं यन्त्रविदो विदुः ।
कर्त्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः ॥
मध्यस्य दैर्घ्यमानेन मानाङ्गुलमुदाहृतम् ।

तन्त्रान्तरे ।

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणञ्चाप्त्रसरेणुं प्रचक्षते ॥
त्रसरेणवस्ते त्वष्टौ बालाग्रं तत् स्मृतं बुधैः ।
बालाग्राण्यष्ट लिक्षा तु यूका लिक्षाष्टकं स्मृतम् ॥
अष्टौ यूका यवं प्राहुरङ्गुलं तु यवाष्टकम् ।
हस्तश्चतुर्विंशतिभिरङ्गुलैः समुदाहृतम् ॥

द्विहस्तादौ तद्द्विगुणादिवृद्धिप्रकारस्तु एकहस्तकुण्डकोणसूत्रेण द्विहस्तकु-डमध्यसूत्रमेवं तत्कोणसूत्रेण चतुर्हस्तकुण्डमध्यसूत्रमवगन्तव्यम् । एवमग्रेऽपि । ातुक्तम् ( गौतमीयतन्त्रे )

कर्णसूत्रप्रमाणेन द्विहस्तं कुण्डमुद्धरेत् ।
सर्वकुण्डेषु सर्वत्र वर्धयेद्विधिनाऽमुना ॥

अत्र कर्णसूत्रपदं कोणसूत्रपरम् ।

तदुक्तं तत्रैव ।

पूर्वपूर्वस्य कुण्डस्य कोणसूत्रं तु यद्भवेत् ।
उत्तरोत्तरकुण्डानां मानं तद्वदुदीरितम् ॥

एतेन द्विहस्तकुण्डस्य चतुस्त्रिंशदङ्गुलानि व्यासः । एकचत्वारिंशदङ्गुलानि ञ्च यवाश्च त्रिहस्तस्य । अष्टचत्वारिंशदङ्गुलानि चतुर्हस्तस्य । त्रिपञ्चाशदङ्गु-ानि षड्यवाश्च पञ्चहस्तस्य । अष्टपञ्चाशदङ्गुलानि सप्त यवाश्च षड्ढस्तस्य । ाषष्टिरङ्गुलानि चत्वारो यवाश्च सप्तहस्तस्य । सप्तषष्टिरङ्गुलानि सप्त यवाश्चा-हस्तस्य । द्वासप्ततिरङ्गुलानि नवहस्तस्य । पञ्चसप्ततिरङ्गुलानि सप्त यवाश्च ाहस्तस्य । एकहस्तकुण्डस्य क्षेत्रफलं तु षट्सप्तत्यधिकपञ्चशताङ्गुलानि । एवं हस्तादावपि बोद्धव्यम् । यद्यपि हस्तमात्रकुण्डस्यैव दीक्षोपयुक्तत्वेन द्विह-तादिकुण्डानि दीक्षायामनुपयुक्तानि तथा च वक्ष्यमाणपुरश्चरणाङ्गहोमे उपयु-यन्त इति प्रदर्शितानि ।

खातमानं मेखलालक्षणं च ( त्रिपुरासारसमुच्चये )

यावन्मानं कुण्डविस्तार उक्तं
तावत् खातस्यापि मानं प्रदिष्टम् ।
कुण्डाकारं पण्डितो यादृशं तत्
तादृग्रूपं मेखलायां विदध्यात् ॥

एतावत्कुण्डकरणाशक्तस्तु पञ्चकुण्डानि कुर्यात् । तत्राप्यशक्तस्तु एकमेव कुण्डं कुर्यात् ।

नव पञ्चाथ चैकं वा कर्त्तव्यं लक्षणान्वितम् ।

इत्याम्नायरहस्यवचनात् ।

अष्टाशक्तौ तु चत्वारि दिक्षु कुण्डानि तान्त्रिके ।
तदशक्तावेकमेव चतुरस्रं प्रकल्पयेत् ॥ इति (मेरुतन्त्रवचनाच्च)

पञ्चकुण्डपक्षे तन्निवेशनम् ( ज्ञानरत्नावल्यामुक्तम् )

दिक्षु वेदास्रवृत्तानि पञ्चमं त्वीशगोचरम् ।

इत्येककुण्डपक्षे तन्निवेशनमुक्तमाचार्यैः ।

अथ वा दिशि कुण्डमुत्तरस्यां
प्रविदध्याच्चतुरस्रमेकमेव—इति ।

( पिङ्गलामते )

कुण्डमेककरं वृत्तं मेखलाकण्ठनाभिमत् ।
नित्ये कर्मणि दीक्षायां शान्तौ पुष्टौ मतं शुभम् ॥

कण्ठमानमाह ( महाकपिलपञ्चरात्रे )

चतुर्विंशतिभागेन कण्ठो वै परिकीर्त्तितः ।
खाताद्बाह्येऽङ्गुलः कण्ठः सर्वकुण्डेष्वयं विधिः ॥
चतुर्विंशतिमं भागमङ्गुलं परिकल्पयेत् ।
तिस्रः कुण्डे मेखला मेखले द्वे
यद्वा चैकां मेखलां वै प्रकुर्यात् ।
कुर्यादूर्ध्वं मेखलाया गजोष्ठा-
कारां योनिं चापि होतुर्दिशीह ॥

एतेन योनेः कुण्डाङ्गत्वमुक्ता तस्याः आनस्वरूपदिङ्नियमाश्चोक्ताः ।
( क्रियासारे )

नाभियोनिसमायुक्तं कुण्डं श्रेष्ठं त्रिमेखलम् ।
कुण्डं द्विमेखलं मध्ये नीचं स्यादेकमेखलम् ॥

( सोमशम्भौ )

त्रिमेखलं द्विजे कुण्डं क्षत्रियस्य द्विमेखलम् ।
मेखलैका तु वैश्यस्य .... .... .... इति ॥

कुण्डतारतम्यतो मेखलातारतम्यमुक्तम् ।
( त्रिपुरासारसमुच्चये )

मुष्टिमात्रे तु तां मेखलां द्व्यङ्गुलैका-
ङ्गुलार्धाङ्गुलोत्सेधताराः क्रमात् स्युः ।
रत्निमात्रे तु तास्त्र्यङ्गुलार्धाङ्गुलैका-
ङ्गुलोत्सेधतारा भवेयुः पुरस्तात् ॥
युगा*ग्निपित्तनेत्राङ्गुलोत्सेधताराः
स्युरेताः क्रमाद्धस्तमात्रे तु कुण्डे ।
करद्वन्द्वमात्रे रसाम्भोधिवह्नय-
ङ्गुलोत्सेधतारा भवेयुः पुरस्तात् ॥
वेदकरेऽस्मिन् सिन्धुरतर्का
द्व्यङ्गुलतारोत्सेधयुताः स्युः ।
षट्करगात्रेऽस्मिन् दशकर्य-
ङ्काङ्गुलतारोत्सेधसमेताः ॥
भास्करपङ्क्तिगजाङ्गुलतारो-
त्सेधयुताः स्युरिमा वसुहस्ते ।
नाभिमिहाम्बुजमेव विदध्या-
दष्टदलं सहकर्णिकयाऽन्तः ॥

---

* अग्निपित्तोऽग्निः ३ ।

नाभिमिति । कुण्डमध्ये सकर्णिकाष्टदलकमलरूपां नाभिं कुर्यादित्यर्थः ।

तत्रैव योन्यादेः कुण्डपरिमाणानुसारं परिमाणमुक्तम् ।

मुष्टिमात्रे रसाम्भोधिनेत्राङ्गुलायामतारोन्नतिर्योनिरुक्ता बुधैः ।
नेत्रवेदाङ्गुलोत्सेधतारान्विता नाभिरप्यत्र योन्योष्ठमेकाङ्गुलम् ।
योन्या लक्षणमेतदुगदितमरत्निमात्रकुण्डस्य ।
कुण्डस्यैव मयोक्तं तदेव खलु हस्तमात्रस्य ॥

द्विहस्तादिकुण्डेषु योन्यादिवृद्धिप्रकारस्तत्रैव ।

एकैकेनाङ्गुलेनामलनिशितमतिर्वर्धयेदन्यकुण्डे-
ष्वेनां योनिं च नाभिं खलु यवयुगलेनेह योन्यास्तथौष्ठम् ।
कुर्यान्नाभिं च वृत्ताकृतिमपि यदि वा कुण्डरूपान्यरूपां
योन्याकारेऽत्र योनिं सरसिजसदृशे नो विदध्याच्च नाभिम् ॥

कुर्यादित्यनेन नाभ्याकारविकल्प उक्तः। योन्याकार इति। योनिकुण्डे योनिं पद्मकुण्डे नाभिं न कुर्यादित्यर्थः ।

मतान्तरमाह तत्रैव ।

कुण्डस्यैके हस्तमात्रस्य योनिं
प्राहुर्भूतद्व्यङ्गुलायामताराम् ।
व्यासत्र्यंशैकांशकोत्सेधयुक्तां
कुर्याद्बोधिक्ष्माजपत्रानुरूपाम् ॥

तत्पक्षे नाभिवृद्धिं तद्रचनाप्रकारं चाह ।

नेत्रभूताङ्गुलोत्सेधतारान्वितां
नाभिमंशद्वये तद्दलान्यष्ट च ।
व्यासवह्न्यंशतोंशेन तत्कर्णिकां
मध्यभागे विदध्याद्बुधः कुण्डतः ॥

नेमिपरिमाणमाह तत्रैव ।

कुण्डस्यैककरस्य चारु परितो नेमिर्भवेदङ्गुले-
नैकेनैव ततो विलोचनकरादारभ्य संवर्धयेत् ।

कुण्डे दिक्करकुण्डकावधि बुधः प्रत्येकमर्धाङ्गुलं
तद्बाह्ये खलु मेखलात्रितयकं कुर्याद्यथोक्तक्रमात् ॥
वैदिकमते तु नाभिकण्ठयोन्यो न कार्याः।
ख्यातान्येतानि कुण्डानि तान्त्रिके स्मार्त्तकर्मणि।
अनाभिकान्यकण्ठानि वियोनीति श्रुतेरिति ॥
इति मेरुतन्त्रवचनात्।
नालमाह। (शारदापञ्चरात्रयोः)
स्थलादारभ्य नालं स्याद्योन्या मध्ये सरन्ध्रकम्।
स्थूलमूलं तु सूक्ष्माग्रं बाह्यमेखलया समम्—इति ॥
(ज्ञानार्णवे)
मेखलानां बहिःस्थानं स्थलमित्यभिधीयते।
चतुरस्रस्थलाल्लब्धं नालं मध्ये सरन्ध्रकम् ॥
आहुतितारतम्यतः कुण्डानां तारतम्यमुक्तम्।
(त्रिपुरासारसमुच्चये)
शतार्धहोमे खलु मुष्टिमात्र-
मरत्निमात्रं शतहोमकुण्डम्।
हस्तं सहस्रे त्वयुते द्विहस्तं
लक्षे चतुर्हस्तमिदं प्रदिष्टम् ॥
दशलक्षे रसहस्तं वसुहस्तं कोटिहोमे स्यात्।
कोट्यर्धेष्वष्टकरं होमेऽष्टागमविदो ब्रुवते ॥
मतान्तरमाह।
केचिद्धस्तं लक्षहोमे द्विहस्तं
लक्षद्वन्द्वे वह्निलक्षे त्रिहस्तम्।
होमे कुण्डं वेदहस्तेऽब्धिलक्षं
प्राहुर्दोष्णां पञ्चकं पञ्चलक्षे ॥
रसहस्तं रसलक्षे सप्तकरं सप्तलक्षे स्यात्।

वसुहस्तं वसुलक्षे नवलक्षे नवकरं कुण्डम् ॥
दशहस्तं दशलक्षे दशकरमेवेह कोटिहोमेऽपि ।
दशहस्तान्न हि कुण्डं परमस्ति महीतलेऽमुष्मिन् ॥

कुण्डानां पृथक् पृथक् फलं तत्रैव ।

सर्वसिद्धिकरमम्बुधिकोणं पुत्रदं मनसिजावसथान्तम् ।
अर्धचन्द्रसदृशं शुभदं स्यादग्निकोणमरिवर्धनहेतुः ॥
शान्तिकर्मणि भवेत् सुवर्त्तुलं छेदमारणकरं षडस्रकम् ।
पद्मकुण्डमिह वृष्टिकारणं रोगशान्तिकरमष्टकोणकम् ॥

वर्णभेदेन कुण्डभेदमाह ।

चतुरस्रं विप्राणां राज्ञामिह वर्त्तुलं कुण्डम् ।
वणिजामर्धशशाङ्काकारं त्र्यस्रं तु शूद्राणाम् ॥
चतुरस्रं सर्वेषां प्रशस्तमिति केचिदाहुराचार्याः ।
वाञ्छितफलदं यत् तत् कुण्डं भुवि भुक्तिमुक्तिकरम् ॥
षट्कोणमर्धचन्द्राकारं चापि प्रजाकरं कुण्डम् ।
मुक्तिकरं पञ्चास्रं वसुकोणं राज्यदा योनिः ॥

तथा ।

नित्ये नैमित्तिके च प्रविरलमतयः प्राहुरेकेऽब्धिकोणं
कुण्डं हस्तप्रमाणं स्मरगृहसदृशं चाथ वृत्तं प्रशस्तम् ।
षट्कोणं चार्धदोषाकरसदृशयुतं स्थण्डिलं रत्निमात्रा-
यामं स्वाङ्गुष्ठपूर्वोन्नतमपि सुसमं निर्मितं बालुकाभिः ॥

( मेरुतन्त्रे )

अनेकदोषं वै कुण्डं मानं न्यूनाधिकं यदि ।
तस्मात् सम्यक् परीक्ष्येदं कर्त्तव्यं शुभमिच्छता ॥
खाताधिके भवेद्रोगी हीने धेनुधनक्षयः ।
वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले ॥

मेखलारहिते शोकोऽभ्यधिके वित्तसंशयः ।
भार्याविनाशकं कुण्डं प्रोक्तं योन्या विना कृतम् ॥
अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्जितम् ।
शृङ्गाररहितं यच्च कुण्डं जर्जरमेखलम् ॥
यजमानविनाशाय प्रोच्चाटः स्फुटितो भवेत् ।
सूत्राधिके सुहृद्द्वेषः सूत्रहीने दरिद्रता ॥
अनाले जठरे रोगश्छिन्नकुण्डे त्ववाच्यता ।

इति कुण्डलक्षणम् ।

चतुरस्रम् ।



योनिः ।



अर्धचन्द्रम् ।



त्र्यस्रम् ।



वृत्तम् ।



षडस्रम् ।



पद्मम् ।



अष्टास्रम् ।



पञ्चास्रम् ।



सप्तास्रम् ।



स्थण्डिललक्षणम् ( शारदायाम् )

कुण्डमेकाविधं कष्टं स्थण्डिलं तु समाचरेत् ।
चतुरस्रं स्थण्डिलं तु प्रशस्तं सर्वकर्मसु ॥

( चन्द्रपीठे तु )

त्रिरस्रं* चतुरस्रं च वितस्त्युच्छ्रयसंमितम् ।
सिकताद्यैर्विधातव्यं स्थण्डिलं हस्तमात्रकम्—इत्युक्तम् ॥

अथ स्रुग्लक्षणम् ( शारदायाम् )

प्रकल्पयेत् स्रुचं यागे वक्ष्यमाणेन वर्त्मना ।
श्रीपर्णीशिंशपाक्षीरशाखिष्वेकतमं गुरुः ॥
गृहीत्वा विभजेद्धस्तमात्रं षट्त्रिंशता पुनः ।
विंशत्यंशैर्भवेद्दण्डो वेदिस्तैरष्टभिर्भवेत् ॥
एकांशेन मितः कण्ठः सप्तभागमितं मुखम् ।
वेदीत्र्यंशेन विस्तारः कण्ठस्य परिकीर्त्तितः ॥
अग्रं कण्ठसमानं स्यान्मुखे मार्गं प्रकल्पयेत् ।
कनिष्ठाङ्गुलिमानेन सर्पिषो निर्गमाय च ॥
वेदिमध्ये विधातव्या भागेनैकेन कर्णिका ।
विदधीत बहिस्तस्या एकांशेनाभितोऽवटम् ॥
तस्य खातं त्रिभिर्भागैर्वृत्तमर्धांशतो बहिः ।
अंशेनैकेन परितो दलानि परिकल्पयेत् ॥
मेखलामुखवेद्योः स्यान्नेमिरर्धांशमानतः ।
दण्डशूलाग्रयोः कुम्भो गुणवेदाङ्गुलैः क्रमात् ॥
गण्डीयुगं यमांशैः स्याद्दण्डस्यानाह ईरितः ।
षड्भिरंशः पृष्ठभागो वेद्याः कूर्माकृतिर्भवेत् ॥

---

* त्र्यस्रमित्यत्र त्रिरस्रमिति पाठोऽनुचितः ।

हंसस्य हस्तिनो वाऽपि पोत्रिणो वा लिखेन्मुखम् ।
मुखस्य पृष्ठभागे तु संप्रोक्तं लक्षणं स्रुचः ॥

श्रीपर्णी गम्भारीति प्रसिद्धा । क्षीरशाखिनोऽश्वत्थोदुम्बरवटप्लक्षाः । हस्तमात्रमिति बाहुमात्रमित्यर्थः ।

स्रुचं बाहुप्रमाणेन होमार्थं विदधीत वै ।

इत्यगस्त्यसंहितावचनात् । गण्डी कलशः ।

( फेत्कारिणीतन्त्रे )

कारस्करेणामलकीपलाशखदिरैरपि ।
सुवर्णरूप्यताम्रैर्वा अयोभिरपि कारयेत् ॥

( वायवीसंहितायाम् )

स्रुक्स्रुवौ तैजसौ ग्राह्यौ न कांस्यायससैसकौ ।
यज्ञदारुमयौ वाऽपि ताम्रिकौ शिल्पिसंमतौ ॥
पर्णैर्वा ब्रह्मवृक्षादेरच्छिद्रे मध्य उच्छ्रिते ।

अत्रायसे विधिनिषेधौ क्रूरसौम्यविषयौ ।

तदुक्तं तन्त्रान्तरे ।

सौवर्णौ स्रुक्स्रुवौ स्यातां सौम्यकर्मणि सर्वतः ।
भवेतामायसावेतौ स्तम्भनादिषु कर्मसु ।

(वसिष्ठसंहितायाम्)

पलाशपत्रे निश्छिद्रे रुचिरे स्रुक्स्रुवौ मतौ ।
विदध्याद्वाऽश्वत्थपत्रे संक्षिप्ते होमकर्मणि ॥

(मन्त्रमुक्तावल्याम् )

कण्ठाधः कारयेन्मार्गे विद्वानाज्यस्य दुर्गमे ।
वेधं च मुखतः कुर्यात् तप्तलोहशलाकया ॥

अथ स्रुवलक्षणम् ( शारदायाम् )

स्रुचश्चतुर्विंशतिभिर्भागैरारचयेद्ध्रुवम् ।
द्वाविंशत्या दण्डमानमंशैरेतस्य कीर्तितम् ॥
चतुर्भिरंशैरानाहः कर्षाज्यग्राहितच्छिरः ।

अंशद्वयेन निखनेत् पङ्क्तैर्मृगपदाकृतिः ॥

दण्डमूलाग्रयोर्गण्डी भवेत् कङ्कणभूषिता ।

स्रुवस्य विधिराख्यात .... .... .... इति ॥

अथाङ्कुरार्पणम् ( शारदायाम् )

प्रागेव दीक्षादिवसात् सप्तभिर्विधिवद्दिनैः ।

सर्वमङ्गलसंपत्त्यै विदध्यादङ्कुरार्पणम् ॥

( सिद्धान्तशेखरे )

प्रतिष्ठायां च दीक्षायां स्नापने चोत्सवे तथा ।

संप्रोक्षणे च शान्त्यर्थं विवाहे मौञ्जिबन्धने ॥

सर्वमङ्गलकार्येषु विदध्यादङ्कुरार्पणम् ।

( मेरुतन्त्रे )

सप्तभिर्नवभिर्वाऽपि दिनैर्दीक्षादिनात् पुरा ।

बीजारोपणकर्मेदं कर्त्तव्यं सर्वकामदम् ॥

मण्डपोत्तरदिग्भागे सुसंवृत्तपरं परे ।

भवने मण्डलं कुर्याद्दाक्ष्यां प्राग्वरुणायते ॥

याम्योदीच्यायते वामदीक्षायां संप्रशस्यते ।

भवन इति मण्डपान्तरे तच्च दक्षिणैकद्वारयुक्तं ज्ञेयम् ।

तथा ।

गोमयेनोपलिप्तायां भूमौ दक्षेऽथ वामके ।

सतैलतण्डुलेनैव सतैलविजयाद्रवैः ॥

तत्र रेखाः पञ्चकरदीर्घाकारास्तु पञ्च च ।

वितस्त्यन्तरतो रुद्ररेखाः कार्यास्तथाऽऽयताः ॥

चत्वारिंशत्कोष्ठकाः स्युश्चतुर्विंशतिकोष्ठकैः ।

बाह्यगैस्तत्र वीथी स्यात् पूरयेद्रक्तचूर्णकैः ॥

पश्चात् कोष्ठचतुष्कं यद्ब्रह्मस्थानं तदीरितम् ।
आग्नेयकोष्ठमारभ्य ईशानान्तं प्रपूरयेत् ॥
पीतरक्तश्वेतकृष्णरजोभिः श्रेष्ठमार्गतः ।
कोष्ठद्वयं ततो वीथी रक्तेनैव प्रपूरयेत् ॥
विष्णुस्थानं तदग्रे तु ज्ञेयं कोष्ठचतुष्टयम् ।
प्राग्वद्रजोभिरापूर्य तदग्रेऽपि च वीथिका ॥
प्राक्स्थं कोष्ठचतुष्कं च रुद्रस्थानं तदीरितम् ।
तत्पूर्वं पूर्ववद्रक्तैरारक्तैः सर्वरेखिकाः ॥
विस्तारोन्नतिदैर्घ्येण हस्तमात्रास्तु पालिकाः ।
कार्या डमरुकाकाराश्चतस्रो विष्णुदेवताः ॥
दूर्वाम्रपल्लवाश्वत्थदलोपेताश्च वेष्टिताः ।
सूत्रेण विष्णुस्थानस्य चतुष्कोष्ठे निवेशयेत् ॥
वैरिञ्च्यः पञ्चमुख्यस्ताः कोष्ठजाः षोडशाङ्गुलैः ।
आयामोच्छ्रायदैर्घ्याद्यैर्युक्ताः पश्चान्निवेशयेत् ॥
ब्रह्मस्थाने पल्लवादिसूत्रैः प्राग्वच्च योजिताः ।
शैवाः शरावाश्चत्वारो भान्वङ्गुलसमुच्छ्रयाः ॥
प्रक्षाल्य सूत्रैः संवेष्ट्य प्राग्वदग्न्यादिषु न्यसेत् ।
शालिपुञ्जेषु गन्धादिदर्भकूर्चयुगेषु च ॥

डमरुकाकृतयोऽतिगम्भीराः शरावा एव पालिकाः । मुखपञ्चकयुक्तास्ताः
एव पात्रविशेषाः पञ्चमुख्यः ।

तदुक्तं तन्त्रान्तरे ।

दिक्षु चत्वारि वक्त्राणि मुखमेकं तदूर्ध्वगम्—इति ।
(मेरौ)

पूरयेत् तानि पात्राणि वालुकामृत्करीषकैः ।

करीषं शुष्कगोमयम् ।

मृत्तिकाहरणे विशेष उक्तः (सिद्धान्तशेखरे)

गन्धादिभिश्च कुद्दालं पूजयित्वा दिनान्तरे ।
गीतनृत्यसमायुक्तं गजवाजिसमन्वितम् ॥
गुर्वादयो रथारूढा गजारूढास्तथाऽपरे ।
गत्वा तीरं तडागस्य नद्याः पुष्पवनस्य वा ॥
तत्र शुद्धं भुवो भागं दर्भैः संमृज्य चास्त्रतः ।
अभ्युक्ष्य चार्घतोयेन तत्तन्मन्त्रमनुस्मरेत् ॥
हृदा भूमिं समावाह्य गन्धपुष्पैः समर्चयेत् ।
कुद्दालीमस्त्रमन्त्रेण खात्वा भूमिमथो मृदम् ॥
गृहीत्वा वामदेवेन पूरयेत् कांस्यपात्रके ।
हृदा मृदं च संपूज्य वस्त्रेणाच्छाद्य धारयेत् ॥
पुरं वा निलयं वापि सर्वमङ्गलनिःस्वनैः ।
गुरुप्रदक्षिणं कृत्वा मण्डपं त्वानयेत् ततः ॥
एतत् कर्म दिवाकाले कुर्याद्रात्रौ न बुद्धिमान् ।

एतत् कर्मेति मृत्तिकाहरणकर्मेत्यर्थः ।
बीजारोपणं तु रात्रावेव ।

कुजानामधिपः सोमस्तस्माद्रात्रौ तु निर्वपेत् ।

इति तत्रत्यादेव वचनात् ।
तथा ।

शङ्खस्वनेन नादैश्च पञ्चभिर्ब्राह्मणाशिषा ।
ततः स्वर्णादिके पात्रे दश बीजानि वापयेत् ॥
वं बीजं प्रजपेन्मन्त्री दुग्धेन क्षालयेत् ततः ॥
मूलमन्त्राभिजप्तानि .... .... इति शारदायाम् ।

तथा ।

तानि प्रियङ्गुश्यामाकतिलसर्षपशालयः ।
मुद्गाऽऽढकी सुनिष्पावा खल्वा माषाः प्रकीर्त्तिताः ॥

श्यामाका भाषया सामा इति प्रसिद्धा। आढकी भाषया रहर इति प्रसिद्धा। निष्पावः सिम्बिः। खल्वाः कुलित्थाः।

तथा।

ब्रह्मपात्रे तु विकिरेत् प्रथमं वैष्णवे ततः।
ततः शैवे पञ्चवाद्यब्रह्मघोषपुरस्सरम्॥
हरिद्रादैश्च संसिच्य वस्त्रैराच्छादयेत् ततः।
संध्ययोरुभयोरर्ध*रात्रौ चापि बलिं हरेत्॥
गुरूपदिष्टमार्गेण सम्यक् पात्रत्रयाग्रतः।
नवाहं तु बलिं दद्यात् तत्तदुद्दिश्य दैवतम्॥
शाल्योदनं तिला लाजाः सक्तवः प्रथमे दिने।
हरिद्राचूर्णसंयुक्तो भूतेभ्योऽयं बलिर्मतः॥
एवं द्वितीयदिवसे पितृभ्यास्तिलतण्डुलैः।
तृतीये सक्तवो लाजा यक्षेभ्यो दधिसंयुताः॥
नागेभ्यः सक्तवस्तुर्ये नारिकेलजलप्लुताः।
दद्यात् पद्माक्षतबलिं पञ्चमे ब्रह्मणे मुदा॥
षष्ठे शिवाय वाऽपूपयुक्तं भक्तं प्रशस्यते।
गुडोदकं सप्तमेऽह्नि विष्णवे विनिवेदयेत्॥
विष्णोरेवाष्टमदिने दुग्धोदनबलिः स्मृतः।
कृसरान्नं तु नवमे विष्णोरेव प्रशस्यते॥

वाममार्गे तु विशेष उक्तस्तत्रैव।

वाममार्गे चतुर्दिक्षु मण्डलस्य बलिं हरेत्॥
ब्रह्मस्थाने तु वेतालो मेषस्तस्य बलिः पुरः।
विष्णुस्थाने भैरवी स्यादजस्तस्य बलिर्मतः॥
भैरवस्तु शिवस्थाने महिषं बलिमिच्छति।

---

* रूर्ध्वरात्राविति २ पुस्तके पाठः।

गौडी माध्वी च पैष्टी च सुरास्तत्र क्रमान्मताः ॥

मत्स्यमांसं मद्ययुक्तं भूतेभ्यो वलिरिष्यते ।

पितृभ्यः सासवपलं यक्षेभ्यः कुक्कुटो मधु ॥

भेकोन्दुरुर्वलिर्नागे वाममार्गे वलिस्त्वयम् ।

( सिद्धान्तशेखरे )

सोमं संपूजयेन्नित्यमाधिवासदिनावधि ।

अधिवासदिने प्राप्ते सोममुद्वासयेद्गुरुः ॥

( सारस्वतमते )

प्ररूढाण्यङ्कुराण्यन्यो न वीक्षेत कदा चन ।

आचार्य एव प्रविशेत् तच्छिष्यो वा तदाज्ञया ॥

( मेरुतन्त्रे )

एवं गतेषु नवसु दिवसेषु विलोकयेत् ।

सम्यक् कस्योद्गमो जातः किं नष्टं मध्यमं च किम् ॥

सम्यगभ्युद्गते सिद्धिः कुण्ठिते विघ्नमाप्नुयात् ।

कीटभुक्तेऽप्यल्पफलं शटिते सर्वनाशनम् ॥

सिद्धिः प्रियङ्गुभिर्ज्ञेया श्यामाकैः स्त्रीसुखं भवेत् ।

तिलैः पूज्यजनोल्लासः सर्षपैर्नाभिचारकः ॥

शालिभिः सर्वमान्यत्वं मुद्गैर्देवकृपा भवेत् ।

चतुष्पादास्तथाऽऽढक्या निष्पावात् क्षेत्रमन्दिरे ॥

खल्वैः सत्कर्मसिद्धिश्च माषैः शान्तिररेर्भवेत् ।

सर्वैः समुद्गतैर्वामे सिद्धिः पातस्ततोऽन्यथा ॥

(सिद्धान्तसारे )

अङ्कुरेऽनुद्गते नष्टे शान्तिहोमं समाचरेत् ।

मूलमन्त्रेण जुहुयादघोरास्त्रेण वा शतम् ॥

इत्यङ्कुरार्पणविधिः ।

बिभ्रत्यद्भुतभूतिभूतपवचोवैचित्र्यचित्रामृत-
स्रोतःशालिनि सन्निबन्धनसरित्सम्भेदमभ्यर्हितम् ॥
सद्युक्तिस्फुटमौक्तिकोत्करचमत्कारे द्वितीयस्तर-
ङ्गोऽयं श्रीनरदेवनिर्मितपुरश्चर्यार्णवेऽस्मिन्नगात् ॥

इति श्रीमन्महाराजाधिराजश्रीप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे दीक्षाकालदेशवास्तुयागकुण्डमण्डपादिनिर्णयपूर्वकम-ङ्कुरार्पणविधानं नाम द्वितीयस्तरङ्गः ॥



अथ तरङ्गद्वये क्रियावतीदीक्षा निरूप्यते ।

(शारदायाम्)

चतुर्विधा सा संदिष्टा क्रियावत्यादिभेदतः ।
क्रियावती[1]वर्णमयी[2]कलात्मा[3]वेधमय्यपि[4] ॥
ताः क्रमेणैव कथ्यन्ते तन्त्रेऽस्मिन् संपदावहाः ।

(मेरुतन्त्रे)

शृणु देवि प्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ।
दीक्षाविधिं पञ्चविधं तद्राज्ञामुत्तमोत्तमम् ॥
उत्तमं महदाढ्यानां सामान्यानां तु मध्यमम् ।
ब्राह्मणानामल्पमुक्तं यतीनामपि चाल्पकम् ॥
तस्मादादौ प्रवक्ष्यामि तुल्यं यच्चोत्तमोत्तमम् ।
यस्मिन् ज्ञाते चोत्तमादिभेदानां विषयो भवेत् ॥

(प्रकटयोगिनी)

आदौ तु भक्तिमान् शिष्यो निजदेहस्य शुद्धये ।
तीर्थे स्नात्वा सहस्रं तु गायत्रीं प्रजपन्नयेत् ॥
एकभक्तोपवासादिव्रतेन दिवसद्वयम् ।
आधिवासस्तृतीयेऽह्नि दीक्षां तुर्येऽह्नि चाचरेत् ॥
असंस्कृतेन देहेन सद्यो दीक्षां न चाचरेत् ।

पिङ्गलामतमन्त्रतन्त्रप्रकाशयोस्तु ।

सद्योऽधिवासमथवा प्रकुर्वीत यथाविधि ।
दिनद्वयेनैव कुर्याद्दीक्षाकर्मविचक्षणः ॥
सद्योऽधिवासनं वा स्यादेकस्मिन् दिवसे यदि—इत्युक्तम् ॥

(मेरुतन्त्रे)

दीक्षादीनात् पूर्वदिने प्रातःकृत्यं निवर्त्त्य च ।
समलंकृत्य देहं स्वं स्वगेहे पूजनं चरेत् ॥

गणेशस्य विधानेन पुण्याहं वाचयेत् ततः ।
नान्दीमुखांस्तर्पयित्वा पञ्चवाद्यपुरस्सरम् ॥
यथोक्तकृतसंभारो गच्छेद्गुरुगृहं प्रति ।

पञ्चविधवाद्यमुक्तम् (सङ्गीतिशास्त्रे)

ततं शुषिरमानद्धमयःसारो घनस्तथा ।
वाद्यमेतत् पञ्चविधं देवदेवस्य ताण्डवे ॥

ततं वीणादि । शुषिरं वंशीशङ्खादि । मानद्धं डिण्डिममृदङ्गादि । अयस्सा घण्टादि ।

(मेरुतन्त्रे)

आचार्य ऋत्विग्वरणसंभारो दशधा मतः ।
श्रीपर्णीवृक्षपीठानि हस्तमानानि मानतः ॥
अष्टाङ्गुलसमुच्छ्रायसहितानि समानि च ।
सप्तविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषितः ॥
विष्टरः सर्वयज्ञेषु लक्षणं परिकीर्त्तितम् ।
सुखोष्णोदकसंभूताः पाद्यार्थे ताम्रगण्डकाः ॥
शङ्खा अर्घप्रदानाय गन्धपुष्पजलान्विताः ।
सुताम्रस्य कमण्डल्व आचम्योदकपूरिताः ॥
ते युता मधुपर्कार्थे कांस्या दध्यादिपूरिताः ।
महदर्घ्याणि वस्त्राणि मुद्रिकाद्यं सुभूषणम् ॥
मयूरपत्रच्छत्राणि सोष्णीषाणि समाहरेत् ।
पादुकाश्चाहरेत् तत्र चर्माभरणभूषिताः ॥
कृत्वैतत् फलमाप्नोति महायज्ञार्हणोपमम् ।
अन्येभ्यो मधुपर्कस्य विप्रेभ्यः पूजनं स्मृतम् ॥
भक्त्या तद्द्विगुणं दद्यादाचार्याय सुभक्तिमान् ।
अन्यैर्द्विजैः समं यत्र दैशिकस्य प्रपूजनम् ॥

तस्मिन् यज्ञे फलं स्वल्पमनावृष्ट्या यथा क्षितौ ।
एवं गुरुगृहं गत्वा प्रणाम्य गुरुपादुकाम् ॥
दत्वा वरणसामग्रीं संकल्प्य वृणुयाद्गुरुम् ।
उच्चार्यामुकमन्त्रस्य ग्रहणाय द्विजोत्तम ॥
गुरुत्वेनेति संभाष्य त्वामहं च ततो वृणे ।
इत्युक्त्वा वृणुयाच्छिष्यो वृतोऽस्मीति ततो गुरुः ॥
यथोचितं गुरो कर्म कुरुष्वेति वदेच्छिशुः ।
करवाणीति चाचार्यो गुरोरेवाज्ञया ततः ॥
ब्राह्मणान् वृणुयादष्टौ वेदवेदाङ्गपारगान् ।
तद्दैवतोपासकाँश्च ऋत्विक्त्वेनाथवा यदा ॥
चत्वारि कुण्डानि तदा चत्वार ऋत्विजः स्मृताः ।
ततः शिष्येण सहितो यायाद्यागगृहं गुरुः ॥
उपविश्य च तद्द्वारे परीक्षामारभेत ततः ।
शिष्याय मूलसंजप्तं प्रदद्याद्दन्तधावनम् ॥
दन्तान् विशोध्य परतः स्थण्डिले हस्तमात्रके ।
चतुरस्रे पातयेत् तत् परीक्षेत गुरुस्ततः ॥
तदग्रं यद्दिशासंस्थं तत्रेदं पूर्वतः फलम् ।
भूतिर्हृदयसंतापो बन्धुनाशस्तथा मृतिः ॥
शोकश्च व्यग्रता सौख्यं ज्ञानं लाभः क्रमात् फलम् ।
अमङ्गलस्थानपाते प्रायश्चित्तं समाचरेत् ॥
अष्टाधिकसहस्रं वा शतं विंशतिरेव वा ।
अस्त्रसंपुटितेनैषां नाम्ना स्वाहान्वितेन च ॥
दोषान् जहि जहीत्येवं पदं नामावसानकम् ।
केवलाज्येन जुहुयाद्दुःस्वप्नेऽप्येवमेव हि ॥

दन्तकाष्ठं पुनर्देयं पुनर्दुष्टे चतुर्गुणम् ।
तृतीयमपि दुष्टं चेन्न ग्राह्या सा तु देवता ॥
वाममार्गे सकृदपि गुरुशिष्यौ विनाशयेत् ।

(सिद्धान्तसंग्रहे ) गुरुमुपक्रम्य ।

यज्ञवाटं परिक्रम्य प्रक्ष्याल्य चरणौ करौ ।
आचान्तो द्वारदेशस्थो गुरुर्देवं च दिक्पतिम् ॥
नत्वा पापापनोदार्थं मन्त्रद्वयमुदीरयेत् ।
हे देव प्राकृतं चित्तं पापाक्रान्तमिदं मम ॥
तन्निःसारय चित्तान्मे पापं फट्फट् च ते नमः ।
सूर्यः सोमो यमः कालो महाभूतानि पञ्च च ॥
एते शुभाशुभस्येह कर्मणो नव साक्षिणः ।
हुँफट् इति ब्रुवन् क्रोधदृष्ट्या पश्यंश्च पार्श्वयोः ॥
एवं कृते महापापं यत् तद्दूरेऽवतिष्ठते ।
तत्क्षणादेव नश्यन्ति पापान्यन्यानि मन्त्रिणः ॥
पूजने त्यक्तपापस्य काममिष्टं क्षणाद्भवेत् ।
तत आचमनं कृत्वा सामान्यार्घं प्रकल्पयेत् ॥

सामान्यार्घस्थापनविधिः (गौतमीये)

त्रिकोणवृत्तभूबिम्बं मण्डलं रचयते ततः ।
आधारशक्तिं संपूज्य तत्राधारं विनिःक्षिपेत् ॥
अस्त्रेण पात्रं संशोध्य हृन्मन्त्रेण प्रपूरयेत् ।
निःक्षिपेत् तीर्थमावाह्य गन्धादीन् प्रणवेन तु ॥
दर्शयेद्धेनुमुद्रां वै सामान्यार्घमिदं स्मृतम् ।
मन्त्रयेत् प्रणवेनवै .... .... इति च ॥

( मेरुतन्त्रे )

अर्घोदकेन संप्रोक्ष्य द्वारपूजां समाचरेत् ।

द्वारपूजाविधिस्तत्रैव ।

द्वारमर्घाम्बुना प्रोक्ष्य तन्मध्ये विघ्नपं यजेत् ।
तद्दक्षिणे महालक्ष्मीं वामे चापि सरस्वतीम् ॥
द्वारे श्रियं च तन्मध्ये शाखयोर्दक्षिणान्ययोः ।
ऊर्ध्वभागात् तलं यावत् पञ्चपञ्चविभागके ॥
नाम्नश्चाद्यक्षरं विन्दुयुक्तं नाम च ङेऽन्तकम् ।
समुच्चार्य हृदन्तं च देवानेतान् प्रपूजयेत् ॥
गणपतिं क्षेत्रपालं ततश्च वसुधारया ।
युक्तं शङ्खनिधिं दक्षे वामे वसुमतीयुतम् ॥
पूजयित्वा पद्मनिधिं तदधो दक्षवामतः ।
मायाशक्तिं च चिच्छक्तिं गङ्गां च यमुनां तथा ॥
धातारं च विधातारं दं देहल्यै नमस्त्वधः ।
आदौ तु पश्चिमद्वारे पूजा चेयं प्रकाशिता ॥
नन्दी चापि महाकालो द्वारयोर्दक्षवामयोः ।
पूज्यावेवमुदग्द्वारं प्राग्याम्यं च प्रपूजयेत् ॥
द्वारपालौ क्रमात् तेषु गणेशवृषभावपि ।
भृङ्गिरीटस्तथा स्कन्द उमाचण्डेश्वरौ तथा ॥
विष्णोर्नन्दः सुनन्दश्च चण्डश्चापि प्रचण्डकः ।
बलश्च प्रबलश्चैव भद्रश्चापि सुभद्रकः ॥
वक्रतुण्डैकदंष्ट्रौ च महोदरगजाननौ ।
लम्बोदरश्च विकटो गणेशद्वारपालकाः ॥
विघ्नराजो धूम्रवर्णः क्रमात् पश्चिमद्वारतः ।

देव्याः सूर्यस्य योगिन्योऽष्टावेता द्वारपालकाः ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा च श्रिया सह ॥

तथा ।

ततश्च देशिको विघ्नान् दिव्यानालोकनेन च ।
अन्तरिक्षगतानस्त्रोदकैरुत्सादयेत् क्रमात् ॥
पार्थिवान् पार्ष्णिघातैश्च त्रिभिरुत्सार्य यत्नतः ।
अङ्गं संकोच्य किं चित् तु शाखां वामगतां स्पृशन् ॥
उत्सारितानां विघ्नानां ददद्वर्म तु दक्षिणे ।
पादेन दक्षिणेनाथ प्रविशेद्यागमण्डपम् ॥
वाममार्गेऽथ वा शाक्ते वामपादपुरस्सरम् ।
ब्रह्माणं वास्त्वधीशं च नैर्ऋत्यां दिशि पूजयेत् ॥

( श्यामारहस्य ) धृतवचनानि ।

पञ्चशुद्धिं विना पूजा अभिचाराय कल्पते ।
आत्मशुद्धिः स्थानशुद्धिर्मन्त्रस्य शोधनं तथा ॥
द्रव्यशुद्धिर्देवशुद्धिः शुद्धिः पञ्चविधेरिता ।
सस्नानभूतसंशुद्धिप्राणायामादिभिः प्रिये ॥
षडङ्गाद्यखिलन्यासैरात्मशुद्धिरितीरिता ।

( मेरुतन्त्रे )

पञ्चगव्यार्घतोयाभ्यां प्रोक्षयेन्मण्डपान्तरम् ।
संमार्जनोपलेपाद्यैर्दर्पणोदरवत्कृतम् ॥
विमलैर्धूपदीपादिपुष्पदामादिशोभितम् ।
पञ्चवर्ण*मयं चित्रं स्थानशुद्धिरियं मता ॥

---

* रजश्चित्रम् इति २ पु. पा.

गृहीत्वा मातृकावर्णान् मूलमन्त्राक्षराणि च ।
क्रमात् क्रमाद्द्विरावृत्तिर्मन्त्रशुद्धिरियं मता ॥
पूजाद्रव्यादि संप्रोक्ष्य मूलास्त्राभ्यां विधानतः ।
दर्शयेद्धेनुमुद्रां च द्रव्यशुद्धिरियं मता ॥
पीठे देवीं प्रतिष्ठाप्य सकलीकृत्य मन्त्रवित् ।
मूलमन्त्रेण दीप्तात्मा अभिभाव्योदकेन च ॥
त्रिवारं प्रोक्षयेद्विद्वान् देवशुद्धिरितीरिता ।
पञ्चशुद्धिं विधायेत्थं पश्चाद्यजनमाचरेत् ॥
पञ्चशुद्धिविहीनेन यत्कृतं न च तत्कृतम् ।

तत्रैव ।

अर्घ्याम्बुना च गव्येन यागस्थाने सुषिञ्चेत ।

गव्येनेति पञ्चगव्येन ।

तदुक्तम् ( गौतमीये )

पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते ।
घृतं च पलमात्रं स्याद्गोमयं तोलकद्वयम् ॥
दधि प्रसृतिमात्रं स्यात् पञ्चगव्यमिदं स्मृतम् ।
अथ वा पञ्चगव्यानां समानो भाग इष्यते ॥
मूलमन्त्रेण संमन्त्र्य कुशाग्रेण च शोधयेत् ।
तेन सर्वविशुद्धिः स्यात् सर्वपापनिकृन्तनम् ॥

( स्मृतिशास्त्रे )

गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥
तेजोऽसीति घृतं चैव देवस्य त्वा कुशोदकम् ।
मन्त्राद्यपरिज्ञाने तु प्रणवेनैव शोधयेत् ॥

( मेरुतन्त्रे )

वीक्षणाद्यैस्ततः शुद्धिं चतुर्द्वारां समाचरेत् ।
संवीक्ष्य मूलमनुना ह्यस्त्रेण प्रोक्षयेत् ततः ॥
कुर्यात् ताडनमस्त्रेण कवचेनावसेचयेत् ।
श्रीखण्डागुरु*चन्द्रैश्च धूपितेऽस्त्रेण सप्तधा ॥
जप्तांश्चन्दनसिद्धार्थदूर्वाभस्माक्षतान् कुशान् ।
सलाजान् विकिरेन्मन्त्री प्रत्यूहघ्नान् हि मण्डपे ॥

तन्त्रान्तरे ।

आदौ विघ्नं समुत्सार्य पश्चादासनकल्पनम् ।
अथ वा चासने स्थित्वा विघ्नानुत्सारयेत् सुधीः ॥

( शारदायाम् )

लाजाचन्दनसिद्धार्थभस्मदूर्वाकुशाक्षताः ।
विकिरा इति निर्दिष्टाः सर्वविघ्नौघनाशकाः ॥

विघ्नोत्सारणमन्त्रो ( मेरुतन्त्रे )

नाराचमुद्रया सम्यगस्त्रमन्त्रेण देशिकः ।
अपक्रामन्तु भुतानि पिशाचाः प्रेतगुह्यकाः ॥
ये चात्र निवसन्त्यन्ये देवता भुवि संस्थिताः ।
अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ॥
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ।
श्लोकयोरन्ततश्चास्त्रं पठन् नाराचमुद्रया ॥
क्षिप्त्वा तान्मण्डपस्य .... .... इति ।

तत्रैव ।

मार्जयेदस्त्रमन्त्रेण तान् मन्त्री दर्भमुष्टिना ।
आसनाय तु वर्द्धन्या ईशाने स्थापयेच्च ताम् ॥
पुण्याहं वाचयित्वा च विप्रान् संतोष्य यत्नतः ।

* चन्द्रः कर्पूरः ।

वेदिकायां लिखेत् पश्चात् सर्वतोभद्रमण्डलम् ॥

सर्वतोभद्रमण्डलमुक्तम् (शारदायाम्)

चतुरस्रे चतुष्कोष्ठे कर्णसूत्रसमन्विते ।
चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयम् ॥
मध्ये मध्ये यथा मत्स्या भवेयुः पातयेत् तथा ।
पूर्वापरायते द्वे द्वे मन्त्री याम्योत्तरायते ॥
पातयेत् तेषु मत्स्येषु समं सूत्रचतुष्टयम् ।
पूर्ववत्कोणकोष्ठेषु कर्णसूत्राणि पातयेत् ॥
तदुद्भूतेषु मत्स्येषु दद्यात् सूत्रचतुष्टयम् ।
ततः कोष्ठेषु मत्स्याः स्युस्तेषु सूत्राणि पातयेत् ॥
षट्त्रिंशता पदैर्मध्ये लिखेत् पद्मं सुलक्षणम् ।
बहिः पङ्क्त्या भवेत् पीठं पङ्क्तियुग्मेन वीथिका: ॥
द्वारशोभोपशोभास्ताः शिष्टाभ्यां परिकल्पयेत् ।
शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत् ॥
पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः ।
तन्मध्यं विभजेद्वृत्तैस्त्रिभिः समविभागतः ॥
आद्यं स्यात् कर्णिकास्थानं केशराणां द्वितीयकम् ।
तृतीयं तत्र पत्राणामुक्तांशेन दलाग्रकम् ॥
बाह्यवृत्तान्तरालस्य मानं यद्विधिना सुधीः ।
निधाय केशराग्रेषु परितोऽर्धनिशाकरान् ॥
लिखित्वा सन्धिसंस्थानि तत्र सूत्राणि पातयेत् ।
दलाग्राणां च यन्मानं तन्मानं वृत्तमालिखेत् ॥
तदन्तराले तन्मध्ये सूत्रस्योभयतः सुधीः ।
आलिखेद्बाह्यहस्तेन दलाग्रेण समन्ततः ॥

दलमूलेषु युगशः केशराणि प्रकल्पयेत् ।
एतत् साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः ॥
पदानि त्रीणि पादार्थं पीठकोणेषु मार्जयेत् ।
अवशिष्टैः पदैर्विद्वान् पीठगात्राणि कल्पयेत् ॥
पदानि वीथिसंस्थानि मार्जयेत् पङ्क्तयभेदतः ।
दिक्षु द्वाराणि रचयेद्द्विचतुष्कोष्ठकैस्ततः ॥
पदैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः ।
उपशोभाः स्युरेकेन त्रिभिः कोष्ठैरनन्तरम् ॥
अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम् ।
रञ्जयेत् पञ्चभिर्वर्णैर्मण्डलं तन्मनोहरम् ॥
पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसंभवम् ।
कुसुम्भचूर्णमरुणं कृष्णं *दग्धपुलाकजम् ॥
बिल्वादिपत्रजं श्याममित्युक्तं वर्णपञ्चकम् ।
अङ्गुलोत्सेधविस्ताराः सीमारेखाः सिताः शुभाः ॥
कर्णिका पीतवर्णेन केशराण्यरुणेन च ।
शुभ्रवर्णेन पत्राणि तत्सन्धीन् श्यामलेन च ॥
रजसा रञ्जयेन्मन्त्री यद्वा पीतैव कर्णिका ।
केशराः पीतरक्ताः स्युररुणानि दलान्यपि ॥
सन्धयः कृष्णवर्णाः स्युः पीतेनाप्यसितेन वा ।
रञ्जयेत् पीठगर्भाणि पादाः स्युररुणप्रभाः ॥
गात्राणि तस्य शुक्लानि वीथीषु चतसृष्वपि ।
आलिखेत् कल्पलतिका दलपुष्पफलान्विताः ॥

---

* पुलाकजं तुच्छधान्यजमिति ।

वर्णैर्नानाविधैश्चित्राः शोभा रक्ताः समीरिताः ।
उपशोभाः पीतवर्णाः कोणान्यसितभानि च ॥
तिस्रो रेखा बहिः कुर्यात् सितरक्तासिताः क्रमात् ।
मण्डलं सर्वतोभद्रमेतत् साधारणं स्मृतम् ॥
चतुरस्त्रां भुवं भित्वा दिग्भ्यो द्वादशधा सुधीः ।
पातयेत् तत्र सूत्राणि कोष्ठानां दृश्यते शतम् ॥
चतुश्चत्वारिंशदाढ्यं पश्चात् षट्त्रिंशताऽम्बुजम् ।
कोष्ठैः प्रकल्पयेत् पीठं पङ्क्त्या नैवात्र वीथिका ॥
द्वारशोभे यथापूर्वमुपशोभा न दृश्यते ।
अवशिष्टैः पदैः कुर्यात् षड्भिः कोणानि तन्त्रवित् ॥
विदध्यात् पूर्ववच्छेषमेवं वा मण्डलं स्मृतम् ।
चतुरस्रे चतुःषष्टिपदान्यारचयेत् सुधीः ॥
पद्मैश्चतुर्भिः पद्मं स्यान्मध्ये तत्परितः पुनः ।
वीथीश्चतस्रः कुर्वीत मण्डलान्तावसानिकाः ॥
दिग्गतेषु चतुष्केषु पङ्कजानि समालिखेत् ।
विदिग्गतचतुष्काणि भित्त्वा षोडशधा सुधीः ॥
मार्जयेत् स्वस्तिकाकारं श्वेतपीतारुणासितैः ।
रजोभिः पूरयेत् तानि स्वस्तिकानि शिवादितः ॥
प्राक्प्रोक्तेनैव मार्गेण शेषमन्यत् समाचरेत् ।
नवनाभमिदं प्रोक्तं मण्डलं सर्वसिद्धिदम् ॥
पञ्चाब्जं मण्डलं प्रोक्तमेतत् स्वस्तिकवर्जितम् ।
दीक्षायां देवपूजार्थं मण्डलानां चतुष्टयम् ॥
सर्वतन्त्रानुसारेण प्रोक्तं सर्वसमृद्धिदम् ।

(यामले)

आरक्तवर्णं तद्वर्णां शक्तिद्वादशसंयुतम् ।
संपूज्य दीपनार्थं च भैरवं प्रार्थयेदिति ॥
अतितीक्ष्ण महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥
कान्तं चास्त्रं समुच्चार्य पूजावेदीं ततो विशेत् ।

(वैष्णवीकल्पे)

संस्कृत्य चासनस्थानमास्तीर्य विहितासनम् ।
जलमानीय सव्येन संस्कुर्यात् तद्यथाविधि ॥

जलसंस्कारस्तत्रैवोक्तम् ।

वायुबीजेन संशोध्य वह्निबीजेन निर्दहेत् ।
प्लावयेज्जलबीजेन गायत्र्या प्रोक्षयेत् ततः ॥
ततो धेन्वाऽमृतीकृत्य प्रणवेनाभिमन्त्रयेत् ।

तथा ।

आत्मविद्याशिवैस्तत्त्वैः प्रणवादिशिरोऽन्तकैः ।
तज्जलेन त्रिराचम्य आसनं शोधयेत् ततः ॥

शिरोऽग्निजाया । शोधनं चात्रास्त्रमन्त्रेण जलमेकरूपमिति सांप्रदायिकाः ।
तथा ।

मेरुपृष्ठ ऋषिः प्रोक्तः सुतलं छन्द ईरितम् ।
कूर्मोऽत्र देवता प्रोक्ता आसनोपनिवेशने ॥
विनियोगश्च कथितः पठेद्धृत्वाऽऽसनं ततः ।
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥
त्वं च धारय मां नित्यं पवित्रं चासनं कुरु ।
मायाबीजं समुच्चार्य आधारशक्तये ततः ॥
कमलासनमाभाष्य ङेनमोऽन्तं प्रपूजयेत् ।
आत्ममन्त्रेणोपविशेदासने देशिकोत्तमः ॥

दुःशिल्पिरचितत्वादिनानादोषोपशान्तये।

आत्ममन्त्रस्तु।

स्वनामाद्यक्षरं पुंसः सोमसामिसमन्वितम्।

आत्ममन्त्रं विजानीयात् .... .... .... ॥

इति सिद्धान्तसंग्रहे प्रोक्तः। सोमसामीति चन्द्रार्धमित्यर्थः।

( मेरुतन्त्रे )

वेदिकायामासने स प्राङ्मुखः संविशेदथ।

बद्धपद्मासनो मौनी ऋजुकायो जितेन्द्रियः॥

देशिकेन्द्रस्तु संस्थाप्य पूजोपकरणानि च।

दक्षिणे वामभागे तु स्थापयेत् कलशं शुभम्॥

सुगन्धिजलसंपूर्णं हस्तप्रक्षालनाय च।

पश्चात् पात्रं निधायाथ दीपान् प्रज्वालयेच्छुभान्॥

व्यजनं मुकुरं छत्रं चामरं दिक्षु मन्त्रवित्।

स्थापयेदिति शेषः। प्राङ्मुख इति बद्धपद्मासन इति चोपलक्षणम्।

उदङ्मुखः प्राङ्मुखो वा स्वस्तिकासनमास्थितः।

इति भैरवोक्तेः।

( निबन्धे )

ततः संकल्प्य विधिवत् सूर्यायार्घं निवेदयेत्।

सूर्यार्घदानमन्त्र उक्तो ( मेरुतन्त्रे )

ह्रौँह्रीँ सः सग्रहराशिनक्षत्रपदमुच्चरेत्।

ततश्च योगकरणपरिवृत्तासनेति च॥

संस्थितश्रीसूर्यायैष तेऽर्घः स्वाहा मनुः स्मृतः।

चतुस्त्रिंशदक्षरोऽयं सूर्यस्यार्घनिवेदने॥

तत्रैव पूजासंभारानुपक्रम्य।

यथायथं तु संस्थाप्य संस्कुर्यात् तानि चात्मवान्।

पुष्पनैवेद्यगन्धादीन् ह्रौँहुँफडिति मन्त्रतः॥

नाराचमुद्रया दृष्ट्या समया च विलोकयेत् ।
दृष्टं वाचाऽऽत्मनि ज्ञातं सम्यक् पुष्पादिदूषणम् ॥
अस्पृश्यस्पर्शनं चापि यदन्यायार्जितं च वा ।
तथा निर्माल्यसंसृष्टं कीटाद्यारोहणं च यत् ॥
तत्सर्वं नाशमायाति नैवेद्याद्यवलोकनात् ।
ततो रमिति मन्त्रेण शिखां दीपस्य संस्पृशेत् ॥
स तु स्याच्छुभदो दीपो निष्क्रव्यादः सुखप्रदः ।
पतङ्गकीटकेशादिदाहात् क्रव्यादिसंहते ॥
वसामज्जादिसंभूतैर्घृताद्यैरुपयोजितम् ।
अज्ञानरूपं तत्सर्वं दोषं स्पर्शाद्विनश्यति ॥
ह्रूँ बीजमुच्चरन् मन्त्री देवतीर्थेन संस्पृशेत् ।
पानीयं घटमध्यस्थं दृष्ट्वा सम्यक् च साधकः ॥
वामेन पाणिना धृत्वा वामपार्श्वस्थितं घटम् ।
पात्राधारेण मन्त्रेण संस्कुर्वन् संस्पृशेज्जलम् ॥
स्वसंज्ञाद्यक्षरं विन्दुचन्द्रार्धपरियोजितम् ।
तत्पात्रनाम ङेऽन्तं च हृदन्तः पात्रमन्त्रकः ॥
यदज्ञानादमेध्यादेसंसृष्टिरिह संगता ।
यदन्यदूषणं पात्रे तोये वाऽज्ञानतो भवेत् ॥
जलाशयशवस्पर्शाज्जलस्थानाच्च संगतम् ।
इत्यादिदूषणं नश्येत् तत् प्रिये देवपूजने ॥
ततः कृताञ्जलिपुटो वामदक्षिणपार्श्वयोः ।
गुरुं गणपतिं नत्वा पुरतः स्वेष्टदेवताम् ॥
( यामले )
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।

तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥
इति नत्वा गुरुं मन्त्री करशुद्ध्यादिकं चरेत् ।

करशुद्धिप्रकारस्तु ( मेरुतन्त्रे )

सुगन्धिपुष्पाण्यादाय चन्दनाक्तानि मन्त्रवित् ।
ह्सौँ मन्त्रेण करयोरस्त्रमन्त्रेण मर्दयेत् ॥
तत्पुष्पं वामहस्तेन समादाय च मस्तकम् ।
भ्रामयेत् परितस्तारं जपन्नाघ्राय तत् पुनः ॥
हौँ ॐ पूर्वं पठेच्छ्लोकमिमं स च निगद्यते ।
ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः ॥
मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ।
अस्त्रमन्त्रेण नाराचमुद्रयेशदिशि त्यजेत् ॥
करशुद्धौ ततोऽस्त्रेण कुर्यात् तालत्रयं ततः ।
ऊर्ध्वोर्ध्वमस्त्रमन्त्रेण दिग्बन्धमपि देशिकः ॥
तेन संजनितं तेजो वह्निप्राकारमुद्रया ।
रक्षेदात्मनि मूलेन प्राणायामत्रयं चरेत् ॥

प्राणायामलक्षणमुक्तम ( सारसमुच्चये )

प्राणो वायुः शरीरस्य आयामस्तस्य निग्रहः ।
प्राणायाम इति प्रोक्तो द्विविधः कथ्यते हि सः ॥
सगर्भो मन्त्रजापेन निगर्भो मात्रया भवेत् ।

मात्राकारलक्षणं च (अगस्त्यसंहितायाम्)

नलिनीपत्रसंहत्यां सूक्ष्मसूच्यग्रभेदने ।
दले दले च यः कालः स कालो लववाचकः ॥
लवैस्त्रुटिस्तु त्रिंशद्भिः कलां तावत्त्रुटिं विदुः ।
काष्ठा तावत्काला ज्ञेया तावत्काष्ठा निमेषकः ॥
स्वाङ्गुलिस्फोटतुल्यश्च मात्राऽष्टादशभिः स्मृता ।

( मेरुतन्त्रे )

मध्यामूलाद्यावदग्रमङ्गुष्ठेन निपीड्यते ।
मात्रा सा प्रोच्यते सद्भिर्योगेऽभीष्टं प्रयच्छति ॥
जानुं प्रदक्षिणीकुर्याद्यावत्कालेन हस्तकः ।
तावत्कालमिता मात्रा स्वनिःश्वाससमाऽपि च ॥

(अगस्त्यसंहितायामपि)

वामजानुनि हस्तस्य भ्रमणं यावता भवेत् ।
कालेन मात्रा सा ज्ञेया मुनिभिर्वेदपारगैः ॥

तत्रैव ।

प्राणायामैर्विना यद्यत् कृतं कर्म निरर्थकम् ।
अतो यत्नेन कर्त्तव्याः प्राणायामाः शुभार्थिभिः ॥

अत्र प्राणायामा इति बहुवचनम् । कपिञ्जलाधिकरणन्यायेन त्रित्वपरम् । तथा च ।

प्राणायामत्रयं कुर्यात् .... .... .... इति ।

(कालीक्रमे)

प्राणायामत्रयं कुर्यान्मूलेन प्रणवेन वा ।
अथ वा मन्त्रबीजेन यथोक्तविधिना सुधीः ॥

क्वचित् ।

प्राणायामं ततः कुर्याद् वाग्भवेन समाहितः—इत्युक्तम्

प्राणायामेऽङ्गुलिनियमो (ज्ञानार्णवे)

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥

(मेरौ)

पूरकः कुम्भकश्चैव रेचकश्चेति स त्रिधा ।

तत्प्रकारमाह (यामले)

दक्षाङ्गुष्ठेन दक्षे च घ्राणं संपीड्य मन्त्रवित् ।
इडया पूरयेद्वायुं मात्राषोडशभिः क्रमात् ॥

अङ्गुष्ठानामिकाभ्यां च धृत्वा नासाद्वयं ततः ।
ततस्तु कुम्भयेद्वायुं पूरकाणां चतुर्गुणैः ॥
अनामया तथा वामनासां धृत्वा तु दक्षिणे ।
द्वात्रिंशद्भिस्तु मात्राभिर्वायोश्च रेचनं चरेत् ॥
स्वचित्तं मूलचक्रे तु निधायासून् समभ्यसेत् ।

(महाकालसंहितायामपि)

मूलमन्त्रस्य जापेन मात्राषोडशकेन हि ।
वामनासापुटेनैव पूरयित्वाऽनिलं बलात् ॥
पुनस्तस्य चतुःषष्ट्याऽऽवृत्त्या वायुं विकुम्भ्य च ।
पुनर्द्वात्रिंशदावृत्त्या मूलमन्त्रस्य पार्वति ॥
नासापुटेन दक्षेण रेचयेत् सकलानिलम् ।
प्रकारेणोद्देशेनैकः प्राणायामो हि जायते ॥
आवश्यकं तत्त्रयं हि फलाधिक्यं समुच्चये ।

द्वितीयप्राणायाममाह (यामले)

ततो रेचनमार्गेण प्राणायामं प्रपूरयेत् ।
पुनः षोडशमात्राभिः कुम्भकं च समाचरेत् ॥
चतुःषष्टितमैर्मन्त्री नासापुटौ विधृत्य च ।
पुनश्च रेचयेद्वायुं द्वात्रिंशन्मात्रया बुधः ॥

वामनासापुटेनेति शेषः ।
तृतीयप्राणायामस्तत्रैवोक्तः ।

वामेनैव पिबेद्वायुं मात्राषोडशकैः क्रमात् ।
नासापुटौ निपीड्याथ पूरकस्य चतुर्गुणैः ॥
दक्षेण रेचयेद्वायुं द्वात्रिंशन्मात्रया बुधः ।

तन्त्रान्तरे ।

इडयाऽऽकर्षयेद्वायुं मात्राषोडशकैः क्रमात् ।

नासापुटौ निपीड्याथ पूरकस्य चतुर्गुणैः ॥
दक्षेण रेचयेद्वायुं द्वात्रिंशन्मात्रया बुधः ।

तन्त्रान्तरे ।

इडयाऽऽकर्षयेद्वायुं बाह्यं षोडशमात्रया ।
सुषुम्णामध्यगं सम्यग्द्वात्रिंशन्मात्रया शनैः ॥
नाड्या पिङ्गलया चैनं रेचयेद्योगवित्तमः ।
भूयोभूयः क्रमात् तस्य व्यत्यासेन समाचरेत् ॥

तस्येति पूर्वप्राणायामस्येति । व्यत्यासेन वैपरीत्येन ।

तदुक्तम् (सनत्कुमारसंहितायाम्)

येनैष रेचयेद्वायुं तेनैव पूरयेत् पुनः—इति ।

(यामले)

प्राणायामं विधायेत्थं भूतशुद्धिं समाचरेत् ।

(शारदायाम्)

शरीराकारभूतानां भूतानां यद्विशोधनम् ।
अव्ययब्रह्मसंयोगाद्भूतशुद्धिरियं मता ॥

(यामले)

भूतशुद्धिलिपिन्यासौ विना यस्तु प्रपूजयेत् ।
विपरीतफलं दद्यादभक्त्या पूजनं यथा ॥

भूतशुद्धिप्रकारमाह (मेरुतन्त्रे)

पादतो जानुपर्यन्तं चतुरस्रं सवज्रकम् ।
लँ युतं पीतवर्णं च भूस्थानं ब्रह्मदैवतम् ॥
अधिष्ठितं निवृत्त्याख्यकलया स्थानमुच्यते ।
उत्पत्तेस्तत् तु जीवानामेवं रूपं विचिन्तयेत् ॥
जान्वोरानाभिपर्यन्तमपां स्थानं सितप्रभम् ।
अर्धचन्द्रनिभं शृङ्गद्वयं तत् पद्मलाञ्छितम् ॥
षट्कोणं विन्दुभिः षड्भिर्युक्तं वँ बीजसंयुतम् ।

प्रतिष्ठाकलया युक्तं ध्यायेत् तद्विष्णुदैवतम् ॥
नाभ्यादिकण्ठपर्यन्तमारक्तं रुद्रदैवतम् ।
रँ बीजयुक्तं कलया युतं विद्याख्यया तथा ॥
दीप्तिमत्स्वस्तिकोपेतं त्रिकोणाकारतां गतम् ।
महाप्रलयसंस्थानं वह्नितत्त्वं विचिन्तयेत् ॥
कण्ठाद्भ्रूमध्यपर्यन्तं षट्कोणाकारतां गतम् ।
षड्बिन्दुलाञ्छितं वृत्तवेष्टितं कृष्णवर्णकम् ॥
वायुस्थानं शान्तिकलाधिष्ठितं शिवदैवतम् ।
यँ बीजयुक्तं सर्वेषां प्राणरूपं विचिन्तयेत् ॥
भ्रूमध्याद्ब्रह्मरन्ध्रान्तमाकाशस्थानमुच्यते ।
वृत्ताकारं धूम्रवर्णं महोच्चध्वजलाञ्छितम् ॥
शान्त्यतीताख्यकलयाऽधिष्ठितं शिवदैवतम् ।
हँ बीजयुक्तं ध्यात्वेत्थं देहे भूतानि विन्यसेत् ॥
धर्मकन्दसमुद्भूतं ज्ञाननालसुशोभितम् ।
पद्मं तत्कर्णिकासंस्थं प्रदीपकलिकानिभम् ॥
सुषुम्णावर्त्मना जीवं परमात्मनि योजयेत् ।
योगयुक्तेन विधिना सोऽहंमन्त्रेण साधकः ॥
तत्रैव सर्वभूतानि विलीनानि विचिन्तयेत् ।

तन्त्रान्तरे ।

विनिधाय निजाङ्के तु समुत्तानं करद्वयम् ।
मूलाधारस्थया शक्त्या चक्रभेदक्रमेण च ॥
हंसेन ब्रह्ममार्गेण जीवं ब्रह्मणि योजयेत् ।

(महाकालसंहितायाम्)

हृत्पुण्डरीकादात्मानं ज्वलद्दीपशिखाकृतिम् ।

सुषुम्णावर्त्मना ब्रह्मबीजमन्त्रेण मस्तके ॥
सहस्रदलमध्यस्थे संयोज्य परमात्मनि ।

(सिद्धान्तसंग्रहे)

ततः समस्ततत्त्वानि तत्रैव प्रविलापयेत् ।
पृथ्वीमप्सु च ता वह्नौ वह्निं वायौ समीरणम् ॥
प्रविलाप्य तथाऽऽकाशे आकाशं प्रकृतौ ततः ।
अपरब्रह्मरूपां तां मायाशक्तिं परात्मनि ॥
एवं समस्तदेहादिप्रपञ्चं परमात्मनि ।
प्रविलाप्य परब्रह्मरूपे तिष्ठेत् कियत् क्षणम् ॥

( मेरुतन्त्रे )

शरीरे वामकुक्षौ तु चिन्तयेत् पापपूरुषम् ।
वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम् ॥
ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥
तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥
खड्गचर्मधरं क्रूरमङ्गुष्ठपरिमाणकम् ।
अधोमुखं महाभीमं रूक्षं पापं विचिन्तयेत् ॥

(महाकालसंहितायाम्)

वामनासापुटेनाथ पूरयित्वा समीरणम् ।
सविन्दुवायुबीजं च धूम्रवर्णं विभाव्य च ॥
तदेव बीजं देवेशि पञ्चाशद्वारमीरयेत् ।
तदुत्पन्नेन वातेन शुष्कं देहं विचिन्त्य च ॥

सहैव रेचयेद्वायुं ततो नासापुटेन च।
वामेन वायुमुत्तोल्य सहस्रदलमध्यगम्॥
विभाव्य परमात्मानं चन्द्ररूपं वरानने।
सानुस्वारं वायुबीजं पञ्चाशद्वायुमुच्चरन्॥
तस्माच्चन्द्रात् सुधावृष्ट्या देहमाप्लाव्य सुन्दरि।
भूबीजेन स्वनादेन शुद्धं संयोज्य विग्रहम्॥
लीनीकृतानि यानीह पञ्चभूतानि वै पुरा।
यथास्थानं स्थापयित्वा ब्रह्मबीजं पुनर्गृणन्॥
अहंकारादिभिस्तत्त्वैः सहैव परमात्मनि।
जीवात्मानं समाकृष्य स्थापयित्वा हृदम्बुजे॥
देवीरूपमथात्मानं चिन्तयेत् क्षणमूर्जितः।

अत्र वायुबीजादेः पञ्चाशद्वारजपेन पूरकादिकमुक्तम्।
(यामलादौ तु)

नाभिदेशे च यँ कारं धूम्रं वायुं विचिन्तयेत्।
तेनैव शोधयेल्लिङ्गतनुं षोडशमात्रया॥
कर्मात्मकं चतुःषष्ट्या कुम्भयित्वा समाचरेत्।
द्वात्रिंशन्मात्रया दक्षे रेचनं तेन वा पुनः॥

इति षोडशादिमात्राभिः पूरकादिकमुक्तमिति संख्याविकल्पो द्रष्टव्यः।
(सिद्धान्तसंग्रहे)

पुनरुत्पातयेद्देहं पवित्रं परमात्मनः।
परब्रह्मात्मिका विद्या प्रकृतिर्मातृका परा॥
अजायत जगन्मातुराकाशं नभसोऽनिलः।
समीरणादभूद्वह्निर्वह्नेरापस्ततो मही॥
स्वीयमेभ्योऽपि भूतेभ्यस्तेजोरूपं कलेवरम्।
देवताराधने योग्यमुत्पन्नमिति भावयेत्॥

भूतशुद्धिरियं प्रोक्ता महापापौघनाशिनी ।

संक्षिप्तप्रकारमाह (उड्डीशे)

अथ वा कुण्डलीं देवीं पञ्चभूतादिना सह ।

परमात्मनि संयोज्य तयोरैक्यं विभाव्य च ॥

ध्यानयोगेन मनसा सोऽहंसोऽहं विभावयेत् ।

क चिच्छक्तिविशेषे तु हंस इति बीजादिकं परशिवे संयोज्य सोऽहमिमन्त्रेण स्वस्थानमानयेदित्युक्तम् ।

(मेरौ)

भूतशुद्धिं विधायैवं प्राणस्थापनमाचरेत् ।

(ज्ञानार्णवे)

प्राणप्रतिष्ठया पश्चाज्जीवं देहे नियोजयेत् ।

मुखवृत्तं समुच्चार्य हंसस्तु विपरीततः ॥

उद्धरेत् परमेशानि विद्येयं त्र्यक्षरी भवेत् ।

प्राणप्रतिष्ठामन्त्रोऽयं सर्वकर्मणि साधयेत् ॥

( मेरुतन्त्रे )

प्राणायामत्रयं कृत्वा मातृकान्यासमाचरेत् ।

(फेत्कारिणीतन्त्रे)

मन्त्रा मूकत्वमायान्ति विन्यासेन विना लिपेः ।

सर्वमन्त्रप्रसिद्ध्यर्थं तस्मादादौ लिपिं न्यसेत् ॥

तत्रादावन्तर्मातृकान्यासः । ( मेरुतन्त्रे )

अथान्तर्मातृकान्यासं वक्ष्ये तं शुद्धिकारकम् ।

यं कृत्वा योगिनां चित्तं पातके न प्रवर्त्तते ॥

मूलाधारध्वनिं श्रुत्वा प्रबुद्धा शक्तिकुण्डली ।

ज्वलत्पावकसंकाशा सूक्ष्मा तेजःस्वरूपिणी ॥

मूलाधाराच्छिरःपद्मं स्पृशन्ती विद्युदाकृतिः ।

तया स्पृष्टशिरःपद्मादमृतौघस्वरूपिणः ॥

निर्गतान्मातृकावर्णान् सुषुम्णावर्त्मना तनुम्।
स्थापयित्वा स्थितानेतानेवं ध्यात्वा प्रविन्यसेत्॥
कण्ठे विशुद्धिचक्राख्यं पद्मं षोडशपत्रकम्।
ऊर्ध्वास्यं प्राग्दलात् तत्र संस्थिताः षोडश स्वराः॥
एवं संचिन्त्य तारादिं विन्दुयुक्तं नमोऽन्तकम्।
वदेत् स्वरं च सर्वेषु वर्णेष्वप्येषु पद्धतिः॥
हृदयेनाहतं चक्रं ध्यायेद्द्वादशपत्रकम्।
पूर्वपत्रान्तर्दलेषु प्राग्वत् कादीन् प्रविन्यसेत्॥
मणिपूरं ततश्चक्रं चिन्तयेन्नाभिमण्डले।
दशपत्रं तत्र डादिवर्णान् प्राग्वद्विचिन्तयेत्॥
स्वाधिष्ठानं लिङ्गमूले चक्रं षड्दलमुच्यते।
चिन्तयेद्बादिलाँस्तत्र षड्वर्णानपि पूर्ववत्॥
मूलाधाराभिधं चक्रं पद्माकृति चतुर्दलम्।
वँ शँ षँ सँ तत्र चिन्त्यं पूर्वाशादिदलेषु च॥
आज्ञाख्यचक्रं भ्रूमध्ये द्विदलं कमलाकृति।
हँ क्षँ ध्यायेदयं कार्यो मनसा केवलेन तु॥
स्वदेहेऽनामया कार्यः पुष्पेण सुरमूर्त्तिषु।
अनादित्वान्न ऋष्यादिर्ब्रह्मवद्ध्यानमस्य तु॥

अथ बहिर्मातृकान्यासः। (शारदायाम)

ऋषिर्ब्रह्मा समुद्दिष्टो गायत्री छन्द ईरितम्।
सरस्वती समाख्याता देवता देशिकोत्तमैः॥
अक्लीबह्रस्वदीर्घान्तगतैः षड्वर्गकैः क्रमात्।
षडङ्गानि विधेयानि जातियुक्तानि देशिकैः॥

( मेरुतन्त्रे )

बहिर्न्यासमथो वक्ष्ये पूर्वोक्तब्रह्मरन्ध्रके ।
वर्णारविन्दे संध्यायेन्मातृकाख्यां सरस्वतीम् ॥

ध्यानं तत्रैव ।

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितकरतलां त्रीक्षणां पद्मसंस्था
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

ललाटे मुखवृत्तेऽक्षिश्रवोनासासु गण्डयोः ।
ओष्ठयोर्दन्तपङ्क्त्योश्च मूर्ध्नि वक्त्रे न्यसेत् स्वरान् ॥
बाह्वोः संधिषु साग्रेषु कचवर्गौ न्यसेत् सुधीः ।
टतवर्गौ पदोस्तद्वत् पार्श्वयोः पृष्ठदेशतः ॥
नाभौ कुक्षौ पवर्गं च हृदंशककुदं ततः ।
न्यस्य यादिचतुर्वर्णान् शादिषट्कं ततो न्यसेत् ॥
हृदादिकरयोरङ्घ्र्योर्जठरे वदने तथा ।
न्यासस्त्वयं वर्णमात्राहीनपाठप्रपूरकः ॥

( शारदायाम् )

न्यसेत् सर्गान्वितान् सृष्ट्या ध्यायेद्देवीं यथाविधि ।
विन्दुयुक्तान् न्यसेत् तत्र संहृत्याप्रतिलोमतः ॥

( मेरुतन्त्रे )

क्षमारभ्य अकारान्तो न्यासश्चेत् क्रियते यदि ।
संहारन्यासनामा स्याद्बिन्दुन्यास इतीरितः ॥

संहारक्रमेण ध्यानमाह ।

अक्षस्रजं हरिणपोतमुदग्रटङ्कं
विद्यां करैरविरतं दधतीं त्रिनेत्राम् ।

अर्धेन्दुमौलिमरुणामरविन्दसंस्थां
वर्णेश्वरीं प्रणमत स्तनभारनम्राम् ॥

(शारदायाम्)

सर्गविन्द्वन्तिकान् न्यस्य डार्णाद्यान् स्थितिवर्त्मना ।
विद्यात् पूर्वोदितान् विद्वानृष्यादीनङ्गसंयुतान् ॥

(भैरवी)

विन्दुसर्गयुतान् डादिठान्तान् वर्णान् स्थितौ न्यसेत् ।
पूर्वोक्ता एव मुन्याद्याः षडङ्गं ध्यानमुच्यते ॥
सिन्दूरकान्तिममिताभरणां त्रिनेत्रं
विद्याक्षसूत्रमृगपोतवरान् दधानम् ।
पार्श्वे स्थितां भगवतीमपि काञ्चनाभां
ध्यायेत् कराब्जधृतपुस्तकवर्णमालाम् ॥
न्यासाः कार्यास्तु वटुभिः स्थितिसंहारसृष्टयः ।
संहारसृष्टिस्थितयो गृहस्थस्तु न्यसेत् क्रमात् ॥
वानप्रस्थाश्च यतयः सृष्टिस्थितिलयक्रमात् ।
न्यासान् कुर्युरिति प्रोक्तः स्थितिन्यासः सविस्तरः ॥

अथ कलामातृकान्यासस्तत्रैव ।

वक्ष्ये कलामातृकाया न्यासं तस्य ऋषिः स्मृतः ।
प्रजापतिश्च गायत्री छन्दस्तस्यास्तु देवता ॥
सरस्वती मातृकाख्या नियोगोऽभीष्टतुष्टये ।
तारैः षडङ्गं कुर्वीत ह्रस्वदीर्घान्तरस्थितैः ॥

ध्यानमाह ।

हस्तैः पद्मं रथाङ्गं गुणमथ हरिणं पुस्तकं वर्णमालां
टङ्कं शुभ्रं कपालं दलममृतलसद्धेमकुम्भं वहन्तीम् ।

मुक्ताविद्युत्पयोदस्फटिकमणिजपाबन्धुरैः पञ्चवक्त्रै-
स्त्र्यक्षैर्वक्त्रोजनम्रां सकलशशिनिभां शारदां तां नमामि ॥

ध्यात्वैवं तारपूर्वां तामकाराद्यां च मातृकाम् ।
विन्दुयुक्तां ङेऽन्तकलानामाद्यां नमसाऽन्विताम् ॥
पूर्वोक्तशुद्धमात्राणां न्यासस्थानेषु विन्यसेत् ।

तारपूर्वामित्यादि । एतेन ॐ अंनिवृत्त्यै नम इत्यादयः प्रयोगाः संपन्नाः ।
कलानामान्याह ।

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथेन्धिका ।
दीपिता रेचिका चापि मोचिका च पराऽभिधा ॥
सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायनी ततः ।
व्यापिनी व्योमरूपा चानन्ता सृष्टिः समृद्धिका ॥
स्मृतिर्मेधा ततः कान्तिर्लक्ष्मीर्द्युतिः स्थिरा स्थितिः ।
सिद्धिर्जया पालिनी च शान्तिरीश्वरिका रतिः ॥
कामिका वरदा चान्या ह्लादिनी प्रीतिसंयुता ।
दीर्घा तीक्ष्णा तथा रौद्री भया निद्रा च तन्द्रिका ॥
क्षुधा स्यात् क्रोधिनी पश्चात् क्रियोत्कारी समृत्युका ।
पीता श्वेताऽरुणा पश्चादसिताऽनन्तयाऽन्विता ॥
उल्का कलामातृकैवं स्थानेऽकारादिके न्यसेत् ।

कलानामुत्पत्तिस्थानमाह ।

तत्र नादात्मनो जाताः स्वरजास्तु सदाशिवात् ।
अक्षमालां पुस्तकं च पाशं चापि कपालकम् ॥
हस्तैर्दधत्यः श्वेताभाः श्वेताभरणभूषणाः ।
अकाराद्ब्रह्मणो जाताः कचवर्गकला दश ॥
पीता अक्षस्रजं पद्ममभयं च कमण्डलुम् ।

हस्तैर्दधत्यो ध्येयास्ताः पीतगन्धानुलेपनाः ॥
विष्णोरुकारात् संजाताष्टतवर्गकला दश ।
श्यामा अभयशङ्खारिवरहस्ताः समीरिताः ॥
मकाराद्रुद्रतो जाताः पयवर्गकला नव ।
शरच्चन्द्रनिभा हस्तैरभयं शूलमेव च ॥
कपालं च वरं ध्येया दधत्य इति साधकैः ।
शकारादिकपञ्चानामीश्वराद्बिन्दुतोऽभवन् ॥
अभयं हरिणं टङ्कं वरं च करपल्लवैः ।
दधत्यो रक्तवर्णाश्च ध्येया न्यासे कलात्मके ॥

अथ केशवादिमातृकान्यास उक्तस्तत्रैव ।

केशवादिमातृकायाः साध्यनारायणो मुनिः ।
अमृतादा तु गायत्री छन्दो लक्ष्मीहरिः सुरः ॥
द्विरुक्तैः शक्तिश्रीकामैः षडङ्गानि समाचरेत् ।

शक्तिर्लज्जा ।

ध्यानमाह ।

शङ्खचक्रगदापद्मकुम्भादर्शाब्जपुस्तकम् ।
बिभ्रतं मेघचपलावर्णं लक्ष्मीहरिं भजे ॥
शक्तयस्तु निजाङ्केषु निषण्णाः सस्मिताननाः ।
एवं ध्यात्वा न्यसेच्छक्तिश्रीकामपुटिताक्षरम् ॥
तारादिहृदयान्ताश्च केशवाद्यास्तु शक्तयः ।
भ्यान्ता नमोऽन्ता उच्चार्याः स्थानेऽकारादिके न्यसेत् ॥

भ्यान्तामिति तान्त्रिकत्वात् साधुः । अयं च संक्षिप्तप्रकारः । अगस्त्यसंहितादौ तु चतुर्थ्यन्तचमान्तयोर्नाम्नोः पृथगुच्चार उक्तः । केशवाय च कीर्त्यै चेत्यादि वैष्णवीकल्पे ।

(मेरुतन्त्रे)

तारमायारमाकामानुक्त्वा वर्णान् समुच्चरेत् ।
भ्यामन्तौ च तथा देव्यै शक्त्यादित्रितयं पुनः ॥

हृदयान्तं समुच्चार्य ललाटादिषु विन्यसेत् ।

क्व चित् तु देवतानामान्ते पुनः शक्त्यादिबीजोच्चारो नोक्तः ।

(वैष्वक्सेन्यां तु)

तारादिर्मन्मथादिर्वा रमादिर्वा भवेदियम् ।

इति प्रणवादीनां विकल्प उक्तः ।

(शारदायां तु)

स्मराद्यां मातृकां न्यस्य केशवादिनमोन्विताम् ।

सधातुप्राणशक्त्याऽऽत्मयुक्तयाऽऽदिषु वैष्णवः ॥

इति कामबीजमात्रमुपात्तम् ।

कलामात्रा तु शाक्तानां नित्योऽयं विष्णुसेविनाम् ।

केशवादिनामान्याह ।

केशवः कीर्त्तिसंयुक्तः कान्तिर्नारायणान्विता ।

माधवस्तुष्टिसंयुक्तो गोविन्दः पुष्टिसंयुतः ॥

विष्णुश्च धृतिसंयुक्तः शान्तियुङ्मधुसूदनः ।

त्रिविक्रमः क्रियायुक्तो वामनो दययाऽन्वितः ॥

श्रीधरो मेधया युक्तो हृषीकेशस्तु हर्षया ।

पद्मनाभयुता श्रद्धा लज्जा दामोदरान्विता ॥

वासुदेवश्च लक्ष्मीयुक् संकर्षणसरस्वती ।

प्रद्युम्नः प्रीतिसंयुक्तोऽनिरुद्धो रतिसंयुतः ॥

चक्री जया गदी दुर्गा शार्ङ्गी तु प्रभयाऽन्वितः ।

खड्गी तु सत्यया युक्तः शङ्खी च चण्डया युतः ॥

हली च वाण्या संयुक्तो विलासिन्याऽथ मौशली ।

शूली च* जयया युक्तः पाशी विरजयाऽन्वितः ॥

अङ्कुशी विश्वया युक्तो मुकुन्दो विनदान्वितः ।

---

* विजयायुक्त इति २ पु. पा. ।

नन्दजस्तु* सुदयया नन्दी स्मृत्या समन्वितः ॥
नर ऋद्ध्या नरकजित् समृद्ध्या शुद्धियुग्घहरिः ।
कृष्णो† बुद्ध्या भुक्त्या सत्यो मतियुक् शाश्वतः‡ स्मृतः ॥
शौरिक्षमे शूरदमे§ जनार्दन उमान्वितः ।
भूधरः क्लेदिनीयुक्तो विश्वमूर्त्तिश्च क्लिन्नया ॥
वैकुण्ठो वसुधायुक्तो वसुदापुरुषोत्तमौ ।
बली तु परया युक्तो बलानुजपरायणे ॥
बालसूक्ष्मे वृषघ्नश्च संध्यायुक् प्रज्ञया वृषः ।
हंसः प्रभासमायुक्तो वराहो निशयाऽन्वितः ॥
विमलो मेधया|| युक्तो नृसिंहो विद्युता युतः ।
केशवाद्या मातृकोक्ता यादियोगश्च पूर्ववत् ॥

अस्य प्रयोगस्तु । ॐ ह्रीँ श्रीँ क्लीँ अं केशवकीर्त्तिभ्यां ह्रीँ श्रीँ क्लीँ नम इत्यादि । यादियोग इति । ॐ ह्रीँ श्रीँ क्लीँ यं त्वगात्मभ्यां वसुदापुरुषोत्तमाभ्यां ह्रीँ श्रीँ क्लीँ नम इत्यादिक्रमेण यकारादिषु त्वगादियोग इत्यर्थः ।

अथ श्रीकण्ठादिमातृकान्यासस्तत्रैव ।

अथ शैवहिता वक्ष्ये श्रीकण्ठादिकमातृकाः ।
मुनिः स्याद्दक्षिणामूर्त्तिर्गायत्री छन्द ईरितम् ॥
अर्धाद्रिजो हरो देवो नियोगः सर्वसिद्धये ।
हलो बीजानि गुह्ये तु पादयोः स्वरशक्तयः ॥
ह्रस्वदीर्घान्तरे कृत्वा प्राग्वद्वर्गान् हसैरयम् ।
षड्दीर्घसंयुतैः कृत्वा षडङ्गानि न्यसेत् तनौ ॥

---

* नन्दजः सुनदायुक्त इति ३ पु. पा. ।
† कृष्णो भुक्त्या बुद्ध्या सत्य इति संप्रतिमुद्रितशारदानुसारः पाठः ।
‡ सात्वत इति २ पु. पा. ।
§ शूररमे इति संप्रतिमुद्रितशारदानुसारः पाठः ।
|| विमलोऽमोघयेति संप्रतिमुद्रितशारदानुसारः पाठः ।

ह्रस्वदीर्घान्तर इति । अँ कँ खँ गँ घँ ङँ आँ हूसामित्यादिभिः षडङ्गं कुर्यादित्यर्थं ध्यानमाह ।

बन्धूककाञ्चननिभं रुचिराक्षमालां
 पाशाङ्कुशौ च वरदं निजबाहुदण्डैः ।
बिभ्राणमिन्दुशकलाभरणं त्रिनेत्र-
 मर्धाम्बिकेशमनिशं वपुराश्रयामः ॥
हसौँ च मातृकामुक्त्वा देवान्ते चेशमुच्चरेत् ।
ङेन्तं ङेन्तां च तच्छक्तिं नमोन्तान् मातृकास्थले ॥
त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राण्यसून् वदेत् ।
शक्तिं क्रोधं तथाऽऽत्मानं ङेन्तं यादिदशस्वपि ॥

हसौँ अँ श्रीकण्ठेशाय पूर्णोदर्यै नम इति प्रयोगः ।

त्वगिति । हसौँ यँ त्वगात्मने बालीशाय सुमुख्यै नम* इत्येवं यादिदशवर्णेषु त्वगादियोगः कर्तव्य इत्यर्थः ।

शिवशक्तिनामान्याह ।

श्रीकण्ठपूर्णोदर्यौ चानन्तो विरजयाऽन्वितः ।
सूक्ष्मेशः शाल्मलीयुक्तो लोलाक्षीयुक् त्रिमूर्त्तिकः ॥
अमरेशो वर्त्तुलाक्ष्या चार्घीशो दीर्घघोणया ।
भारमूर्त्ति†र्दीर्घमुख्या तिथीशो गोमुखीयुतः ॥
स्थाण्वीशो दीर्घजिह्वायुग्घरः कुण्डोदरीयुतः ।
ऊर्ध्वकेश्या च झिण्टीशो भौतिको विकृतास्यया ॥
सद्योजातो ज्वालमुख्याऽ‡नुग्रहोल्कामुखीयुतः ।
अक्रूर श्रीमुखी महासेनो विद्यामुखीयुतः ॥

---

* ह्रीँ हुं हसौँ त्वगात्मने बालीशाय सुमुख्यै नम इति मुक्तिकल्लोलिनी । तत्रैव शारदास्थपाठोऽप्युक्तः । ह्रीँ श्रीँ हुं अँ श्रीकण्ठेशपूर्णोदरीभ्यां नम इति विशेषः ।

† भारभूतिरिति शारदानुसारः पाठः ।

‡ अनुग्रह उल्कामुखीयुत इत्यत्रानुग्रहोल्कामुखीयुत इति प्रामादिकः पाठः ।

क्रोधीशश्च महाकाल्या चण्डेशेन सरस्वती।
पञ्चान्तके सर्वसिद्धिर्गौर्या युक्तः प्रकीर्त्तितः॥
शिवोत्तमेशो* विन्यस्यो युक्तस्त्रैलोक्यविद्यया।
एकरुद्रो मन्त्रशक्त्या कूर्मेशश्चाष्ट†शक्तियुक्॥
एकनेत्रो भूतिमात्रायुक्तोऽथ चतुराननः।
लम्बोदर्या युतः प्रोक्तस्त्वजेशो द्राविणीयुतः॥
सर्वेशो नागरीयुक्तः सोमेशः खेचरीयुतः।
लाङ्गलीशश्च मञ्जर्या दारुकेशेन रूपिणी॥
वीरिण्या त्वर्धनारीशो ह्युमाकान्तः पुनर्युतः।
काकोदर्या तथाऽऽषाढी पूतनायुक्त ईरितः॥
दण्डीशो भद्रकालीयुगद्रीशो ‡योगिनीयुतः।
मीनेशः शङ्खिनीयुक्तो §मेषेशस्तर्जनीयुतः॥
लोहितः कालरात्र्या च शिखीशः कूर्दिनीयुतः‖।
छगलण्डः कपर्दिन्या द्विरण्डेशश्च वज्रया॥
महाकालो जयायुक्तो बालीशः सुमुखीयुतः।
भुजङ्गो रेवतीयुक्तः पिनाकी माधवीयुतः॥
खड्गीशो वारुणीयुक्तो वकेशो वायवीयुतः।
श्वेतो रक्षोवधारिण्या भृगुः सहजया युतः॥
नकुलीशश्च लक्ष्मीयुक् शिवेशो व्यापिनीयुतः।
संवर्त्तको महामायायुक्त एतास्तु मातृकाः॥

---

* शिव उत्तमेश इत्यत्र शिवोत्तमेश इति प्रामादिकः।
† –अष्टमशक्तियुगिति शारदानुसारः पाठः।
‡ –गत्रीश इति शारदानुसारः पाठः।
§ मेषेशो गर्जिनीयुत इति शारदानुसारः पाठः।
‖ कुब्जिनीयुत इति शारदानुसारः पाठः।

श्रीकण्ठाद्या य ईशान्तस्तत्र नेशं प्रयोजयेत् ।

य इति । य ईशान्तो भवति तदन्ते पुनरीशपदं न देयमित्यर्थः । एतेन श्रीकण्ठादिनामान्ते ईशपददानमावश्यकमित्यनुज्ञातम् ।

तथा ।

सर्वे रुद्राः स्मृता रक्ता धृतशूलकपालकाः ।
शक्तयो रुद्रपीठस्थाः सिन्दूरारुणविग्रहाः ॥
रक्तोत्पलकपालाभ्यामलंकृतकराम्बुजाः ।

अथ भुवनेश्वरीमातृकान्यासमाह तत्रैव ।

येनोपास्या महाविद्या दश तस्याधिकारिताः ।
भुवनेशीबीजपूर्वमातृकान्यासने सुराः ॥
ऋषिः शक्तिस्तु गायत्री छन्दः स्यान्मातृकामयी ।
भुवनेशी देवताऽथ नियोगः स्वेष्टसिद्धये ॥
ह्रस्वदीर्घान्तरगतैः षड्वर्गैर्दीर्घसंयुतैः ।
प्राग्वद्धरैः षडङ्गं स्यादङ्गुष्ठादि तथैव च ॥

हरैरिति । आकारादिषड्दीर्घस्वरयुक्तैर्हकाररकारैरित्यर्थः । प्रयोगस्तु । अँ कँ खँ गँ घँ ङँ आँ ह्रां हृदयाय नम इत्यादि ।

ध्यानमाह ।

उद्यत्कोटिदिवाकरप्रति*निभा तुङ्गोरुपीनस्तनी
बद्धार्धेन्दुकिरीटहाररसनामञ्जीरसंशोभिता ।
बिभ्राणा करपङ्कजैर्जपवटीं पाशाङ्कुशौ पुस्तकं
दिश्यान्नो जगदीश्वरी त्रिनयना पद्मे निषण्णा सुखम् ॥
लज्जाबीजं पूर्वमुक्त्वा मातृकान्यास एव हि ।
भुवनेशीमातृकाणां न्यासकैर्यत्र साधने ॥

अथ लक्ष्मीमातृकान्यासस्तत्रैव ।

श्रीबीजपूर्वकः कार्यो लक्ष्मीकामैर्गृहस्थितैः ।

* प्रतिभटोत्तुङ्गोरु इति शारदा ।

ऋषिर्भृगुश्च गायत्री छन्दो मातृस्वरूपिणी ॥
लक्ष्मीस्तु देवता प्रोक्ता हरस्थाने शरौ कुरु ।
न्यासार्थं तु षडङ्गादेः शेषं श्रीबीजपूर्वकम् ॥

हरस्थाने शरौ इति। भुवनेशीमातृकोक्तहकाररकारयोः स्थाने शकाररकारौ दद्यादित्यर्थः। तेन ह्रामित्यादेः स्थाने श्रामित्यादि सिध्यति।

ध्यानमाह।

विद्युद्दामसमप्रभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैः
शुण्डादण्डसमुद्धृतामृतघटैरासिञ्च्यमानामिमाम्।
बिभ्राणां करपङ्कजैर्जपवटीं पद्मद्वयं पुस्तकं
भास्वद्रत्नसमुज्ज्वलां कुचनतां ध्यायेज्जगत्स्वामिनीम्॥

अथ संमोहनमातृकान्यासस्तत्रैव।

कामनामात्रसिद्ध्यर्थं कामबीजादि पूर्ववत्।
कुर्याच्च मातृकान्यासं मुनिः संमोहनो मतः॥
गायत्री छन्द उद्दिष्टं देवता मातृकामयी।
संमोहिनी नाम देवी पूर्वयुक्त्या षडङ्गकम्॥

पूर्वयुक्तेति। लक्ष्मीमातृकोक्तयुक्त्या संमोहनमातृकायाः कामबीजपूर्वकत्वेन शकाररकारयोः स्थाने संयुक्तककारलकारौ दत्वा षडङ्गन्यासः कार्य इत्यर्थः।

ध्यानमाह।

बालार्ककोटिरुचिरां स्फटिकाक्षमालां
कोदण्डमिक्षुजनितस्मरपञ्चबाणाम्।
विद्यां च हस्तकमलैर्दधतीं त्रिनेत्रां
ध्यायेत् समस्तजननीं नवचन्द्रचूडाम्॥

संमोहनमातृकान्तरमाह।

शक्तिश्रीकामबीजादिमातृकान्यासतो नृणाम्।
शत्रुत्वाद्या मन्त्रदोषा नश्यन्ति बहुवर्णजाः॥
महासंमोहन ऋषिर्गायत्री छन्द ईरितम्।

संमोहिनी नाम देवी न्यासः प्राङ्मातृकासमः ॥

ध्यानं यथा ।

ध्यायेयमक्षवलयेक्षुशराशपाशां
पद्मद्वयाङ्कुशशरां नवपुस्तकं च ।
आबिभ्रतीं निजभुजैररुणां कुचार्त्तां
संमोहिनीं त्रिनयनां नवचन्द्रचूडाम् ॥

अथ गणेशमातृकान्यासस्तत्रैव* ।

सर्वविघ्ननिरासार्थमवश्यं न्यासमाचरेत् ।
गणेशमातृकायास्तु मुनिर्गणक ईरितः ॥
निवृद्गायत्रिका छन्दो देवः शक्तिविनायकः ।
स्मृत्या दीर्घाढ्यया त्वङ्गं कृत्वा ध्यायेद्गजाननम् ॥

स्मृतिर्गकारः ।

ध्यानं यथा ।

शूलाङ्कुशवराभीतिपाणिं रक्ताब्जहस्तया ।
प्रियया ऽऽलिङ्गितं रक्तं त्रिनेत्रं गणपं भजे ॥
एवं ध्यात्वा न्यसेत् स्वीयबीजपूर्वाक्षरान्वितम् ।

स्वीयेति । स्वीयबीजं गमिति बीजं पूर्वं येषां तादृशानि यान्यक्षराणि अकारादीनि तैरन्वितं यथा भवति तथा वक्ष्यमाणशक्तिसंयुक्तान् वक्ष्यमाणगणेशान् न्यसेदित्यर्थः ।

तथा ।

विघ्नेशो ह्रीसमायुक्तो विघ्नराजः श्रिया युतः ।
विनायकः पुष्टियुक्तः शान्तियुक्तः शिवोत्तमः ॥
विघ्नकृत् स्वस्तिसंयुक्तो विघ्नहर्त्ता सरस्वती ।
गणस्तु स्वाहया युक्त एकदन्तस्तु मेधया ॥
द्विदन्तः कान्तिसंयुक्तो गजवक्त्रेण कामिनी ।
निरञ्जनो मोहिनीयुक् कपर्दी तु नदीयुतः ॥

---

* एतन्न्यासपरवचनानां मेरावानुपूर्वीपाठ उपलभ्यते ।

दीर्घजिह्वः पार्वतीयुक् ज्वालिन्या शङ्कुकर्णकः ।
वृषध्वजो नन्दया युक् सुयशागणनायकौ ॥
गजेन्द्रः कामरूपिण्या शूर्पकर्णस्तथोमया ।
त्रिलोचनस्तेजोवत्या लम्बोदरस्तु सत्यया ॥
महानन्दश्च विघ्नेश्या चतुर्मूर्त्तिः सुरूपया ।
सदाशिवः कामदायुगामोदो मदजिह्वया ॥
दुर्मुखो भूतिसंयुक्तः सुमुखो भौतिकायुतः ।
प्रमोदः सितया युक्त एकपादो रमायुतः ॥
द्विजिह्वो महिषीयुक्तः शूरस्यापि भुजङ्गिनी ।
वीरोऽपि कर्णया युक्तः षण्मुखो भृकुटीयुतः ॥
वरदो लज्जया वामदेवः स्याद्दीर्घघोणया ।
धनुर्धरावक्रतुण्डौ द्विरण्डो यामिनीयुतः ॥
सेनानी रात्रिसंयुक्तः कामान्धो ग्रामणीयुतः ।
मत्तः शशिप्रभायुक्तो विमले लोललोचना ॥
मत्तवाहनचाश्चल्ये जटी दीप्तिसमान्वितः ।
मुण्डी सुभगया युक्तः खड्गी दुर्भगया तथा ॥
वरेण्यश्च शिवायुक्तो भगीयुग्वृषकेतनः ।
भक्तिप्रियो भगिन्या तु गणेशो भोगिनीयुतः ॥
मेघनादः सुभगया व्यापी स्यात् कालरात्रियुक् ।
गणेश्वरः कालिकेति प्रोक्ता विघ्नेशमातृका ॥
त्वगादियोगो यादीनां पूर्ववत् परिकीर्त्तितः ।
(निबन्धे)
ओमाद्यन्तो नमोन्तो वा सविन्दुर्विन्दुवर्जितः ।
पञ्चाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः ॥

चतुर्धा मातृका प्रोक्ता केवला विन्दुसंयुता ।
सविसर्गा सोभया च रहस्यं श्रृणु कथ्यते ॥
विद्याकरी केवला च सोभया भुक्तिदायिनी ।
सविसर्गा पुत्रदात्री सविन्दुर्वित्तदायिनी ॥

( कुलावतारे )

मायालक्ष्मीबीजपूर्वो वाग्भवाद्योऽथ वा पुनः ।
त्रितारादयो रमाद्यो वा न्यस्तव्यः साधकोत्तमैः ॥

त्रितारश्च ।

वाग्भवं कामराजं च श्रीबीजं च त्रितारकम् ।
शक्तिश्रीकामबीजं वा त्रितारं मुनयो विदुः ॥

इति तन्त्रान्तरे प्रोक्तम् ।
बीजकोशे तु ।

वाग्भवं भुवनेशानि श्रीबीजं च त्रितारकम्—इत्युक्तम् ।

( सिद्धान्तसारे )

वाग्भवाद्या वाक्प्रदा स्यात् त्रिताराद्या तु कामदा ।
श्रीबीजाद्या महैश्वर्यदायिनी मातृका स्मृता ॥

( वीरचूडामणौ )

मातृकात्रितयं कुर्यात् सृष्टिसंहारकस्थितिम् ।
न्यासं कुर्यान्महेशानि कल्पोक्तं च विशेषतः ॥

( कुलावतारे )

सृष्टेस्तु सुतपुष्ट्यादि स्थितेस्तत्पालनं भवेत् ।
संहृतेर्दोषसंहारं तस्मात् त्रितयमाचरेत् ॥

( सिद्धान्तसारे )

सर्गे सर्गान्वितान् न्यस्येत् संहृतौ च सविन्दुकान् ।
डादिठान्तान् न्यसेद्वर्णान् स्थितौ तदुभयान्वितान् ॥

(त्रिशक्तिरत्ने तु)

अकथादित्रिभेदन विभज्य मनुवल्लिपिम्।
कवर्गं प्रथमं न्यस्येदवर्गं च ततः परम्॥
तवर्गं विन्यसेत् पश्चात् स्थितिरेषा प्रकीर्त्तिता—इत्युक्तम्।

मातृकान्यासमुद्रा उक्तास्तन्त्रान्तरे।

ललाटेऽनामिकामध्ये न्यसेच्च मुखवृत्तके।
तर्जनीमध्यमानामा विन्यसेच्चैव नेत्रयोः॥
तर्जन्यनामे संयोज्य न्यसेत् साधकसत्तमः।
अङ्गुष्ठं कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठकौ नसोः॥
मध्यमां गण्डयोर्न्यस्य मध्यमामोष्ठयोर्न्यसेत्।
अनामां दन्तयोर्न्यस्य मध्यमामुत्तमाङ्गके॥
मुखेऽनामां मध्यमां च हस्ते पादे च पार्श्वयोः।
कनिष्ठानामिकामध्या न्यस्तव्याः पृष्ठतस्तथा॥
ताः साङ्गुष्ठा नाभिदेशे सर्वाः कुक्षौ च विन्यसेत्।
हृदये साधकः सर्वमंसयोश्च ककुत्स्थले॥
हृत्पूर्वहस्तपत्कुक्षिमुखेषु तलमेव च।
एतास्तु मातृकामुद्राः क्रमेण परिकीर्त्तिताः॥
अज्ञात्वा विन्यसेद्यस्तु न्यासः स्यात् तस्य निष्फलः।

(मन्त्रतन्त्रप्रकाशे)

पुष्पैरनामया वाऽपि मनसा वा न्यसेदसून्।

अनामयेत्यस्य साङ्गुष्ठयेति।

अङ्गुष्ठानामिकाभ्यां तु न्यासः सर्वत्र संमतः।

इति (पद्मवाहिनी) वचनात्।

तेन च। पुष्पैर्देवतामूर्त्तौ अङ्गुष्ठानामिकाभ्यां स्वदेहे मनसा मूलाधारादिषु न्यासो बोध्यः। इदं च ऋष्यादिकरषडङ्गन्यासबहिर्मातृकादिव्यतिरिक्तेषु तत्र मुद्रान्तराभिधानात्।

Z

(डामरे)

कृत्वा तु मातृकान्यासं न्यासानन्यान् समाचरेत् ।
मूलमन्त्रस्य ऋष्यादिकराङ्गादि ततो न्यसेत् ।

(योगिनीतन्त्रे)

ऋष्यादीन् विन्यसेद्देवि चतुर्थीहृदयान्तकान् ।

(बृहन्मत्स्यसूक्ते)

ऋषिन्यासो मूर्ध्नि देशे छन्दस्तु मुखपङ्कजे ।
देवता हृदये चैव बीजं तु गुह्यदेशके ॥
शक्तिं च पादयोश्चैव सर्वाङ्गे कीलकं न्यसेत् ।

(मेरुतन्त्रे)

ऋषेर्गुरुत्वाच्छिरसि वर्णात्वाच्छन्दसो मुखे ।
धारणं प्रोच्यते चित्ते ज्ञेयत्वाद्देवता हृदि ॥

ऋषिस्तु ।

महेश्वरमुखाज्ज्ञात्वा यः साक्षात् तपसा मनुम् ।
संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः ॥

इति (कालानलतन्त्रे) प्रोक्तम् ।

(तथा)

गुरुत्वान्मस्तके चास्य न्यासश्च परिकीर्त्तितः ॥

(मेरुतन्त्रे)

ऋ-गताविति धातोस्तु ऋवर्णः प्रापको मतः ।
षिवर्णार्थस्तु विज्ञानमतस्तत्प्रापकस्तु सः ॥

(बृहन्मत्स्यसूक्ते)

सर्वेषां मन्त्रतत्त्वानां छादनाच्छन्द उच्यते ।
अक्षरत्वात् पदत्वाच्च मुखे छन्दः समीरितम् ॥
ऋषिच्छन्दोऽपरिज्ञानान्न मन्त्रफलभाग्भवेत् ।
दौर्बल्यं चापि मन्त्राणां विनियोगमजानताम् ॥

ऋष्यादिन्याससमुद्रा उक्तास्तन्त्रान्तरे।

ऋषिश्छन्दोदेवतानां न्यासे चाङ्गुलयः स्मृताः।
चतस्रोऽङ्गुष्ठरहिताः शक्त्यन्तं विन्यसेत् ततः॥
कीलकं व्यस्तहस्ताभ्यां सर्वाङ्गे साधकाग्रणीः।

अथाङ्गमुद्रास्तत्रैव।

हृदये मध्यमानामातर्जनीभिर्न्यसेद्बुधः।
मध्यमातर्जनीभ्यां च शिरसि न्यासमाचरेत्॥
अङ्गुष्ठेन शिखायां च दशभिः कवचे न्यसेत्।
नेत्रेषु तिसृभिश्च स्यादस्त्रमूर्ध्वोर्ध्वगं त्रिशः॥
मध्यमातर्जनीभ्यां स्यादङ्गमुद्राः स्मृता इमाः।

षडङ्गार्थमाह।

हृदयायेति शब्देन हृत्स्थो देवः सविग्रहः।
उच्यते नम इत्यस्य ज्ञानं तद्विषयं परम्॥
शिरःशब्दो देवताया उत्कृष्टत्वाभिधायकः।
स्वाहेति विषयाः सर्वे देवतायां समर्पिताः॥
शिखायै तत्स्वरूपत्वं वषड्वापि तदुच्यते।
देवताया व्यापकत्वं कवचायाभिधीयते॥
हुमिति व्यापकं तेजो देवतायाः प्रकाश्यते।
नेत्रशब्देन देवस्य नित्यज्ञानं प्रकाश्यते॥
वौषडिति तदेवोक्तमस्त्रशब्देन वारणम्।
अनिष्टस्य फट्शब्देन दाहकं तेज उच्यते॥
ज्ञात्वैवमङ्गमन्त्रार्थमङ्गन्यासं करोति यः।
करगास्तस्य सर्वार्था पूज्यते त्रिदशैरपि॥

( मेरुतन्त्रे )

क्रीडार्थकाद्दिवो धातोः संपूर्णं देवतापदम्।

साधकाय ददातीति देवता परिकीर्त्तिता ॥
रज्यमानो हृदाऽऽत्मानं हृदयेऽस्ति चिदात्मकः ।
तस्मात् तत्र नमस्कुर्यान्मुख्याङ्गुष्ठेन संस्पृशेत् ॥
स्वाहया क्रियते सम्यग्विषयाहरणं यतः ।
अनामातर्जनीभ्यां तैराकृष्टैः कं निषेव्यते ॥
शिखा महो वषड्वाऽङ्गं शिखयाऽऽत्मतनुग्रहः ।
यस्मात् तस्माद्वषडिति क्रियतेऽङ्गुलमध्यया ॥
ग्रहणार्थ-कवच्-धातुर्हुँ मन्त्रेण स गृह्यते ।
शरीरेऽतस्तु कवचं तर्जन्याऽनामयाऽपि तत् ।
यथार्थज्ञानकृद्वौषट् तन्नेत्राभ्यां प्रजायते ॥
तस्मादुक्तं तत्र वौषट् तर्जन्याद्यैस्तु तत् स्मृतम् ।
एकाक्षत्वात् कुबेरादिदैवते ङेऽन्तमुच्चरेत् ॥
भ्यान्तं विष्णवादिके रुद्रादौ तु नेत्रत्रयात्मकम् ।
आध्यात्मिकादिरूपं यत् साधकस्य विनाशयेत् ॥
अविद्याजातमस्त्रं तत् फट्तालाभ्यां प्रपञ्च्यते ।

( यामले )

न्यसेदङ्गुष्ठमुख्येषु जातिभिर्नमसाऽथ वा ।
हृदादिषु षडङ्गेषु जातिषट्केन विन्यसेत् ॥
नमः स्वाहा वषट् हुँ वौषट् फडेताश्च जातयः ।

अन्यत्रापि ।

जातिषटमिति प्रोक्तं हृदाद्यस्त्रान्तसंयुतम् ।

तथा च ( शारदायाम )

हृदयादिषु विन्यस्येदङ्गमन्त्रांस्ततः सुधीः ।
हृदयाय नमः पूर्वं शिरसे वह्निवल्लभाम् ॥

शिखायै वषडित्युक्तं कवचाय हुमीरितम् ।
नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति क्रमात् ॥
षडङ्गमन्त्रानित्युक्तान् षडङ्गेषु नियोजयेत् ।

अङ्गन्यासस्य नित्यतोक्ता ( ज्ञानमालायाम् )

पूजाजपार्चनाहोमाः सिद्धमन्त्रकृता अपि ।
अङ्गन्यासेन विधुरा न दास्यन्ति फलान्यमी ॥

( मेरुतन्त्रे )

षडङ्गं विन्यसेन्मन्त्री पञ्चाङ्गं वा यथाविधि ।
यस्य मन्त्रस्य पञ्चाङ्गं नेत्रं तस्य विहीयते ॥
अङ्गैर्विहीनस्य मनोरङ्गं तेनैव कल्पयेत् ।

तथा ।

आगमोक्तेन मार्गेण न्यासान् नित्यं करोति यः ।
देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥
यो न्यासकवचच्छन्नो मन्त्रं जपति तं प्रिये ।
दृष्ट्वा विघ्नाः पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥
अकृत्वा न्यासजालं यो मूढात्मा कुरुते जपम् ।
विघ्नैः स बाध्यते नूनं व्याघ्रैर्मृगशिशुर्यथा ॥
न्यासानां प्रचुरत्वेन फलानामपि भूरिता ।
उक्तन्यासो न हि त्याज्यस्त्वधिकं कामतश्चरेत् ।

(यामले)

ततस्तु योगपीठाख्यं स्वदेहे न्यासमाचरेत् ।
आधारशक्तिं प्रकृतिं तथा कूर्ममनन्तकम् ॥

अन्यत्र तु मूलप्रकृत्यनन्तरं कालाग्निरुद्रोऽप्युक्तः ।

ततश्च मूलप्रकृतिं रुद्रं कालानलाह्वयम्—इति ।

मेरौ तु मूलप्रकृतेः प्रागेव कालाग्निरुद्र उक्तः । तदनन्तरमाधारशक्तिरुक्ता ।

तथा ।

वराहं पृथिवीं क्षीरसिन्धुं द्वीपं च रत्नजम् ।

वैष्णवे तु श्वेतद्वीप उक्तः ।

मणिजं मण्डपं कल्पपादपं मणिवेदिकाम् ।

रत्नपीठं तथैतानि मन्त्री हृद्येव विन्येसत् ॥

क्व चिन्मणिमण्डपानन्तरं नन्दनोद्यानमप्युक्तम् ।

( शारदायाम् )

अंसोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन देशिकः ।

धर्मं ज्ञानं च वैराग्यमैश्वर्यं विन्यसेत् क्रमात् ॥

धर्मादयः स्मृताः पादाः पीठगात्राणि चापरे ।

मुखपार्श्वनाभिपार्श्वेष्वधर्मादीन् प्रकल्पयेत् ॥

अनन्तं हृदये पद्मं यस्मिन् सूर्येन्दुपावकान् ।

एषु स्वस्वकला न्यस्येन्नामाद्यक्षरपूर्विकाः ॥

अकाराद्यं न्यसेत् सूर्यमुकाराद्यं निशाकरम् ।

मकाराद्यं न्यसेद्वह्निं कलामण्डलसंयुतम् ॥

सत्त्वादींस्त्रीन् गुणान् न्यस्येत् तथैवात्र गुरूत्तमः ।

सत्त्वं रजस्तम इति यस्य भेदाः समीरिताः ॥

आत्मानमन्तरात्मनं परमात्मानमत्र तु ।

आदिबीजत्रयं न्यस्य शक्तिबीजपुरस्सरम् ॥

ज्ञानात्मानं प्रविन्यस्य न्यसेत् पीठमनुं ततः ।

एवं देहमये पीठे चिन्तयेदिष्टदेवताम् ॥

देवताध्यानस्य द्वैविध्यमुक्तम् ( मेरुतन्त्रे )

ध्यानं कुर्यात् ततो तत्तत्कल्पोक्तेनैव वर्त्मना ।

तदपि द्विविधं प्रोक्तं सगुणं निर्गुणं तथा ॥

आत्मनो हृदयाम्भोजे कर्णिकाकेशरोज्ज्वले ।

प्रफुल्ले सोमसूर्याग्निमण्डलेन विराजिते ॥
स्वीयेष्टदेवतां तत्र विद्यादागमबोधिताम्।
एवं यद्वेदनं तद्धि सगुणं ध्यानमुच्यते ॥
यज्जीवब्रह्मणोरैक्यं सोऽहं स्यामिति वेदनम्।
तदेव निर्गुणं ध्यानमिति ब्रह्मविदो विदुः—इति।

अत्र न्यासानन्तरं ध्यानात् प्रागेव मुद्राप्रदर्शनमुक्तम्।
(मेरुतन्त्रे)

कराङ्गन्यासमुख्याँस्तु न्यासानन्यान् समाचरेत्।
तत्तत्कल्पोदितान् पश्चात् तत्तन्मुद्राः प्रदर्शयेत्—इति।

अन्यत्र तु।

एवं ध्यात्वा महेशानि ततो मुद्राः प्रदर्शयेत्—इति।

ध्यानान्तरं तदुक्तम्।
(महाथर्वणरहस्ये) तु न्यासध्यानान्तर्यागानुक्त्वा।

ततश्च तन्मयो भूत्वा मुद्रा एताः प्रदर्शयेत्—इत्युक्तमिति।

तत्र कालविकल्पो बोध्यः।
मुद्राबन्धने तत्प्रदर्शनत्यागयोश्च मन्त्रभेदा (मेरुतन्त्रे) उक्ताः।

ॐ क्लीमिति तु बीजाभ्यां मुद्राया बन्धनं स्मृतम्।
दर्शयेन्मूलमन्त्रेण ह्सूँ बीजेन संत्यजेत् ॥

(सनत्कुमारसंहितायाम्)

अकृत्वा मानसं यागं न कुर्याद्बहिरर्चनम्।

अन्तर्यागविधिः (बृहदुत्तरतन्त्रे)

हृत्पद्मकर्णिकामध्ये योगपीठोपरि स्थिताम्।
ध्यात्वा तां गन्धपुष्पाद्यैर्मानसैरुपचारकैः ॥
संपूज्य विधिवत् पश्चान्मानसं होममाचरेत्।

(श्यामारहस्य) धृतवचनानि।

अमायामनहंकारमरागममदं तथा।

अमोहदमदम्भं च अद्वेषाक्षोभकौ तथा ॥
अमात्सर्यमलोभं च दश पुष्पंविदुर्बुधाः ।
अहिंसापरमं पुष्पं पुष्पमिन्द्रियनिग्रहम् ॥
दयापुष्पं धर्मपुष्पं ज्ञानपुष्पं च पञ्चमम् ।
इत्युक्तैरुत्तमैः पुष्पैः पूजयेत् परदेवताम् ॥

( मेरुतन्त्रे )

मूलाधारे चतुष्कोणामग्निकुण्डं विचिन्तयेत् ।
तत्राग्निं कुण्डलीरूपं ध्यायेन्मूलं समुच्चरेत् ॥
धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रूचा ।
सुषुम्णावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम् ॥
पुण्यं जुहोमि स्वाहेति श्लोकान्ते प्रोच्चरेत् पुनः ।
पुनर्मूलं पुनः श्लोकं पुनः पापं जुहोमि च ॥
कृत्याकृत्ये च संकल्पो विकल्पो धर्म एव च ।
हुत्वा पृथक् च स्वाहान्तं पुनः श्लोकमिमं पठेत् ॥
प्रकाशामर्षहस्ताभ्यामवलम्ब्योन्मनीस्रूवम् ।
धर्माधर्मकलास्नेहं पूर्णावह्नौ जुहोम्यहम् ॥
स्वाहान्तेनाहुतिं दत्वा प्राणायामनिरोधतः ।
निरस्तनिखिलोपाधिमात्मानं चिन्मयं स्मरेत् ॥

(श्यामारहस्यादौ) तु मूलान्ते ।

नाभिचैतन्यरूपादौ हविषा मनसा स्रुचा ।
ज्ञानप्रदीपिते नित्यमक्षवृत्तीर्जुहोम्यहम् ॥

स्वाहा इति प्रथमाहुतिः ।

मूलान्ते ।

धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा ।
सुषुम्णावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥

स्वाहा-इति द्वितीयाऽऽहुतिः ।

मूलान्ते ।

प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ।

धर्माधर्मकलास्नेहपूर्णामग्नौ जुहोम्यहम् ॥

स्वाहा-इति तृतीयाऽऽहुतिः ।

मूलान्ते ।

अन्तर्निरन्तरनिरिन्धनमेधमाने

मोहान्धकारपरिपन्थिनि संविदग्नौ ।

कस्मिंश्चिदद्भुतमरीचिविकाशभूमौ

विश्वं जुहोमि वसुधादिशिवावसानम् ॥

स्वाहा-इति चतुर्थाहुतिः । इति श्लोकचतुष्टयेनाहुतिचतुष्टयमुक्तम् ।

( मेरुतन्त्रे ) ईडया वायुमाकृष्य गुदं किंचिदाकुञ्च्य जिह्वां तालुगतां विधाय मूलाधारात् कुण्डलिनीमुत्थाप्य सहस्रदलकमलकर्णिकान्तर्गतपरमशिवेन सह तां संयोज्य प्रोक्तपीठे देवतामर्चयेदिति विशेष उक्तः ।

( यथा )

वामनाडीः समाकृष्य किंचिदाकुञ्चयेद्गुदम् ।

रेचयेत् सममार्गेण जिह्वां तालुगतां चरेत् ॥

शक्तिं शिवपदे योज्य किंचिदाकुञ्चयेदधः ।

कृत्वैवं तु यजेत् पीठं न्यासमार्गेण मन्त्रवित् ॥

तस्मिन् पीठे स्थितामिष्टदेवतां मूर्त्तिविग्रहाम् ।

ध्यात्वा यजेच्चन्दनाद्यैर्मानसैर्भोजनान्तकैः ॥

भोजनावसरे त्वन्तर्वैश्वदेवं समाचरेत् ।

तत्रैव ।

तदन्ते तन्मयो भूत्वा जपेदष्टोत्तरं शतम् ।

मूलं तत् सर्वसंपत्त्यै देवतायै निवेदयेत् ॥

( मातृकार्णवे )

माला पञ्चाशिका प्रोक्ता सूत्रं शक्तिशिवात्मकम् ।

ग्रन्थिः कुण्डलिनी प्रोक्ता कलान्ते मेरुसंस्थितिः ॥

(कुमारीकल्पे) तु होमात् पूर्वं जप उक्तः ।

ततो वै मानसजपं कुर्याद्धोमादिमेव च ।

नमस्कृत्य तथा स्तुत्वा बहिर्यागमथाचरेत्—इति ॥

(चन्द्रिकायाम्)

इत्यन्तर्यजनं कृत्वा साक्षाद्ब्रह्ममयो भवेत् ।

न तस्य पापपुण्यानि जीवन्मुक्तो भवेद्भुवि ॥

इत्यन्तर्यागविधिः ।

अथ पात्रासादनम् । तदुक्तम् (यामले)

साध्यसाधकयोर्मध्ये षट्त्रिंशदङ्गुलं भवेत् ।

द्वादशाङ्गुलमूर्ध्वं च तदधो द्वादशाङ्गुलम् ॥

द्वादशाङ्गुलमध्यस्थं तत्र संस्थापयेद्बुधः ।

( मेरुतन्त्रे )

अथार्घादिकपात्राणां फलं वक्ष्ये शुभाशुभम् ।

सर्वकामप्रदं स्वर्णं रौप्यमायुःसुतप्रदम् ॥

सौभाग्यं ताम्रपात्रेण धर्मवृद्धिस्तु मृण्मये ।

नारिकेले देवतुष्टिः पुष्टिकृत् काचसंभवम् ॥

लक्ष्मीप्राप्तिर्बिल्वपात्रे ब्राह्मण्यं ब्रह्मवृक्षजे ।

मारणोच्चाटने लौहं स्तम्भे पाषाणजं भवेत् ॥

मन्त्रस्याराधने काष्ठं वाममार्गे तु तौम्बिकम् ।

रत्नादीनां तु पात्राणि शुभरेखाङ्कितानि च ॥

अर्घनैवेद्यपूजार्थं बलिदाने प्रकल्पयेत् ।

( महाहारतन्त्रे )

कन्याकोटिप्रदानानि तथा हेमशतानि च ।

यो ददाति महेशानि राहुग्रस्ते दिवाकरे ॥

तत्फलं कोटिगुणितं नारिकेलार्घपात्रतः ।

शक्तिविषयमिदम्।

देवताविशेषेण पात्रविशेषमाह (मेरुतन्त्रे)

कांस्यस्य वाऽथ रौप्यस्य शैवे शङ्खवरो हरौ।
महाशङ्खो वाममार्गे स्फाटिकं ग्रहनायके॥
पात्राणामादरः कार्यः पात्राण्येवोत्तमानि तु।
वलिहोमक्रियाद्यं हि विना पात्रं न सिद्ध्यति॥
षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्त्तितम्।
मध्यमं तु त्रिभागोनं कनिष्ठं द्वादशाङ्गुलम्॥
वस्वङ्गुलविहीनं तु न पात्रं कारयेत् क चित्।
नाभीविवररूपाणि पुण्डरीकाकृतीनि च॥
शङ्खनीलोत्पलाभानि पात्राणि परिकल्पयेत्।
श्वेतादीन्यतिशस्तानि विप्रादीनां क्रमेण च॥

(तत्त्वसारसंहितायाम्)

शङ्खं ज्ञानप्रदं मुक्ता शुक्तिर्विद्याप्रदायिनी।
कपालालाबुपात्राणि योगसिद्धिकराणि च॥

कपालादिविधिर्वीरपरः।

(समयाचारे)

सामान्यार्घं ततः कृत्वा पयसा साधकोत्तमः।
तज्जलैर्मण्डलं कृत्वा पात्राणि स्थापयेत् ततः॥

सामान्यार्घविधिः प्रागुक्तः।

अथ कलशस्थापनविधिः (सिद्धान्तसारे)

अस्त्रेण भूमिं संशोध्य सामान्यार्घोदकेन च।
स्ववामे विन्दुषट्कोणवृत्तवेदास्रमण्डलम्॥
संलिख्य मूलमन्त्रान्ते देवतानाम कीर्त्तयेत्।
पूजयेत् कलशाधारमण्डलाय नमोऽणुना*॥

---

* नम इति मन्त्रेण।

आधारं स्थापयेत् तत्र क्षालितं हेति*मन्त्रतः ।
यजेद्दशकलाभिस्तु व्याप्तं तत्राग्निमण्डलम् ॥
प्रभाऽप कलशं तत्र स्थापयेद्देवताधिया ।
सूर्यविम्बं यजेत् तत्र कलाद्वादशसंयुतम् ॥
शुद्धेन पाथसा कुम्भं मूलमन्त्रेण पूरयेत् ।

वाममार्गे तु ।

शुद्धेन हेतुना मन्त्री मूलमन्त्रेण पूरयेत् ।

इति मन्त्रान्तरवचनं सुधार्णवादौ स्थितम् । शुद्धेनेति संस्कृतेनेत्यर्थः ।

तथा ।

चन्द्रविम्बं यजेत् तत्र कलाषोडशसंयुतम् ।
तारभागैस्त्रिभिर्मन्त्री विम्बात्रितयमर्चयेत् ॥
तीर्थं तत्र समावाह्य हेतिवर्मस्वमूलकैः ।
मन्त्रैः संरक्ष्यावगुण्ठ्य संवीक्ष्याभ्युक्ष्य मन्त्रवित् ॥
पूजयेद्गन्धपुष्पाद्यैश्छादयन्मत्स्यमुद्रया ।
†मन्त्रेणानेन देवेशि कलशं चाभिमन्त्रयेत् ॥
कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।
इत्युक्त्वा मूलमन्त्रेण मन्त्रयेदष्टधा घटम् ॥
कुम्भमुद्रां प्रदर्श्याथ भावयेद्देवतात्मकम् ।

---

* हतिरस्त्रम् ।
† एतत्पद्यार्धम् २ पु. नोपलभ्यते ।

कुम्भमुद्रा त्वग्रे वक्ष्यते ।

(यामले)

स्वदक्षे प्रोक्षणीपात्रमाधायाद्भिः प्रपूरयेत् ।
किंचिदर्घ्याम्बु संगृह्य प्रोक्षण्यम्भसि योजयेत् ॥
ततः साधारकं पात्रं पुरतः स्थापयेद्बुधः ।
तत्पार्श्वे पाद्यदानं च तत्पार्श्वेऽर्घप्रदानकम् ॥
आचमनीयं तु तत्पार्श्वे तद्वामे मधुपर्ककम् ।
पुनराचमनीयं च स्नानीयं तत्क्रमान्न्यसेत् ॥

अर्घ्याम्बु इति सामान्यार्घोदकमित्यर्थः । सामान्यार्घोदकस्य पात्रासादनात् पूर्वमेव स्वदक्षिणे स्थापनीयत्वात् । अत एव तद्दक्षिणपार्श्वे पाद्यपात्रस्थापनार्थं किंचित् स्थलं परित्यज्य प्रोक्षणीपात्रं स्थापयेदिति । तत्पार्श्वेऽर्घप्रदानकमिति पाद्यपात्रवामभागेऽर्घपात्रमित्यर्थः ।

( मेरुतन्त्रादौ तु )

अर्घस्योत्तरदिग्भागे पाद्यमाचमनीयकम् ।
मधुपर्कं च संस्थाप्य त्रिकोणेषु यथाक्रमम् ॥

इत्यर्घपात्रस्थापनानन्तरं तद्वामभागे पाद्यादिपात्रस्थापनमुक्तम् । उपचार-समर्पणसमयेऽपि पाद्यदानात् पूर्वमर्घदानं तत्रोक्तम् ।

( नवरत्नेश्वरे )

एकपात्रं न कर्त्तव्यं यदि साक्षान्महेश्वरः ।
मन्त्राः पराङ्मुखा यान्ति आपदश्च पदे पदे ॥
इह लोके च दारिद्र्यं मृते च पशुतां व्रजेत् ।

तत्रैव ।

पात्रद्वयमभावाद्वा कुर्यान्न्यूनं न चाचरेत् ।

(गौतमीये)

अर्घपात्राणि च त्रीणि पाद्यस्यापि त्रयं तथा ।
तथैवाचमनीयानि पात्राणि च विभागशः ॥
तथाकरणादौर्बल्यादेकमेव प्रशस्यते ।

पाद्यादिद्रव्याण्युक्तानि ( फेत्कारिण्याम् )

उशीरं रोचनं चैव पाद्यपात्रे तु कल्पयेत् ।
कुशाग्रानक्षतं चैव यवव्रीहितिलानपि ॥
आज्यसिद्धार्थपुष्पाणि क्षिपेदर्घस्य पात्रके ।
जातीकर्पूरकङ्कोलबहुमूलतमालकान् ॥
चूर्णयित्वा यथान्यायं क्षिपेदाचमनीयके ।
माक्षिकं शर्करासर्पिर्दधिक्षीरयुतं तथा ॥
मधुपर्कं कल्पयित्वा प्रदद्याद्विधिपूर्वकम् ।

( मेरुतन्त्रे )

पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते ।

तथा ।

गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ।
दूर्वा इत्यर्घपात्रस्य प्रोक्तं द्रव्याष्टकं सुराः ॥

सुरा इति देवसंबोधनम् ।

तथा ।

जातीलवङ्गकङ्कोलैर्मतमाचमनीयकम् ।
कुशपुष्पयवव्रीहिर्बहुमूलतमालकम् ॥
दापयेत् प्रोक्षणीपात्राम्भसि तत्प्रणवेन च ।

(महाकालसंहितायाम्)

अन्यानिवेदितं तोयं प्रकृतिस्थं सुशीतलम् ।
हेमादिकुम्भपात्रस्थं स्नानीयं जलमुच्यते ॥

(चन्द्रिकायाम्)

गन्धाद्भिः कारयेत् स्नानम् .... .... .... इति ।

( भैरवे )

शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम् ।
द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः ॥

विष्णुपूजायां शङ्खस्थापनमावश्यकम्।

तदुक्तं कुम्भसंभवेन।

विनैव शङ्खं पूजां यो वैष्णवः पूजयेद्धरिम्।
पूजाफलं न चाप्नोति स सम्यक् पूजकोऽपि सन्॥

शंङ्खस्थापनविधिरुक्तां ( मेरुतन्त्रे ) स्ववामे इत्युपक्रम्य।

वृत्तेन वेष्टितं सम्यक् त्रिकोणं चन्दनाम्भसा।
तद्बहिश्चतुरस्रं च विदध्यान्मत्स्यमुद्रया॥
संपूज्य गन्धैर्देवार्घ्यमण्डलाय नमोऽणुना।
अङ्गानि चतुरग्न्यादिकोणेषु पुरतस्तथा॥
दिक्षु चास्त्रं समभ्यर्च्य शङ्खाधारं प्रविन्यसेत्।
आधारेण विना भ्रंशो न तृप्यन्ति च मातरः॥
तस्माद्विधिवदाधारं त्रिपदं वा चतुष्पपदम्।
पद्माभं वा त्रिकोणं वा योन्याभं धातुजं तु तत्॥
मूलान्ते चामुकाधारपात्रं संस्थापयामि च।
उक्त्वा शङ्खादिकाधारं मण्डले स्थापयेदथ॥
मँ रँ धर्मप्रदेत्युक्त्वा वदेद्दशकलात्मने।
ङेन्तं वह्नेर्मण्डलं च देवनाम च कीर्त्तयेत्॥
ततोऽर्घपात्राधाराय नमः प्रोक्त्वा प्रपूजयेत्।
वह्नेर्दशकलाः पूज्यास्तत्र प्रोक्ताः प्रदक्षिणम्॥

अत्र शङ्खार्घयोरभिधानमुक्तविधानशङ्खविशेषार्घस्थापनसाधारण्यादिति बोध्यम्।

अस्त्रमन्त्रेण च ततः कनकादिविनिर्मितम्।
अर्घ्यादिपात्रमथ वा शङ्खमस्त्राणुना जलैः।
प्रक्षाल्यामुकदेवार्घपात्रं प्रतिष्ठापयामि॥
एवमुक्त्वा तदाधारे संस्थाप्यैवं वदेत् पुनः।

अर्थप्रदद्वादशेति कलात्मने वदेत् ततः ॥
सूर्यमण्डलमुच्चार्य ङेन्तं देवस्य नाम तु ।
अर्घपात्राय च नमो मनुनाऽनेन पूजयेत् ॥
तत्पात्रमथ तत्रैव भावयेद्भूमिमण्डलम् ।
षट्कोणं तत्र चाङ्गानि पूजयेत् पूर्ववत् ततः ॥
कला द्वादशसूर्यस्य प्रोक्ताः पात्रे प्रदक्षिणम् ।
ततः सुधामयैस्तोयैर्मूलान्ते मातृकां पठन् ॥
विलोमां पूरयेत् तस्मिन् पूजको मनुनाऽमुना ।
उँ सँ कामप्रदेत्युक्त्वा षोडशेति कलात्मने ॥
नमः पञ्चदशार्णोऽयं मन्त्रः शङ्खप्रपूरणे ।

तथा तन्त्रान्तरेऽपि ।

कर्णचन्द्रौ विन्दुयुतौ कामप्रदपदं ततः ।
षोडशान्ते कलाशब्दमात्मान्ते हृदयाणुना ॥
गन्धपुष्पैः समभ्यर्च्य कलाषोडशकं यजेत् ।

अत्र कर्ण उकारश्चन्द्रोऽर्धचन्द्रो विन्दुरनुस्वारस्तेन उमित्येकमेव बी- विधाय मुक्तावल्यामुद्धृतम् । स एव प्रकारो नृसिंहठक्कुरैरप्यविचार्य स्वीयग्रन् ताराभक्तिसुधार्णवे धृतः । वस्तुतः कर्ण उकारश्चन्द्रः सकारस्तयोर्विन्दुयोग च उँ समिति बीजद्वयमेव ।

सकारः शक्तिनामा च चन्द्रपीयूषशीतलः ।

इति वर्णकोशात् ।

शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः
स्मरो हंसः शक्रस्तदनु च परामारहरयः ।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता
भजन्ते वर्णास्ते तव जननि नामावयवताम् ॥

इत्यादौ चन्द्रवाचकशीतकिरणपदस्य सकारपरत्वदर्शनात् । न च चन्द्र पदस्य क्वचिदर्धचन्द्रपरत्वदर्शनादत्रैकमेव बीजमस्त्विति वाच्यम् । बीज द्वयप्रकाशकमेरुतन्त्राविरोधात् ।

तथा ।

तत् तोयं गन्धपुष्पाद्यैः पूजयित्वा समर्चयेत् ।
कलाषोडशकं चान्द्रं पश्चात् सर्वकलासु च ॥
प्राणप्रतिष्ठां कुर्वीत पूजान्ते साधकस्ततः ।

वह्न्यर्कचन्द्राणां कलाः प्रागुक्ताः ।

तत्पूजनप्रकारश्च ( कुलार्णवे )

आग्नेया यादिवर्णोत्था दश धर्मप्रदाः कलाः ।
कभाद्या वसुदाः सौराष्ठडान्ता द्वादशेरिताः ॥
सौम्याः कामप्रदायिन्यः षोडश स्वरजाः कलाः ।

विन्दुयुक्तान् यादिदश वर्णान् पूर्वे दत्त्वाऽग्निकलाः । कादिठान्तान् भादिडान्तान् प्रतिलोमवर्णांश्च विन्दुयुक्तानादौ दत्त्वा सूर्यकलाः । अकारादिषोडशस्वरान् विन्दुयुक्तानादौ दत्त्वा चन्द्रकलाश्च पूज्या इत्यर्थः ।

( मेरुतन्त्रे )

प्राग्वत् तीर्थं समावाह्य मूलमन्त्रेण तत्र तु ।
संयोज्य नेत्रमन्त्रेण पुष्पं न्यस्य शिखाणुना ॥
प्रदर्श्य गालिनीं मुद्रां मुद्रया धेनुसंज्ञया ।
अमृतीकृत्य विधिवत् सुधाबीजेन साधकः ॥
ध्यात्वेष्टदेवतां तत्र सकलीकरणं चरेत् ।
अङ्गन्यासेन चास्त्रेण कलयेच्च दिशो दश ॥
नेत्रमन्त्रेण संवीक्ष्य मुद्रया शङ्खसंज्ञया ।
अवष्टभ्य ततो दीप्यमुद्रया योनिरूपया ॥
गन्धपुष्पादिभिस्तत्र पूजयेदिष्टदेवताम् ।
षडङ्गानि च संपूज्य मन्त्रयेन्मूलमन्त्रतः ॥
अष्टकृत्वस्ततश्चार्घ्यं छादयेन्मत्स्यमुद्रया ।

वैष्णवे तु योनिमुद्रास्थाने धेनुमुद्रैव ।

तदुक्तमागमस्येन ।

अस्त्रमन्त्रेण संरक्ष्य कवचेनावगुण्ठयेत् ।

दर्शयेद्धेनुमुद्रां च बोधयेत् तत्स्वमुद्रया— इति ॥

स्वमुद्रया शङ्खमुद्रया । मुद्रास्वग्रे वक्ष्यामः ।

( मेरौ )

तच्छङ्खस्थं जलं किंचित् कुम्भतोये विनिःक्षिपेत् ।

तन्त्रान्तरे ।

स्वदक्षे प्रोक्षणीपात्रं संस्थाप्य साधकोत्तमः ।

तदुत्तरे पाद्यपात्रमर्घद्वन्द्वं च कल्पयेत् ॥

अर्घद्वन्द्वमिति । सामान्यार्घं विशेषार्घं चेत्यर्थः ।

अर्घपात्रप्रमाणमुक्तम् ( सिद्धान्तसारे )

तलप्रमाणमर्घस्य पात्रं वेदाङ्गुलोच्छ्रितम् ।

वस्वङ्गुलं वा कुर्वीत नेत्राङ्गुलसमुच्छ्रितम् ॥

वर्द्धयेत् प्रोक्षणीपात्रं तस्मान्न्यूनं न कारयेत् ।

( महाकालसंहितायाम् )

आदौ मुख्यतमं ज्ञेयं षोडशाङ्गुलसंमितम् ।

मध्यमं द्वादशमितमधमं स्याद्दशाङ्गुलम् ॥

वस्वङ्गुलविहीनं तु पात्रं नैव च कारयेत् ।

सर्वत्र स्वर्णवत् ताम्रमर्घ्यपात्रं ततोऽधिकम् ॥

तत्र सामान्यार्घस्थापनविधिः प्रागुक्तः । विशेषार्घस्थापनं तु पूर्वोक्तशङ्खस्थापनवत् कार्यम् । श्यामादिविद्यायां तु विशेषविधिरुक्तः ।

यथा ( त्रिशक्तिरत्ने )

कलशाद्दक्षिणे भागे त्रिकोणं वृत्तसंयुतम् ।

षट्कोणं चतुरस्रं च कृत्वा तन्मध्यभागतः ॥

विलसच्चन्द्रशकलं गन्धर्वं च समालिखेत् ।

उजापूकादिकं पीठं तच्चतुर्दिक्षु पूजयेत् ॥

अङ्गमन्त्रैश्च षट्कोणे शक्तौ मूलत्रिभेदतः ।

आधारशक्तिं संपूज्य पूर्ववद्यन्त्रिकामपि ॥

महाशङ्खं नारिकेलं सौवर्णं राजतं तथा ।

ताम्रं शुक्त्युद्भवं वाऽपि पात्रं तत्र निधापयेत् ॥

गन्धर्वमिति । ईकारमित्यर्थः । उजापूकादीति । उड्डियानजालन्धरपूर्णगिरिकामरूपाख्यानि पीठानीत्यर्थः । शक्तौ इति । त्रिकोणे कौलिकमतमभिप्रेत्य महाशङ्खमित्युक्तिः ।

पात्रभेदास्तन्त्रान्तरेऽप्युक्ताः ।

पात्रं काञ्चनकाचरूप्यजनितं मुक्ताकपालोद्भवं
वैश्वामित्रमुदं* च कामदमिदं हैमं प्रियं स्फाटिकम् ।
ताम्रं प्रीतिदमिष्टसिद्धिजनकं श्रीनारिकेलोद्भवं
पापघ्नं स्फुटमन्त्रसिद्धिजनकं मुक्तिप्रदं मौक्तिकम् ॥

(त्रिशक्तिरत्ने)

समर्च्य पूर्ववन्मन्त्री पात्रं द्रव्येण पूरयेत् ।
जपन् विलोमतो वर्णान् मूलमन्त्रसमुज्ज्वलान् ॥

(भैरवतन्त्रे)

सकूर्चं सुभगं पात्रं विन्यस्य शुद्धपाथसा ।
कुण्डगोलोद्भवेनापि स्वयम्भूकुसुमेन वा ॥
वीरः स्वाद्येण चापूर्य मूलविद्यां समुच्चरन् ।

शुद्धपाथसेत्यादि । दक्षिणमार्गी शुद्धजलेन । वाममार्गी चेत् कुण्डगोलोद्भवादिना पाथसाऽऽपूर्येत्यर्थः ।

(त्रिशक्तिरत्ने)

संपूज्य पूर्ववत् तत्र वृत्तं षट्कोणमालिखेत् ।
अकथादित्रिरेखाभ्यां त्रिकोणं वृत्तमध्यतः ॥
मूलखण्डत्रयेणाथ त्रिकोणं परिपूजयेत् ।
षट्कोणे च षडङ्गानि ततस्तीर्थमयं स्मरेत् ॥
आनन्दभैरवं ध्यात्वा समभ्यर्च्य विधानतः ।
पूजयेत् पञ्चरत्नानि कुलद्रव्याणि निःक्षिपेत् ॥

---

* विश्वामित्रप्रियो नारिकेलस्तदुद्भवमित्यर्थः ।

पञ्चरत्नानीति । गंगनरत्नादीनि पद्धतौ वक्ष्यन्ते ।

(कुमारीकल्पे)

अर्घद्रव्यं चार्घपात्रे निःक्षिपेद्यत्नतः सुधीः ।

कुण्डगोलोद्भवं द्रव्यं स्वयम्भूकुसुमं तथा ॥

नाधर्मं विद्यते सुभ्रु महामन्त्रस्य साधने ।

(त्रिशक्तिरत्ने)

रचयेत् पूर्ववच्छेषमयमर्घविधिः स्मृतः ।

(भैरवतन्त्रे)

वामेन पाणिनाऽऽच्छाद्य मूलमष्टौ जपेत् ततः ।

भूतिनीं धेनुमुद्रां च योनिमुद्रां प्रदर्शयेत् ॥

अत्र कुण्डगोलोद्भवस्वयम्भूकुसुमादिकुलद्रव्यनिःक्षेपविधिर्वीरपरः ।

(पशुकल्पे तु)

गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ।

दूर्वा इत्यर्घपात्रस्य प्रोक्तं द्रव्याष्टकं सुराः ॥

इति मेरुतन्त्रोक्तद्रव्याष्टकस्यैव निःक्षेपो बोध्यः ।

एवं च वामेन पाणिनेत्यपि वाममार्गिपरम् । दक्षिणमार्गे तु दक्षिणहस्तेनैवाच्छादनं संप्रदायसिद्धम् ।

(भैरवतन्त्रे)

किं चित् तोयं समादाय चान्यपात्रेषु निःक्षिपेत् ।

पूजाद्रव्याणि चात्मानं प्रोक्षयेत् तेन वारिणा ॥

(देवीपद्धतौ)

विशेषार्घोत्तरे भागे पात्रमाचमनीयकम् ।

मधुपर्कं च तद्वामे स्थापयेत् सुरवन्दिते ॥

संपृक्तं मधुपर्कं स्यात् क्षौद्रं दध्ना घृतेन च ।

प्रीतिकृत् सर्वदेवानां कांस्यपात्रे प्रकीर्त्तितम् ॥

कांस्यपात्रे च सकलसाधारणम् ।

देवतादिभेदेन मधुपर्कपात्रभेदो (मेरुतन्त्रे)

कांस्यस्य वाऽथ रूप्यस्य शैवे शङ्करो हरौ ।

महाशङ्खो वाममार्गे स्फाटिकं ग्रहनायके ॥

तत्रैव ।

मधुपर्कस्तु सक्षौद्रं दधि तच्चेन्न लभ्यते ।

दधिदुग्धं गुडः क्षौद्रे घृतप्रतिनिधिर्न हि ॥

मधुपर्कपदार्थ उक्तस्तत्रैव ।

परमं यत् पदं देवा मधुसंज्ञं तदुच्यते ।

तदाप्यते येन कर्म तत् प्रोक्तं मधुपर्ककम् ॥

देवतोद्देश्यकं यद्दानं परमपदप्राप्तिफलकं स मधुपर्कपदार्थ इत्यर्थः । इदं च मधुपर्कप्रदानजन्यफलानुकीर्त्तनपरम् । वस्तुतस्तु मधुना पृच्यते दध्याद्यस्मिन्निति मधुपर्कपदव्युत्पत्तिः । पृची संपर्के इति धात्वनुसारात् ।

( श्रीनृसिंहचरणार्चनपद्धतौ )

पुनराचमनीयार्थं पात्रं संस्थापयेत् ततः ।

स्नानं शङ्खोदकेनैव देवदेवस्य चक्रिणः ॥

शैवे तु शङ्खोदकं निषिद्धम् ।

तदुक्तम् (सिद्धान्तसंग्रहे)

नाक्षतैरर्चयेद्विष्णुं न तुलस्या विनायकम् ।

न दूर्वया यजेद्दुर्गां न शम्भुं शङ्खवारिणा ॥

पाद्याचमनीयादिपात्रस्थापनं तु सामान्यार्घस्थापनवत् कार्यम् ।

तदुक्तं तत्रैव ।

सामान्यार्घोक्तविधिना कुर्यात् पाद्यादिपात्रकम्—इति ।

( महाकालसंहितायाम् )

तानि गन्धाक्षतजलकुसुमैः परिपूरयेत् ।

पाद्ये पाद्योक्तवस्तूनि अर्घ्ये अर्घ्योदितानि च ॥

स्नानीयाचमनादौ च द्रव्याण्युक्तानि वै पुरा ।

तैरन्वितानि कार्याणि पात्राणि सकलानि च ॥

( मेरुतन्त्रे )

एकैकपात्रं मूलेन ह्यष्टकृत्वोऽभिमन्त्रयेत् ।

प्रदर्शयेद्धेनुमुद्राम् .... .... .... इति ।

तन्त्रान्तरे वीरकल्पे तु श्रीपात्रं शक्तिपात्रादिस्थापनमुक्तम् ।
( महाकालसंहितायाम् )

अस्मिन्नेव ह्यवसरे श्रीपात्रस्थापनं चरेत् ।
कौलः प्रसन्नया कुर्यात् क्षीरमध्वादिभिर्द्विजैः ॥
यतिस्तु नोभयं कुर्यान्नेच्छत्याभ्यामिति द्विजः ।

प्रसन्नया सुरया । द्विजैः राजन्यवैश्यैः । द्विजो विप्रः । आभ्यां क्षीरमधुभ्यामपि नेच्छतीत्यर्थः । अस्मिन् कल्पे तस्यानधिकारादिति भावः ।

तथा ।

अतः कौलिककार्यार्थं विशिष्य तदहं ब्रुवे ।

तद्विधिस्त्वसाधारणत्वान्नेह लिख्यते ।

क चित् तु ।

दक्षिणे मण्डलं कृत्वा श्रीपात्रं स्थापयेत् सुधीः ।
विशेषार्घोक्तविधिना .... .... .... इत्युक्तम् ॥

दक्षिणे श्रीपात्रस्थापनमुक्त्वा शक्तिपात्रादिस्थापनक्रममाह ।
( महाकालसंहितायाम् )

वामे संस्थापयेच्छक्तिपात्रं त्रिदशवन्दिते ।
मध्ये चत्वारि पात्राणि पुनरन्यानि योजयेत् ॥
गुरुर्भोगश्च वीरश्च कुलं चेति प्रकीर्तितम् ।
श्रीपात्रस्य च ये मन्त्रास्ते मन्त्राः सर्वपात्रगाः ॥
श्रीपात्रस्य क्रिया या हि सा क्रिया सर्वपात्रगा ।
तादृक्क्रियाद्यशक्तौ तु सामान्येनापि पूजयेत् ॥
पृथक्कला न चार्च्यास्तु दश द्वादश षोडश ।
शक्तेरावाहनं शक्तौ गुरोरपि गुरौ तथा ॥
परिवारान् भोगपात्रे वीरे त्वावरणात्मिकान् ।
कौलिकान् कुलपात्रे च समावाह्य यजेच्छनैः ॥

तथा ।

श्रीपात्रस्याधिकारी तु स्वयमेव न चेतरः ।

शक्तेस्तु शक्तिपात्रं स्यात् गुरुपात्रं गुरोरपि ॥
भोगपात्रं सुतादीनां शिष्याणां वीरपात्रकम् ।
कुलपात्रं कौलिकानां निर्णयः प्रोक्त ईदृशः ॥

तन्त्रान्तरे तु ।

श्रीपात्रघटयोर्मध्ये सर्वपात्राणि स्थापयेत् ।
गुरुपात्रं घटस्थान्ते तदन्ते भोगपात्रकम् ॥
तदन्ते शक्तिपात्रं च योगिनीनां तदन्तिके ।
तदन्ते वीरपात्रं च वलिपात्रं तदन्तिके ॥
पाद्यं चाचमनीयं च पात्राणि स्थापयेत् क्रमात् ।
उत्तमं नव पात्राणि सप्त पात्राणि मध्यमम् ॥
अधमं त्रीणि पत्राणि एकपात्रं न कारयेत्—इत्युक्तम् ।

पाद्यं चाचमनीयं चेत्युपलक्षणम् । अर्घस्नानीयादिपात्राण्यपि स्थापनीयानि ।
एतावदशक्तौ ( त्रिशक्तिरत्ने )

अथवा कलशं शङ्खं शक्तिपात्रत्रयं भवेत् ।

अस्मिन् कल्पेऽपि पाद्यादिपात्राणि स्थापनीयानि पूजोपयुक्तत्वादिति सुधार्णवकृतः । 'पाद्यं चाचमनीयं च अर्घं च नवमं विदु'रिति मन्त्रचिन्तामणिधृल्लिखितपाठः प्रामादिकः । सुधार्णवकल्पलतादिषु बहुषु ग्रन्थेषु एतादृशपाठस्यानुपलम्भात् । अर्घपात्रस्य नवमपात्रत्वे श्रीपात्रस्यातिरिक्तत्वापत्तेश्च ।
अत एव ( कुलरत्नावल्याम् )

कुलकुम्भश्च श्रीपात्रं शक्तिपात्रं तथैव च ।
गुरुपात्रं भोगपात्रं योगिनीपात्रमेव च ॥
कुलपात्रं वीरपात्रं नवमं वलिपात्रकम्—इत्युक्तम् ।

(त्रिशक्तिरत्ने)

पुष्पादिना समुद्धृत्य विन्दुं शङ्खामृतस्य च ।
निःक्षिपेत् सर्वपात्रेषु सर्वं दिव्यं विभावयेत् ॥

(तत्त्वार्णवे )

ध्यात्वैवं तर्पयेन्मूर्ध्नि तावुभौ साधकः सुधीः ।

ताबुभाविति । आनन्दभैरवमानन्दभैरवीं चेत्यर्थः । तयोर्ध्याने स्वप्ने वक्ष्येते । (त्रिशक्तिरत्ने)

ब्रह्मरन्ध्रे स्वके मन्त्री मुद्रया तत्त्वसंज्ञया ।
तर्पयेद्गुरुपात्रीयद्रव्येणौघत्रयं सुधीः ॥
स्वगुरूनपि संतर्प्य त्रिः सकृद्वा विशेषतः ।
आत्मनो हृदयाम्भोजे परिवारगणावृताम् ॥
देवीपात्रामृतेनापि तर्पयेत् कुलनायिकाम् ।

देवीपात्रं श्रीपात्रम् । तत्त्वमुद्रा वक्ष्यते । ओघत्रयमिति । दिव्यौघं सिद्धौघं मानवौघं चेत्यर्थः ।

तत्र श्यामाया दिव्यौघा गुरुपङ्क्तय उक्ता ( भावचूडामणौ )

तत्रादौ कालिका देवी तस्याः शृणु गुरुक्रमम् ।
महादेवी महादेवस्त्रिपुरश्चैव भैरवः ॥
दिव्यौघा गुरवः प्रोक्ताः सिद्धौघान् कथयामि ते ।
ब्रह्मानन्दः पूर्णदेवश्चलचित्तश्चलाचलः ॥
कुमारः क्रोधनश्चैव वरदः स्मरदीपनः ।
माया मायावती चैव मानवौघान् शृणु प्रिये ॥
विमलः कुशलश्चैव भीमसेनः सुधाकरः ।
मीनो गोरक्षकश्चैव भोजदेवः प्रजापतिः ॥
मूलदेवोऽवन्तिदेवो विघ्नेश्वरहुताशनौ ।
संतोषः समयानन्दः कालिकागुरवः स्मृताः ॥
दिव्या वसन्ति खे नित्यं सिद्धा भूमाविहापि च ।
मानवौघा मानवेषु मम रूपधराः सदा ॥
आनन्दनाथशब्दान्ता गुरवः सर्वसिद्धिदाः ।
स्त्रियोऽपि गुरुरूपाश्च अम्बान्ताः परिकीर्त्तिताः ॥
मानवौघान्तिमे देवि स्वगुरूनपि योजयेत् ।

तारविद्याया गुरुपङ्क्तयोऽपि तत्रैव।

अथ तारागुरून् वक्ष्ये दृष्टादृष्टफलप्रदान्।
ऊर्ध्वकेशो व्योमकेशो नीलकण्ठो वृषध्वजः॥
दिव्यौघाः सिद्धिदा वत्स सिद्धौघान् शृणु तत्त्वतः।
वशिष्ठः कूर्मनाथश्च मीननाथो महेश्वरः॥
हरिनाथो मानवौघानथ वक्ष्यामि सद्गुरून्।
तारावती भानुमती जया विद्या महोदरी॥
सुखानन्दः परानन्दः पारिजातः कुलेश्वरः।
विरूपाक्षः केररी च कथितं तारिणीकुलम्॥
आनन्दनाथशब्दान्ता गुरवः सर्वसिद्धिदाः।
स्त्रियोऽपि गुरुरूपाश्च देव्यन्ताः परिकीर्त्तिताः॥

अथ श्रीविद्यागुरवस्तत्रैव।

अथ वक्ष्यामि देवेशि श्रीषोडश्या गुरुक्रमम्।
आनन्दनाथदेवश्च परप्रकाशकस्तथा॥
ततः परशिवो देवः परशक्तिस्ततः परम्।
कौलेश्वरः शक्तिदेवः कुलेशानश्च कामुकः॥
सिद्धौघान् कथयिष्यामि भोगक्रीडश्च भैरवः।
समयो देवसहजौ मानवौघान् शृणु प्रिये॥
गणेशो विष्णुविमलौ सहजो भुवनस्तथा।
नीलश्च सुप्रियः पश्चात् कथिता गुरवः क्रमात्॥

अथ दुर्गागुरुपङ्क्तयस्तत्रैव।

शृणु वत्स महादेव गुरून् दुर्गामनूद्भवान्।
परमात्मा परानन्दः परमेष्ठी महोदयः॥
कृष्णः कालः कलानाथो दिव्यौघा भैरवान्तिकाः।

नारदः काश्यपः शम्भुर्भार्गवः कुलकौलिकः ॥

एते पञ्च महादेव सिद्धौघाः परिकीर्त्तिताः ।

रुद्राचार्यः क्षमाचार्यः पवनाशनसंज्ञकः ॥

कुमारीशः शक्तिधरो घनानन्दः प्रकाशकः ।

हरिशर्मा विष्णुशर्मा दत्तात्रेयः प्रियंवदः ॥

बहुला शाकिनी देवी चर्यानाथः प्रकीर्तितः ।

एवं तत्तद्विद्यागुरुपङ्क्तयस्तत्तत्कल्पेभ्योऽवगन्तव्याः । एषां तर्पणं तु श्री-अमुकानन्दनाथश्रीपादुकां तर्पयामि । एवं श्री-अमुकाम्बाश्रीपादुकां तर्पयामि इत्यादि ।

गुरुचतुष्टयमुक्तम् ( भावनिर्णये )

गुरुः परमगुरुश्चैव परापरगुरुस्तथा ।

परमेष्ठी गुरुश्चैव स्वस्वाम्नाये प्रतर्पयेत् ॥

( कुलचूडामणौ )

अज्ञाने गुरुनाम्नां वै गुरुत्रितयमर्चयेत् ।

चतुष्टयं वा संकोचो न कर्त्तव्यस्ततः परम् ॥

( भावनिर्णये )

आदौ सर्वत्र देवेशि मन्त्रदः परमो गुरुः ।

परापरगुरुस्त्वं हि परमेष्ठि*रहं यतः ॥

अथ तत्त्वशुद्धिर्यथा । तत्र ॐ श्रुतिः प्राणापानव्यानोदानसमाना मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । ॐ पृथिव्यप्तेजोवाय्वाकाशानि मे शुद्ध्यन्तां ज्योतिरित्यादि । ॐ प्रकृत्यहंकारबुद्धिमनःश्रोत्राणि मे शुद्ध्यन्तामित्यादि । ॐ वाक्चक्षुःश्रोत्रजिह्वाघ्राणवर्चांसि मे शुद्ध्यन्तामित्यादि । ॐ पाणिपादपायूपस्थशब्दा मे शुद्ध्यन्तामित्यादि । ॐ स्पर्शरूपरसाकाशा मे शुद्ध्यन्तामित्यादि । ॐ वायुतेजःसलिलभूम्यात्मानो मे शुद्ध्यन्तामित्यादि । सप्त मन्त्रान् परामृशन् हस्ताभ्यां सप्तधा सर्वाङ्गे स्पृशेदिति तत्त्वशुद्धिः ।

वामाचारे त्वस्मिन्नेव समये वटुकादिभ्यो बलिं प्रयच्छति तद्विधिरग्रे वक्ष्यते । तन्त्रान्तरे ।

---

* तान्त्रिकप्रयोगोऽयम् ।

तत्त्वशुद्धिं विधायेत्थं पूजाद्रव्याणि शोधयेत्।

(मेरुतन्त्रे)

सेचयेत् प्रोक्षणीपात्रतोयैर्मूलास्त्रमुच्चरन्।
आत्मानं यागवस्तूनि पूजाद्रव्याणि मण्डलम्॥
दर्शयेद्धेनुमुद्रां च द्रव्यशुद्धिरियं मता।
योगपीठन्यासदेवाँस्तत्तत्स्थानेषु पूजयेत्॥
मणिपीठे भावनया ततः पूज्या स्वदेवता।
आत्मानं देवतारूपं ध्यायेन्मूलेन पञ्च तु॥
पुष्पस्याञ्जलयो देया मस्तके हृदये गुदे।
पादयोः सर्वगात्रे च पूजयेच्चन्दनादिभिः॥
चतुर्भिरुपचारैश्च नैवेद्यं न निवेदयेत्।
गुरूपदिष्टविधिना शेषमन्यत् समापयेत्॥
प्रोत्तिण्यद्भिः प्रयुञ्जीत सर्वमेतत् समाहितः।
कृत्वा षडङ्गन्यासं च मन्त्रमष्टोत्तरं शतम्॥
जपित्वा देवतायै तमर्पयेदर्घ्यतोयतः।
पानीयं प्रोक्षणीसंस्थं त्यक्त्वा संपूर्य पूर्ववत्॥
उपचारैश्चन्दनाद्यैर्मण्डले पूजयेद्गुरुम्।
पूजयेत् कर्णिकां पूर्वं शालिभिस्तण्डुलैस्ततः॥
दर्भान् न्यसेदुपर्येषां साक्षतं कूर्चकं ततः।
छिन्नमूलाः कुशा दीर्घाः सप्तविंशतिसंख्यकाः॥
ब्रह्मग्रन्थियुतास्त्वग्रदेशे कूर्च इहोच्यते।
यजेदाधारशक्त्यादिपीठमन्त्रावसानकम्॥

पीठपूजाप्रकारमाह तत्रैव।

गुरुपङ्क्तिरुदक् पूज्या महागणपतिस्त्ववाक्।

पूजयेदतलादीनि देवस्याधस्तु सप्त च ॥
मण्डूकं चापि तस्योर्ध्वं रुद्रं कालानलं ततः ।

( शारदायाम् )

अधः कूर्मशिलारूढां शरच्चन्द्रनिभप्रभाम् ।
आधारशक्तिं प्रयजेत् पङ्कजद्वयधारिणीम् ॥

कूर्मशिलारूढामिति । कूर्माकारा या शिला तदुपरि स्थितामित्यर्थः ।

( तथा )

मूर्ध्नि तस्याः समारूढं कूर्मं नीलाभमर्चयेत् ।
ऊर्ध्वं ब्रह्मशिलासीनमनन्तं कुन्दसन्निभम् ॥
यजेच्चक्रधरं मूर्ध्नि धारयन्तं वसुन्धराम् ।
तमालश्यामलां तत्र नीलेन्दीवरधारिणीम् ॥
अभ्यर्चयेद्वसुमतीं स्फुरत्सागरमेखलाम् ।
तस्यां रत्नमयं द्वीपं तस्मिंश्च मणिमण्डपम् ॥
यजेत् कल्पतरूंस्तस्मिन् साधकाभीष्टसिद्धिदान् ।
अधस्तात् पूजयेत् तेषां वेदिकां मण्डलोज्ज्वलाम् ॥
पश्चादभ्यर्चयेत् तस्यां पीठं धर्मादिभिः पुनः ।
रक्तश्यामहरिद्रेन्द्रनीलाभान् पादरूपिणः ॥
वृषकेशरिभूतेभरूपान् धर्मादिकान् यजेत् ।
गात्रेषु पूजयेत् तांस्तु नञ्पूर्वानुक्तलक्षणान् ॥

भूतो देवयोनिः । नञ्पूर्वानिति अधर्मादीनित्यर्थः । उक्तलक्षणानिति वृषभाद्याकारान् रक्तादिवर्णानित्यर्थः ।

( मेरुतन्त्रे ) त्वधर्मादयाभिन्नवर्णा उक्ताः ।

धर्मं वृषतनुं रक्तं ज्ञानं कृष्णां च सिंहवत् ।
वैराग्यं भूतवत् पीतमैश्वर्यं कृष्णहस्तिवत् ॥
अधर्मादींश्चिन्नवर्णान् पीठस्याधः समर्चयेत् ।

तथा ।

आग्नेयादिषु कोणेषु दिक्षु चाथाम्बुजं यजेत् ।

तत्प्रकारमाह ।

आनन्दकन्दं प्रथमं संविन्नालमनन्तरम् ।
सर्वतत्त्वात्मकं पद्ममभ्यर्चेत् तदनन्तरम् ॥
मन्त्री प्रकृतिपत्राणि विकारमयकेशरान् ।
पञ्चाशद्वर्णबीजाढ्यां कर्णिकां पूजयेत् ततः ॥
कलाभिः पूजयेत् सार्धं तस्यां सूर्येन्दुवाचकान् ।
प्रणवस्य त्रिभिर्भागैरथ सत्त्वादिकान् गुणान् ॥
आत्मानमन्तरात्मानं परमात्मानमर्चयेत् ।
ज्ञानात्मानं च विधिवत् पीठमन्त्रावसानकम् ॥
पीठशक्तीः केशरेषु मध्ये च सवराभयाम् ।

नवमीं पीठशक्तिर्मध्ये पूजयेत्यर्थः ।

तदुक्तम् (मेरुतन्त्रेऽपि)

केशरेषु तथा मध्ये पूर्वादिषु यथाक्रमम् ।
तत्तन्मन्त्रोक्तपीठस्य नव शक्तीः प्रपूजयेत् ॥
पीठमन्त्रेण गन्धाद्यैः पीठमध्ये ततोऽर्चयेत् ।
चतुर्थीनमसा युक्तैः स्वैः स्वैरेव तु नामभिः ॥
मध्ये पुष्पाञ्जलिं दद्यात् पीठमन्त्रेण साधकः ।
मूलमन्त्रं समुच्चार्य षष्ठ्यन्तं पीठनाम च ॥
मूर्त्तिं च कल्पयामीति मूर्त्तिं मध्ये विनिःक्षिपेत् ।

(महाकपिलपञ्चरात्रे)

सौवर्णं कलशं रम्यं रौप्यं ताम्रमथापि वा ।
निर्दोषं मृण्मयं वापि चन्दनेन विलेपितम् ॥

कलशपरिमाणं तु ।

पञ्चाशदङ्गुलो व्यास उत्सेधः षोडशाङ्गुलः ।
कलशानां प्रमाणं तु मुखमष्टाङ्गुलं भवेत् ॥

इति (सिद्धान्तसारे) प्रोक्तम् ।

( शारदायाम् )

हेमादिरचितं कुम्भमस्त्राद्भिः क्षालितान्तरम् ।
चन्दनागुरुकर्पूरधूपितं शोभनाकृतिम् ॥
आवेष्टिताङ्गं नीरन्ध्रं तन्तुना त्रिगुणात्मना ।

सूत्रे विशेष उक्तस्तन्त्रान्तरे ।

कन्याकर्त्तितसूत्रेण त्रिगुणेन च वर्त्मना ।
गुणत्रयात्मकेनैव वेष्टयेदभितः समम् ॥

( शारदायाम् )

अर्चितं गन्धपुष्पाद्यैः कूर्चाक्षतसमन्वितम् ।
नवरत्नोदरं मन्त्री स्थापयेत् तारमुच्चरन् ॥

( मेरुतन्त्रे )

ध्रुवं जपन् विधानेन स्थापयेद्देशिकोत्तमः ।
नवरत्नानि निःक्षिप्य कुम्भे कूर्चमथोपरि ॥
दूर्वाचन्दनसंयुक्तं विन्यसेद्दक्षिणान्वितम् ।

नवरत्नानि तत्रैवोक्तानि ।

पुष्पं[1] नीलं[2] च वैदूर्यं[3] विद्रुमं[4] मौक्तिकं[5] तथा ।
ततो मरकतं[6] वज्रं[7] गोमेदं[8] पद्मरागकम्[9] ॥
प्रोक्तानि नव रत्नानि देशिकैस्तन्त्रवित्तमैः ।
आद्यन्तं क्रमतो मन्त्रं मातृकां मनसा जपन् ॥
मूलमन्त्रं जपन्नन्ते चिन्तयन्नैक्यमात्मनः ।

घटस्य पीठाभेदं च चिन्तयेत् साधकोत्तमः ॥
पञ्चाशदौषधीक्काथैः पूरयेत् तदनन्तरम् ।
एकेन सहितास्ताश्च वर्णौषध्यश्च ता इमाः ॥
चन्दनं चापि रक्ताख्यचन्दनं चागुरुस्तथा ।
कर्पूरोशीरकुष्ठानि बालकं चापि केसरम् ॥
कङ्कोलकं जातिफलं जटामांसी मुरा तथा ।
ग्रन्थिकं रोचना जातीपत्रं पिप्पलबिल्वकौ ॥
पृश्निपर्णी चित्रकं च लवङ्गं कत्तृणं तथा ।
कट्फलं चापि गुञ्जा स्यादुदुम्बरककाश्मरी ॥
पद्मकाष्ठं शङ्खपुष्पी मयूरस्य शिखा तथा ।
प्लक्षोऽग्निमन्थश्च तथा मुद्गपर्णी कुशाः पुनः ॥
पाषाणभेदकः कृष्णशङ्खपुष्पी च रोहिणी ।
स्योनाको बृहती चैव पाटली मूषकर्णिका ॥
तुलसी शिखरी इन्द्रवल्ली भृङ्गाभिधो नृपः* ।
ततोऽपराजिता तालमूली चापि कृताञ्जली ॥
दूर्वा श्रीदेविकन्याख्ये भार्ग्यथो भद्रमुस्तकः ।
लवङ्गरहिताश्चैताः पञ्चाशत्संख्यका इति ॥
दुग्धवृक्षत्वचां क्काथैर्ब्रह्मभूरुट्त्वगुद्भवैः ।
पूरयेदिति शेषः ।
( शारदायाम् )
ऐक्यं संकल्प्य कुम्भस्य पीठस्य च विधानवित् ।
क्षीरिद्रुमकषायेण पलाशत्वग्भवेन वा ॥
तीर्थोदकैर्वा कर्पूरगन्धपुष्पसुवासितैः ।
आत्माभेदेन विधिवत् मातृकां प्रतिलोमतः ॥

---

* भृङ्गाभिधो नृपो भृङ्गराजः ।

जपन्मूलमनुं तद्वत् पूरयेद्देवताधिया ।
शङ्खे क्वाथाम्बुसंपूर्णे गन्धाष्टकमभीष्टदम् ॥
विलोड्य पूजयेत् तस्मिन्नावाह्य कलशे कलाः ।
दश वह्नेः कलाः पूर्वं द्वादश द्वादशात्मनः ॥
षोडशापि च सोमस्य पश्चात् पञ्चाशतं कलाः ।
जपेद्वा प्रतिलोमेन मूलमन्त्रं च मन्त्रवित् ॥
समाहितेन मनसा ध्यायन्मन्त्रस्य देवताम् ।
प्राणप्रतिष्ठां कुर्वीत तत्र तन्त्रविचक्षणः ॥
कलात्मकं शङ्खसंस्थं क्वाथं कुम्भे च निःक्षिपेत् ।

( मेरुतन्त्रे )

गन्धपङ्कप्रसूनादिवासितैर्वा शुभैर्जलैः ।
क्वाथादितोयैरापूर्य शङ्खं तस्मिन् विलोडयेत् ॥
गन्धाष्टकं तस्य तस्य देवस्याथ प्रकीर्त्यते ।
चन्दनागुरुकर्पूररोचनाकुङ्कुमं मदम् ॥
रक्तचन्दनयावादि गाणपत्यमुदाहृतम् ।
चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः ॥
जटामांस्यथ कस्तूरी शक्तेर्गन्धाष्टकं विदुः ।
जलकाश्मीरकुष्ठैस्तु रक्तचन्दनचन्दनैः ॥
मालवागुरुकर्पूरैः शाम्भवं चाष्टगन्धकम् ।
ह्रीवेरं चन्दनं कुष्टमगुरुः कुङ्कुमं मुरम् ॥
सेव्यकं च जटामांसी वैष्णवं तदुदीरितम् ।
जलकाश्मीरकुष्ठैस्तु रक्तचन्दनचन्दनैः ॥
तमालागुरुकर्पूरैः सौरं गन्धाष्टकं विदुः ।
गोरोचनार्ककस्तूरीकर्पूरागुरुकुङ्कुमैः ॥

चन्दनेभमदाभ्यां च दरदेन च पङ्कजैः ।
गन्धाष्टकस्य संयोगात् सामर्थ्याद्देशिकस्य च ॥
सशक्तिकं जलं कुम्भे भवेदेवं विदुर्बुधाः ।
आदौ कृशानुसंबन्धि कलादशकमर्चयेत् ॥
धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।
सुश्रीः सुरूपा कपिला हव्यकव्यवहे उभे ॥
कलाद्वादशकं सौरं पूजयेत् तदनन्तरम् ।
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ॥
सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ।
कलाषोडशकं चान्द्रं यजेत् पश्चाद्गुरूत्तमः ॥
अमृता मानदा पूषा पुष्टिस्तुष्टी रतिर्धृतिः ।
शशिनी चान्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥
पूर्णा पूर्णामृता कान्तिदायिन्यः सोमजाः कलाः ।
वेदादिभेदसंजाताः कलाः पञ्चाशदिन्दुयुक् ॥
संनिधाप्य प्रतिष्ठाप्याभ्यर्चयेत् कलशे तु ताः ।
निवृत्तिः प्रतिष्ठा विद्या शान्तिरिन्धिश्च दीपिका ॥
रेचिका मोचिका पारा सूक्ष्मा सूक्ष्मामृता तथा ।
ज्ञानामृताऽऽप्यायनी च व्यापनी व्योमरूपिका ॥
अनन्ता सृष्टिऋद्धी तु स्मृतिर्मेधा च कान्तिका ।
लक्ष्मीर्द्युतिः स्थिरा स्थितिः सिद्धिर्जरा च पालिनी ॥
क्षान्तीश्वर्यौ रतिः कामा वरदा ह्लादिनी तथा ।
प्रीतिर्दीर्घा तीक्ष्णा रौद्री भया निद्रा च तन्द्रिका ॥
क्षुत् क्रोधिनी क्रियोत्कारी मृत्युः प्रीता च दारुणा ।

असिता च तथाऽनन्ता मध्ये मध्ये प्रपूजयेत् ॥
हऽंसः शुचिषडिति प्रताद्विष्णुस्तवेति च ।
त्रियम्बकं च गायत्री विष्णुर्योनिस्तथैव च ॥
तारस्य पञ्चभेदोत्थकलानां पूजयेत् सुधीः ।
कलादशकमावाह्य सृष्ट्याद्यं संनिधाप्य च ॥
हंसः शुचिषडित्याभ्यां ऋचं संजप्य पूजयेत् ।
प्राणसंस्थापनं कृत्वा कलानां पूजयेच्च ताः ॥
एवं जराद्यास्तीक्ष्णाद्याः पीताद्याश्च विधानवित् ।
निवृत्त्याद्याश्चापि यजेदुक्तयुक्त्या विचक्षणः ॥
अकारोकारकौ प्रोक्तौ मकारो विन्दुनादकौ ।
शक्तिः शान्तो ह्यमी सप्त ध्रुवभेदाः प्रकीर्त्तिताः ॥
अन्तिमौ द्वाविमौ भेदौ पृथगेव समीरितौ ।

( सिद्धान्तसारे )

ध्यात्वा देवं क्षिपेदम्भः शङ्खस्थं तत्कलात्मकम् ।

घटे इति शेषः ।

( शारदायाम् )

पश्चादश्वत्थपनसचूतकोमलपल्लवैः ।
इन्द्रवल्लीसमाबद्धैः सुरद्रुमधिया गुरुः ॥
कुम्भवक्त्रं पिधायास्मिँश्चषकं सफलाक्षतम् ।
संस्थापयेत् फलधिया विधिवत् कल्पशाखिनाम् ॥
ततः कुम्भं निर्मलेन क्षौमयुग्मेन वेष्टयेत् ।

( मेरुतन्त्रे )

एतत् प्रधानकुम्भस्य स्थापनं परिकीर्तितम् ।
अथ पूर्वादिकाष्ठासु तोरणानां समीपतः ॥

यथेच्छया मण्डलानि कुर्याद्वाऽष्टदलानि च ।
तदूर्ध्वं शालिपुञ्जं तु प्रतिद्वारं समाचरेत् ॥
तदूर्ध्वं पूर्णकलशं तत्र चैतान् प्रपूजयेत् ।
प्राग्ध्रुवं च धरां दक्षे पश्चाद्वाक्पतिमुत्तरे ॥
विघ्नेशमथ चाग्नेयादिषु कुम्भान् सुविन्यसेत् ।
अमृतं दुर्जयं सिद्धार्थकं मङ्गलमर्चयेत् ॥
पुनः पूर्वादिकाष्ठासु क्रमादिन्द्रादिकान् यजेत् ।
लोकपालान् मण्डलेषु कुम्भोपरि च तद्वचा ॥
ऐरावतं पुण्डरीकं वामनं कुमुदाञ्जनौ ।
पुष्पदन्तं सार्वभौमं सुप्रतीकं तदग्रतः ॥
ततो गुरुः स्ववेद्यां तु गत्वा स्वस्यासने विशेत् ।
संचिन्त्य मूलमन्त्रेण मूर्त्तिं तस्मिन् गुरूत्तमः ॥
तस्यां मूर्त्तौ समावाह्य पूजयेदिष्टदेवताम् ।

( शारदायाम् )

मूलेन मूर्त्तिमिष्ट्वाऽस्मिन् शाखायां कल्पशाखिनम् ।
आवाह्य पूजयेत् तस्यां मन्त्री मन्त्रस्य देवताम् ॥

( मेरुतन्त्रे )

आवाहनादिकं कुर्यान्मूर्त्यादौ नवधा तु तत् ।
आदावावाहनं कार्यं त्रिर्जपन्मूलमन्त्रकम् ॥
स्वर्लोकात् सूक्ष्मरूपेण देव आगत्य मूर्त्तिषु ।
स्थित एवं भावयित्वा सुषुम्णावर्त्मना सुधीः ॥
आनीय देवं स्वस्थानान्नासिकारन्ध्रनिर्गतम् ।
करे पुष्पाञ्जलिः स्थाप्यस्तं दद्याद्देवमूर्धनि ॥

( सिद्धान्तसारे )

पुष्पाञ्जलिं समादाय मुद्रया च त्रिखण्डया ।
यथोक्तां देवतां ध्यात्वा मूलमन्त्रं समुच्चरन् ॥
संबुद्ध्यन्तं देवनामात्रागच्छागच्छ चेत्यपि ।
मूलं पुनः समुच्चार्य स्वस्थानादानयेच्छिवम् ॥

अत्र शिवपदं तत्तद्देवतापरम् ।

( महाकालसंहितायाम् )

ततः प्रसूनं संगृह्य त्रिखण्डामुद्रया सुधीः ।
करकच्छपिकां बध्वा ध्यानं देव्याः समाचरेत् ॥
यस्य मन्त्रस्य यद्ध्यानं यादृशं परिकीर्तितम् ।
तेनैव ध्यानयोगेन ध्यायीत जगदम्बिकाम् ॥
वहन्नासापुटद्वारा हृदयाम्बुजमध्यतः ।
देवीं पुष्पे समानीय पुष्पं यन्त्रे प्रविन्यसेत् ॥

( मेरुतन्त्रे )

देवस्य तेजस्तन्मूर्त्तावावाहन्याख्यमुद्रया ।
स्थापयेदुच्चरन्मूलमेतदावाहनं मतम् ॥
ततः संस्थापनं कुर्यादिह तिष्ठेह तिष्ठ च ॥
मूलान्ते देवतानाम तस्यान्ते च पठेदिति ।
आस्थापनीयमुद्रां च दर्शयित्वा विभावयेत् ॥
जातः स्थिरो भव इति पश्चात् संप्रार्थयेदिति ।
देवेश भक्तिसुलभ सर्वावरणसंयुत ॥
यावत् त्वां पूजयिष्यामि तावत् त्वं सुस्थिरो भव ।
एवं संप्रार्थ्य देवेशं संनिधापनमाचरेत् ॥
मूलमन्त्रं समुच्चार्य संबुद्ध्यन्तां च देवताम् ।

इह त्वं संनिधेहीति द्विरुक्त्वा स्वस्य संनिधौ ॥
स्थितं देवं तोषयेच्च संनिधापनमुद्रया ।
संनिरोधं ततः कुर्यान्मूलमुच्चार्य देवताम् ॥
संबुद्ध्यन्तां समुच्चार्य संनिरुद्धो भवेति च ।
द्विरुच्चरेत् कृपापूर्णां भक्तिभावनिरोधिताम् ॥
प्रतिमायां स्थिरीजातां देवतामिति चिन्तयेत् ।
संमुखीकरणं कुर्यान्मूलमुच्चार्य देवताम् ॥
संबुद्ध्यन्तां वदेत् पश्चात् संमुखो भव इत्यपि ।
ध्यायेत् स्वसंमुखं देवं सुप्रसन्नाननाम्बुजम् ॥
संमुखीकरणीं मुद्रां दर्शयेदिति तत् स्मृतम् ।
ततोऽवगुण्ठनं कुर्यान्मूलमुच्चार्य देवताम् ॥
संबुद्ध्यन्तामवगुण्ठितो भवेति प्रदर्शयेत् ।
अवगुण्ठनमुद्रां च प्रदर्श्य चिन्तयेदिति ॥
भक्त्या संमोहितं देवं विस्मयोत्फुल्ललोचनम् ।
सकलीकरणं चैतद्देवस्य हृदयादिषु ॥
षडङ्गमन्त्रान् विन्यस्य मूलमुच्चार्य देवताम् ।
संबुद्ध्यन्तां च सकलीकृतो भव वदेत् ततः ॥
ध्यायेदङ्गिनि देवे तु प्रतिष्ठा अङ्गदेवताः ।
यस्माद्भिन्नस्वभावानां यदभिन्नं प्रयोजनम् ॥
अङ्गानामङ्गिना सार्धं सकलीकरणाद्भवेत् ।
अमृतीकरणं वक्ष्ये पीठे संस्थाप्य देवताम् ॥
बद्ध्वा सम्यग्धेनुमुद्रां देवमूर्ध्नि प्रवर्षणाम् ।
जायते चामृतस्येति ध्यायन्नर्घोदकेन च ॥

त्रिः सिञ्चेन्मूलमन्त्रेण दीपिनीमन्त्रतस्त्रिधा ।
अकारादिक्षकारान्तमातृकाभिस्त्रिधा पुनः ॥
वाग्भवं वदयुग्मं च वाग्वादिनि च वाग्भवम् ।
क्लीँ क्लिन्ने क्लेदिनि क्लेदय महाक्षोभमित्यपि ॥
कुरु युग्मं कामबीजं सौँ मोक्षं कुरु युग्मकम् ।
प्रासादश्च पराप्रासादः सप्तत्रिंशदक्षरः ॥
दीपिनीमनुराख्यातो देवतेजोऽभिवृद्धिकृत् ।
मूलं संबोधनान्तं च देवनामाऽमृतीकृतः ॥
भवेति च वदेदित्थममृतीकरणं स्मृतम् ।
परमीकरणं वक्ष्ये महामुद्रां च बन्धयेत् ॥
उच्चार्य मूलदेवं च पूर्ववत् परमाकृती ।
कृतो भवेति च प्रोक्त्वा ध्यायेद्देवस्य मस्तके ॥
परमामृतवृष्टिं च .... .... .... इति ।

आवाहनादिमुद्रालक्षणान्युक्तानि (लक्षणसंग्रहे)

हस्ताभ्यामञ्जलिं बद्ध्वाऽनामिकामूलपर्वणि ।
अङ्गुष्ठौ निःक्षिपेत् सेयं मुद्रा त्वावाहनी मता ॥
अधोमुखी त्वियं वै स्यात् स्थापनीति निगद्यते ।
उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात् संनिधापनी ॥
अन्तःप्रवेशिताङ्गुष्ठा सैव संरोधिनी मता ।
उत्तानमुष्टियुगला सन्मुखीकरणं भवेत् ॥
सव्यहस्तकृता मुष्टिर्दीर्घाऽधोमुखतर्जनी ।
अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ॥
देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः ।

अमृतीकरणं धेनुमुद्रया सा च संमता ।
अन्योन्याभिमुखाश्लिष्टकनिष्ठाऽनामिका पुनः ।
तथा तर्जनीमध्याद्धेनुमुद्राऽमृतप्रदा ॥
अन्योन्यग्रथिताङ्गुष्ठा प्रसारितपराङ्गुलिः ।
महामुद्रेयमुदितापरमीकरणे प्रिये ॥
प्रयोजयेदिमा मुद्रा देवताह्वानकर्मणि ।

अत्राद्यपञ्चमुद्रासु इहाऽऽगच्छ इह तिष्ठ इह संनिधेहि, इह संनिधेहि, इह संमुखीभवेति क्रमाद्वदन्ति ।

( उड्डीशे )

अत एवाभिपूर्णाया देवतायाः प्रपूजने ।
सादरं संमुखीभावमावाहनमिहोच्यते ॥

अत एवावाहनमुद्राप्रदर्शनादेव ।

विभोर्निवेशनं यन्त्रे स्थापनं कथितं बुधैः ॥
पूजां प्रपूज्यमानां तु गृहीत्वाऽनुग्रहादिकम् ।
कर्तुं सामर्थ्यमस्यास्तु तत् सांनिध्यं प्रचक्षते ॥
आकर्मकाण्डपर्यन्तं सांनिध्यं हि विभावयेत् ।
स संनिरोध उद्दिष्टो भक्तितो मन्त्रवित्तरैः ॥
आनन्दायतनं तत्त्वं सच्चिदानन्दलक्षणम् ।
तदत्र सकलं व्याप्तं ध्येयं स्यादवगुण्ठने ॥
सकलीकरणं कृत्वा मन्त्रैरेभिरथैकताम् ।
अङ्गानामङ्गिना सार्धं विदध्यादमृतीकृतिम् ॥
क्षमा तस्यापराधानां विज्ञेया परमीकृतिः ।

अपराधानामिति । अपरिच्छिन्नस्य ब्रह्मण आवाहनादिमुद्रया परिच्छिन्नताभावनारूपाऽपराधानामित्यर्थः ।

( मेरौ ) देवस्य हृदयं स्पृशन्नित्युपक्रम्य ।

कुर्यात् प्राणप्रतिष्ठां च मम स्थाने वदेत् तथा ॥
देवतानामशेषं तु सर्वं प्राग्ववदिहैव हि ।

मम स्थान इति । भूतशुद्ध्यनन्तरं च स्वदेहे कर्त्तव्यम् । यत् प्राणप्रतिष्ठापनं तस्मादेतावान् विशेष इत्यर्थः । तत्र च ज्ञानार्णवोक्तसंक्षिप्तप्रकारोऽस्माभिर्लिखितः ।

विस्तरतस्तु ( मेरुतन्त्रे )

प्राणप्रतिष्ठामन्त्रस्य मुनयोऽजेशपद्मजाः ।
छन्दो ऋग्यजुषं साम प्राणशक्तिस्तु देवता ॥
ऋषिः शिरसि वक्त्रे तु छन्दांसि हृदि देवताः ।
आं बीजाय नमो गुह्ये पदोः ह्रीँ शक्तये नमः ॥
नाभौ नमः क्रीँ कीलाय नियोगोऽसुस्थिताविति ।
ॐ आं ह्रीँ क्रोँ मँ कवर्गं सानुस्वारं नभोमुखम् ॥
पञ्चतत्त्वं समुच्चार्य स्वात्मने आँ हृदि न्यसेत् ।
ॐ आँ ह्रीँ क्रोँ चबीजं चवर्गं तद्वच्छब्दादिपञ्चकम् ॥
आत्मने ईँ समुच्चार्य शिरसे वह्निगेहिनी ।
तानि बीजानि उँ तादृक् टवर्गं श्रोत्रकादि च ॥
उक्त्वा तदात्मने ऊँ च शिखायै च वषड्वदेत् ।
तानि बीजानि एतं च वागादीनि तदात्मने ॥
ऐमुक्त्वा कवचायेति हुँ वदेत् तदनन्तरम् ।
चतुर्बीजं च पूर्वोक्तमोँ पवर्गं च तादृशम् ॥
वचनादि च तद्वत् स्यादौँ नेत्राय तदन्तकम् ।
चतुर्बीजं च अँ तादृग्यवर्गो मन आदि च ॥
तदात्मने स्वरश्चान्तोऽस्त्राय फट् चेति संवदेत् ।
अङ्गुष्ठादौ हस्ततलान्तं न्यसेदेवमेव हि ॥

नाभ्यधश्चापि कण्ठाधो मूर्धाधोऽथ तदन्तकम्।
आँ ह्रीँ क्रोँ क्रमतो न्यस्य हृत्पद्माष्टदलेषु च॥
पूर्वतः क्रमतो वर्णान् कर्णिकायां हृदन्तकान्।
रँ लँ हँ षँ वँ च मँ च सँ शँ क्षमिति वर्गतः॥
दिक्षु न्यसेत् ततो ध्यायेत् प्राणशक्तिं हृदि स्थिताम्।
रक्ताब्धिपोतारुणपद्मसंस्थां
पाशाङ्कुशाविक्षुशराशबाणान्।
शूलं कपालं दधतीं कराब्जै
रक्तां त्रिनेत्रां प्रणमामि देवीम्॥
हस्तं निधाय हृदये प्राग्बीजं यादिकाष्टकम्।
हंसः सोऽहं मम प्राणा वदेदिह स्थिता—इति॥
उक्त्वा तथैव च पुनर्मम जीव इह स्थितः।
पुनस्तदुक्त्वा मम तु वदेत् सर्वेन्द्रियाणि च॥
पुनस्तदुक्त्वा मम तु वाङ्मनश्चक्षुरुच्चरेत्।
श्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं ततः॥
तिष्ठन्तु वह्निजायान्तमुक्त्वा तारं ततो जपेत्।
वपुर्ज्योतिर्मयं ध्यायेदिति स्यात् प्राणसंस्थितिः॥

ममेत्यादि स्वीयप्राणस्थापनाऽभिप्रायेण।

(तथा)

तत्तद्दैवतकल्पोक्तास्ततो मुद्राः प्रदर्शयेत्।
ततः संपूजयेद्देवंशक्त्या लभ्योपचारकैः॥

तन्त्रान्तरे।

विधाय देवतामूर्त्तौ मूलन्यासमशेषतः।
आसनादिप्रसूनान्तानुपचारान् समर्पयेत्॥

उपचारास्तु (नवरत्नेश्वरे)

गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ।
एते पञ्चोपचाराश्च कैवल्यफलदायिनः ॥

इति पञ्चोपचाराः ।

पाद्यमर्घ्यं तथा स्नानं मधुपर्काचमनं तथा ।
गन्धादयो निवेद्यान्ता उपचारा दश क्रमात् ॥

( महाकालसंहितायाम् )

पाद्यार्घाचमनीयं स्नानीयं चत्वार्यनुक्रमात् ।
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ॥
पुनराचमनीयं च दशैतान् संप्रचक्षते ।

इति दशोपचाराः ।
( कुलरत्नावल्याम् )

पाद्यार्घाचमनं स्नानं पुनराचमनीयकम् ।
गन्धाक्षतप्रसूनानि धूपदीपनिवेद्यकम् ॥
ताम्बूलं द्वादश प्रोक्ता उपचाराः प्रपूजने ।

इति द्वादशोपचाराः ।
( नवरत्नेश्वरे )

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्काचमनस्नानवसनाभरणानि च ॥
सुगन्धसुमनोधूपदीपनैवेद्यचन्दनम् ।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥

इति षोडशोपचाराः ।
( शारदायां तु )

पाद्यार्घाचमनस्नानवसनाभरणानि च ।
गन्धपुष्पे धूपदीपौ नैवेद्याचमनं तथा ॥
ताम्बूलमर्चना स्तोत्रं तर्पणं च नमस्क्रिया ।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥

इत्युक्तम् ।
(नमस्कारेश्वरे)

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
स्नानं वासोपवीतं च भूषणानि च सर्वशः ॥
गन्धं पुष्पं तथा धूपं दीपमन्नं च तर्पणम् ।
माल्यानुलेपनं चैव नमस्कारं विसर्जनम् ॥
अष्टादशोपचारैस्तु मन्त्री पूजां समाचरेत् ।

इत्यष्टादशोपचाराः ।
(सुन्दरीरहस्यवृत्तौ)

आसनाभ्यञ्जने तद्वदुद्वर्त्तननिरीक्षणे ।
सन्मानं वै सर्पिरादेः स्नपनावाहने ततः ॥
पाद्यार्घ्याऽऽचमनीये च स्नानीयमधुपर्कको ।
पुनराचमनीयं च वस्त्रं यज्ञोपवीतकम् ॥
अलंकारा गन्धपुष्पे धूपदीपौ तथैव च ।
ताम्बुलानि च नैवेद्यं पुष्पमाला तथैव च ॥
अनुलेपनशय्ये च चामरं व्यजनं तथा ।
आदर्शदर्शनं चैव नमस्कारोऽप्यनन्तरम् ॥
गीतवाद्यवितानानि स्तुतिहोमः प्रदक्षिणम् ।
दन्तकाष्ठप्रदानं च ततो देवविसर्जनम् ॥
उपचारा इमे ज्ञेयाः षड्त्रिंशत् सुरपूजने ।

इति षट्त्रिंशदुपचाराः ।
एवं चतुःषष्ट्युपचारादयस्तन्त्रान्तरे द्रष्टव्याः ।
(कुलोड्डीशे)

उपचारेषु सर्वेषु यत् किं चिद्दुर्लभं भवेत् ।
तत् सर्वं मनसा ध्यात्वा पुष्पक्षेपेण कल्पयेत् ॥
तत्र तत्र जलं दद्यादुपचारान्तरान्तरा ।

उपचारसमर्पणविधिरुक्तः ( सारसंग्रहे )

देवस्य वामभागे तु दद्यान्मूलेन चासनम् ।
पौष्पं दारुमयं वास्त्रं चार्मं कौशेयतैजसम् ॥
षड्विधं चासनं प्रोक्तं देवताप्रीतिकारकम् ।

पौष्पं सुगन्धिपुष्परचितम् । दारुमयं कण्टकिभिन्नं चन्दनादिघटितम् । वास्त्रं कार्पासम् । कौशेयं कम्बलादि । कौशयं सप्तविंशतिकुशपत्राणां विष्टरः ।

तदुक्तम् ( डामरे )

सप्तविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता ।
विष्टरः सर्वयज्ञेषु लक्षणं परिकीर्तितम्—इति ॥

तैजसं सुवर्णादिरचितं लोहसीसादिवर्ज्यम् । चार्मं मृगव्याघ्राद्यजिनम् ।

( ज्ञानमालायाम् )

उपचारविधिं वक्ष्ये दत्वा चाऽथ शुभासनम् ।
स्वागतं कुशलप्रश्नं निगदेदग्रतस्ततः ॥

( मेरुतन्त्रे )

साङ्गं सावरणं देवं पूजार्थमिह चागतम् ।
ध्यात्वा इति तु मूलान्ते स्वागतं परिकल्पयेत् ॥

ज्ञानमालायाम् ।

पाद्यं पादाम्बुजे दद्याद्देवस्य हृदयाणुना ।

हृदयाणुना नम इति मन्त्रेणेत्यर्थः ।

( यामले )

हस्ताब्जयोस्ततो दद्यादर्घ्यं तोयैः सुवासितैः ।

( ज्ञानमालायां तु )

अर्घ्यं दिशेत् ततो मूर्ध्नि शिरोमन्त्रेण देशिकः—इत्युक्तम्

शिरोमन्त्रेणेति स्वाहेत्यर्थः ।
महाकालेनापि ।

अर्घ्यं मूर्ध्नि प्रदातव्यं स्वाहामन्त्रेण साधकैः—इत्युक्तम् ।

(क्रमदीपिकायां)

अर्घदानानन्तरं पाद्यदानमुक्तम् ।

दत्वाऽऽसनं स्वागतमित्युदीर्य

तथार्घपाद्याचमनीयकानि—इति ॥

(सिद्धान्तसारे)

पाद्यं हृन्मनुना दद्यादर्घ्यं ज्वलनजायया ।

स्वधयाऽऽचमनीयं च तेनैव मधुपर्ककम् ॥

(शारदायाम्)

स्वधामन्त्रेण वदने दद्यादाचमनीयकम् ।

जातिलवङ्गकङ्कोलैस्तदुक्तं मन्त्रवेदिभिः ॥

तथा ।

स्वधाणुना ततः कुर्यान्मधुपर्कं मुखाम्बुजे ।

आज्यं दधि मधून्मिश्रमयमुक्तो मनीषिभिः ॥

(कुलोड्डीशे) तु । क्षीरशर्करयोरपि मधुपर्काङ्गत्वमुक्तम् ।

माक्षिकं शर्करा सर्पिर्दधि क्षीरयुतं तथा ॥

मधुपर्कं कल्पयित्वा प्रदद्याद्विधिपूर्वकम् ।

सर्वतः क्षौद्रमधिकं दधिसर्पिःसिताः समम् ॥

क्षीरं तुः सर्वतः स्वल्पं मधुपर्क उदाहृतः ।

(शारदायाम्)

तेनैव मनुना कुर्यादद्भिराचमनीयकम् ।

तेनैव मनुनेति स्वाहामन्त्रेणैवेत्यर्थः ।

अत्र सुधार्णवकृतः ।

वारुणेन च बीजेन दद्यादाचमनीयकम् ।

मधुपर्कं मुखे दद्याज्जलमन्त्रेण देशिकः ॥

इति यामलस्वतन्त्रवचनसङ्गत्यनुरोधेन स्वधामन्त्रेणान्यत्र सुधामन्त्रेणेति ठमाश्रित्य सुधाशब्दस्यामृतवाचकत्वात् तद्बीजेन विन्दुयुक्तवकारेण मधुपर्क-चमनीयं च दद्यादित्याहुः ।

तन्त्रसारकृतस्तु त्यागार्थकस्वाहाशब्देनार्घ्यदानविधानात् तत्समभिव्याहृता-चमनीयदाने त्यागबोधकः स्वधाशब्दो गृह्यते न तु वरुणबीजं तस्य त्यागार्थक-त्वाभावात् ।

तथा च ( कुलसारे )

आदौ मन्त्रं समुच्चार्य पश्चादेवं समर्चयेत् ।
सम्प्रदानं तदन्ते तु त्यागार्थकपदं ततः ॥
एवं क्रमेण देवेशि उपचारान् प्रकल्पयेत् ।

यत् तु ।

मधुपर्कं ततः कुर्याज्जलमन्त्रेण देशिकः ।
स्वधाणुना ततः कुर्यान्मधुपर्कं मुखाम्बुजे ॥
तेनैव मनुना कुर्यादद्भिराचमनीयकम् ।
वारुणेन च बीजेन दद्यादाचमनीयकम्—इति ॥

वचनद्वयं, तद्वर्णभेदेन व्यवस्थापनीयम् । शूद्राणां स्वधेत्युच्चारणेऽनधि-कारात् । इत्थं च नमः स्वाहा स्वधा वौषडित्यादीनां त्यागार्थकतया तैरेव मन्त्रैरुपचारदानं तद्व्यतिरिक्तमन्त्रेणोपचारसमर्पणं तु प्रमाणशून्यमिति व्याजह्रुः ।

केचित् स्वधामन्त्रेण मधुपर्काचमनीयदानस्य सकलतन्त्रसंमतत्वात् जलमन्त्रेणेत्यादौ तृतीयायाः साहित्यमर्थस्तेन च जलबीजसहितेन स्वधामन्त्रेण दद्यादिति वदन्ति । अन्ये त्वाचमनीयसाधने जलमन्त्रस्तद्दाने तु स्वधेति संगमयन्ति ।

निबन्धे ।

स्नानं वासोऽलङ्करणं गन्धं पुष्पं हृदाऽर्पयेत् ।

हृदा नमःशब्देन ।

( कालीकल्पे तु )

स्नानं गन्धं हृदा दद्यात् पुष्पाणि वौषडित्यपि—इत्युक्तम् ।
ततो निवेदयामीति सर्वं दद्यान्महेश्वरि ॥

सर्वमिति । वस्त्रालङ्कारधूपदीपादीत्यर्थः । नैवेद्यदाने तु विशेष उक्तः ।

( सिद्धान्तसारे )

निवेदयामि हृद्वह्निजायाभिस्तत्त्वमुद्रया ।
ऐनमायै मन्त्रेशानि दद्यान्नैवेद्यमुत्तमम्—इति ।

(मेरुतन्त्रे)

सुगन्धितैलैरभ्यज्य सुगन्धामलकादिभिः ।
उद्वर्त्तनं विधायाथ स्नापयेदुष्णवारिणा ॥
गन्धोदकैश्च मूलेन यथाशक्त्याभिषेचयेत् ।
क्षीरदध्याज्यमधुभिः खण्डेन च पृथक् पृथक् ॥

(शारदायाम्)

गन्धाद्भिः कारयेत् स्नानं वाससी परिधापयेत् ।

वस्त्राण्युक्तानि (मेरुतन्त्रे)

विष्णवे वगलामुख्यै पीतकौशेयमम्बरम् ।
शिवाय च सरस्वत्यै पार्श्वनाथाय शुभ्रकम् ॥
रक्तं शक्त्यर्कविघ्नानां भौमसौगतयोरपि ।
कृष्णं भैरवकाल्यादे राधादे नीलमम्बरम् ॥
अच्छिद्रं मलहीनं च सदशं यन्न धारितम् ।
कार्पासजं वा कौशेयं राङ्कवं वा विशिष्यते ॥
तैलादिदूषिताद्रोगः सच्छिद्राद्बाध्यता भवेत् ।
परकीयाच्च दारिद्र्यं जीर्णादायुःक्षयो भवेत् ॥
दग्धाद्विपद्भवेदास्यदत्ते गात्रावलम्बिते ।
सूचीविद्धात् स्फोटकादि मलिनात् कान्तिहीनता ॥
उप्तकेशे पुत्रनाशश्चाधौते दीनता भवेत् ।
मिथ्याभिशापो भवति श्लेष्ममूत्रादिदूषिते ॥

तत्रैव ।

यज्ञोपवीतं दत्त्वाऽथ भूषणानि समर्पयेत् ।
ङेन्तं नमोन्तं तन्नाम पूजनादौ प्रयोजयेत् ॥
तानि नानाविधानि स्युर्मुकुटादिप्रभेदतः ।
स्त्रीपुंप्रभेदतश्चापि विज्ञेयानि विचक्षणैः ॥

गन्धः पञ्चविध उक्तः ( सिद्धान्तसंग्रहे )

संघर्षजः परिमलः क्षोदजः प्राणिसंभवः ।
कृष्णसाराभिधानश्च गन्धः पञ्चविधो मतः ॥

संघर्षजो घृष्टचन्दनादिः । परिमलः सुगन्धिद्रव्यविमर्दजन्यः । क्षोदजो गोरोचनादिचूर्णोत्पन्नः । प्राणिसंभवः कस्तूरिकादिः । कृष्णसारस्तु श्रीखण्डादिसुरभिद्रव्याद्यकृष्टः । सारभागो भाषया अतर इति प्रसिद्धः ।

तत्रैव ।

याक्षं दैवं च गान्धर्वं कर्दमं त्रितयं परम् ।
धर्मार्थकाममोक्षाणां साधनं देवतार्पितम् ॥

कर्दमत्रयं तत्रैवोक्तम् ।

कुरङ्गमदकक्कोलकालागुरुसिताभ्रकैः ।
प्रमोदकृद्देवतानां विज्ञेयो यक्षकर्दमः ॥
स एव रोचनायुक्तो देवकर्दम उच्यते ।
पटीरयुग्देवपङ्को ज्ञेयो गन्धर्वकर्दमः ॥

कुरङ्गमदः कस्तूरी । सिताभ्रं कर्पूरं । पटीरं चन्दनम् ।
( पुरश्चरणचन्द्रिकायाम् )

चन्दनं मलयोत्पन्नमनाघ्रातं सुशीतलम् ।
कर्पूराऽगुरुकस्तूरीहिमाम्बुक्षोदितं शुभम् ॥

( मेरुतन्त्रे )

कस्तूरिका चैकभागो द्वौ भागौ मुस्तकस्य च ।
तदर्धैला जटामांसी त्वक्कुष्ठं च शिलारसः ॥
चतुर्भागं वालकं च घृतभृष्टा तथा नखी ।
सुगन्धि कोकिला लोहवाणो राजवचा तथा ।
अष्टौ भागाः केशरस्य मुरायाश्चाथ षोडश ॥
कालागुरुश्चाकसीरं कालीयमथ वार्द्धयः ।
भागाः सेवन्तिकार्कस्य चन्दनेन विमर्दयेत् ॥

कामोदनामा संमर्दो देवताराजतोषकृत् ॥

पुष्पभेदास्तत्रैवोक्ताः ।

पुष्पं पञ्चविधं प्रोक्तं परं चापरमेव च ।
उत्तमं मध्यमं हीनं तेषां वक्ष्यामि लक्षणम् ॥
परं सुवर्णपुष्पं स्यात् तत् सदा योग्यमेव हि ।
अभ्यङ्गपूर्वकं देयमर्चनार्हं पुनर्भवेत् ॥
अपरं राजतं पुष्पं ताम्रजं च प्रकीर्त्तितम् ।
सदा योग्यं चेदमपि त्रिवर्षं चैकवर्षकम् ॥
तुलसी केतकी पद्म करवीरं च मालती ।
पञ्चैतान्युत्तमान्याहुर्मध्यमानि तथा दश ॥
मल्लिकाकुन्दमन्दारतगरार्जुनकिंशुकाः ।
पारिजातमशोकं च विल्वं चम्पकमेव च ॥
एतद्भिन्नं सुवर्णं च सुगन्धं हीनमुच्यते ।
तत्तन्मन्त्रविधानेषु विहितानि समर्पयेत् ॥

अथ निषिद्धानि तत्रैव ।

नार्पयेद्भूमिपतितं कोरकं कृमिभक्षितम् ।
अङ्गलग्नं समाघ्रातं म्लानं पर्युषितं तथा ॥
उग्रगन्धमगन्धं च कृमिकेशादिदूषितम् ।
अशुद्धपात्रप्राण्यङ्गवासोभिः कुत्सितात्मभिः ॥
आनीतं तन्निषिद्धं स्यान्मध्याह्नस्नानतस्तथा ।
अधोमुखार्पितं नेष्टं पुष्पाञ्जलिविधौ न तत् ॥
न पर्युषितदोषोऽस्ति तुलसीविल्वचम्पके ।
जलजे वकुलेऽगस्त्ये मालाकारगृहेषु च ॥
केतकीकुटजैर्नेशं न वर्वर्याऽक्षतैर्हरिम् ।

न दूर्वया यजेद्दुर्गां विल्वपत्रैर्दिवाकरम् ॥
लम्बोदरं तुलस्या च वृन्तहीनैः समर्चयेत् ।
देवताभेदेन पुष्पभेदा उक्ताः ( पाद्मे )
दूर्वारम्भाविल्वपत्रैस्तुलसीवर्जितैः शुभैः ।
जलजैः स्थलजैः पुष्पैः श्वेतरक्तैर्गणाधिपम् ॥
मालतीकुन्दमन्दारकुमुदैः शारदां यजेत् ।
करवीरं जवापुष्पं पद्मं कोकनदं तथा ॥
नीलोत्पलमशोकं च बन्धूकं दाडिमं तथा ।
केतकं मल्लिकाऽर्कं च त्रिसन्ध्यं च रवेः प्रियम् ॥
कनकं कुमुदं कुन्दं तगरं कण्टकारिका ।
गिरिकर्णी विल्वपत्रं निषिद्धं रविपूजने ॥
हयारिकुसुमं पद्मं कैरवं नागकेशरम् ।
जातीसेवन्तिकाद्रोणपुष्पं नीलोत्पलं तथा ॥
अर्कपुष्पमपामार्गमुन्मत्तं कुटजं तथा ।
शमीपुष्पं विल्वपत्रं हरस्यातीव वल्लभम् ॥
केतकं च जपापुष्पं शिरीषं दमनं तथा ।
विभीतकं चातिमुक्तं सर्जबन्धूकयूथिकाः ॥
विष्णुक्रान्तामपि श्वेतां वर्जयेच्छिवपूजने ।
मालती मल्लिका यूथी चम्पकं नागकेशरम् ॥
पाटला कुन्दमन्दारं कह्लारमतिमुक्तकम् ।
कर्णिकारं कुरुवकं कदम्बं करवीरकम् ॥
तमालं वकुलं नीलोत्पलं कमलकैरवे ।
सेवन्तिका केतकं च दमनं मुनिपुष्पकम् ॥
धात्रीपुष्पं शमीपत्रमपामार्गस्य पत्रकम् ।

मृदूनां चैव दूर्वाणामङ्कुराः शतपत्रिका ॥
मञ्जरी सहकारस्य तुलसी च हरेः प्रिया ।
उन्मत्तमर्कपुष्पं च निर्गन्धमतिलोहितम् ॥
यद्यप्युत्कटगन्धं तद्वर्जयेद्विष्णुपूजने ।
रक्तपुष्पं विल्वपत्रं नृसिंहाय निवेदयेत् ॥
वर्जयेत् केतकं पुष्पमन्यत् सर्वं च पूर्ववत् ।

(कालीतन्त्रे)

नानोपहारवलिभिर्नानापुष्पैर्मनोहरैः ।
अपामार्गदलैर्भृङ्गैस्तुलसीवर्जितैः शुभैः ॥
पूजनीया सदा भक्त्या नृणां शीघ्रफलाप्तये ।

(मुण्डमालायाम्)

पुष्पाण्यपि तथा दद्याद्रक्तकृष्णासितानि च ।
श्वेतपुष्पं जवापुष्पं करवीरं तथा प्रिये ॥
तगरं मालती जाती सेवन्ती यूथिका तथा ।
धत्तूराशोकवकुलश्वेतकृष्णापराजिताः ॥
वकपुष्पं तथा विल्वं चम्पकं नागकेशरम् ।
मल्लिका झिण्टिका काञ्ची रक्तं यत् परिकीर्त्तितम् ॥
अर्कपुष्पं वर्वरं च बन्धूकं च प्रियम्वदा ।
अष्टम्यां च विशेषेण तुष्टा भवति पार्वती ॥
पद्मपुष्पेण रक्तेन सतुष्टाः सर्वदेवताः ।
कृष्णैर्वा यदि वा शुक्लैः कालिका वरदा भवेत् ॥

(मत्स्यसूक्ते)

सुगन्धिश्वेतलौहित्यकुसुमैरर्चयेत् कुलैः ।
विल्वैर्मरुवकाद्यैश्च तुलसीवर्जितैः शुभैः ॥

क्षौद्रपुष्पैर्विशेषेण वज्रपुष्पेण मिश्रितम् ।
सर्वं पुष्पं प्रदद्याच्च भक्तियुक्तेन चेतसा ॥
पूजनीया सदा भक्त्या नृणां शीघ्रफलप्रदा ।

कुलैर्वज्रपुष्पाद्यैः ।

(कालिकापुराणे)

पुष्पं कोकनदं पद्मं जपा बन्धकमेव च ।
सर्वेषां पुष्पजातीनां रक्तपुष्पं विशिष्यते ॥

( यामले )

वज्रपुष्पं कालिकायै प्रदद्यात् सिद्धिहेतवे ।
योनिपुष्पं महेशाय वज्रपुष्पं निगद्यते ॥

वज्रपुष्पस्य त्रैविध्यमुक्तम् (मुण्डमालायाम्)

आषोडशादनूढाया उत्तमं सर्वसिद्धिदम् ।
बलात्कारेण ऊढाया मध्यमं भोगवर्द्धनम् ॥
रजोयोगवशादन्यदधमं सुखदायकम् ।
स्वयम्भूकुसुमं देवि त्रिविधं भुवि जायते ॥

अनूढाया अनुपभुक्तायाः । ऊढाया उपभुक्तायाः ।

तन्त्रान्तरे ।

वज्रपुष्पेणार्पितेन यथा तुष्यति कालिका ।
न स्वर्णैर्न च रत्नैश्च न स्पर्शमणिभिस्तथा ॥
अभावे वज्रपुष्पस्य जवापुष्पेण पूजयेत् ।
अर्कपुष्पेण वा पूज्या कालिका सर्वमङ्गला ॥

कालिकेति दक्षिणाम्नायाधिष्ठात्री । उत्तराम्नाये त्वर्कपुष्पनिषेध उक्तो (महाकालसंहितायाम्)

तुलसीभिरपामार्गैर्धत्तूरैः सिन्धुवारकैः ।
अर्कपुष्पैर्वासकैश्च नैव देवीं प्रपूजयेत्—इति ॥

विहितानि तत्रैवोक्तानि ।

शिरीषैः कर्णिकारैश्च चम्पकैः कोविदारकैः ।

वकुलैश्चैव मन्दारैः कुन्दपुष्पैः कुरराटकैः ॥
लताभिर्ब्रह्मवृक्षस्य मृदुदूर्वाङ्कुरैरपि ।
काञ्चनारैरशोकैश्च पुन्नागैः केतकीदलैः ॥
सेफालिकाभिर्यूथीभिर्जातीभिर्दमनैरपि ।
शतपत्रैर्मल्लिकाभिरम्लानैर्बन्धुजीवकैः ॥
झिराटीभिश्च जपापुष्पैः करवीरैश्च किंशुकैः ।
पारिजातैः पाटलैश्च पद्मैर्नीलोत्पलैरपि ॥
माधवीभिर्मरुवकैरपराजितयाऽपि च ।
अशनैश्च कदम्बैश्च द्रोणपुष्पैः सकेशरैः ॥
अर्चयेत् कुसुमैरेभिर्देवीं साधकसत्तमः ।
विल्वपत्रं यथा प्रीतिकरं देव्या वरानने ॥
न तथाऽन्यत् किञ्चिदस्ति पुष्पेषु प्रीतिकारकम् ।
अतो यत्नेन दातव्यं विल्वपत्रं त्रिपत्रयुक् ॥

तथा ।

नानापुष्पैर्विरचिता दातव्या पुष्पमालिका ।

मालाभेदास्तु तत्रैवोक्ताः ।

एकजातीयकैः पुष्पैर्भिन्नजातीयकैरपि ।
माला तथैकवर्णा स्याद्भिन्नवर्णाऽपि वा प्रिये ॥
सा पुनस्त्रिविधा ज्ञेया परिणाहवशेन तु ।
पतेद्धृदयपर्यन्तं या मालाऽऽमोदशालिनी ॥
वैकक्षिका सा विज्ञेया सर्वावरतया स्थिता ।
अधोऽवलम्बिनी नाभेः कौसुमी या स्रगुच्यते ॥
साऽधोरिणी परिज्ञेया मध्यमा पूर्वतोऽधिका ।
आगुल्फस्त्रंसिनी या तु पादपद्मोपरि स्थिता ॥

वनमालेति सा ख्याता सर्वाभ्यः स्रग्भ्य उत्तमा ।

अथ द्वितीयविद्यायाः । ( नीलतन्त्रे )

अष्टम्यां च चतुर्दश्यां पूजयेच्च यथाविधि ।
आज्ञासिद्धिमवाप्नोति जवापुष्पं च वर्वरी ॥
चन्दनं चार्ककुसुमं दद्याच्छ्वेतापराजिताम् ।
बन्धूकमालया तुष्येत् तथा छागप्रदानवत् ॥

(त्रिशक्तिरत्ने)

वज्रपुष्पेण संमिश्रैरर्चयेत् सिद्धिहेतवे ।
अभावाद्वज्रपुष्पस्य स्मरणात् सिद्धिमाप्नुयात् ॥
तुलसीमालतीवर्जं पुष्पं दद्यात् प्रसन्नधीः ।

( मत्स्यसूक्ते )

पुष्पं श्रेष्ठं रक्तकोकं बन्धूकं शतपत्रकम् ।
वर्वरीद्वितयं चैव कर्णिकारद्वयं तथा ॥
वकमन्दारचूतानि करवीराणि शस्यते ।

(कुलचूडामणौ)

वर्जयेन्मालतीपुष्पं वर्जयेत् तुलसीदलम् ।

तन्त्रान्तरे ।

वज्रपुष्पेण सर्वत्र पूजयेच्चीनसुन्दरीम् ।

उपचारान्तरसमर्पणेऽपि वज्रपुष्पं प्रतीच्छ स्वाहेति वक्तव्यमित्यर्थः ।

( श्रीविद्यापद्धतौ )

जलजानीह यावन्ति श्वेतकृष्णारुणानि च ।
जपाबन्धूकमुख्यानि रक्तानि स्थलजान्यपि ॥
श्वेतान्यपि सुगन्धीनि मल्लिकावर्जितानि च ।
पीतान्यपि तथा विल्वपत्राणि च समर्पयेत् ॥
निर्गन्धं कृष्णपुष्पं च तुलसीं च परित्यजेत् ।
तुलसीगन्धमात्रेण क्रुद्धा भवति सुन्दरी ॥

नार्चयेत् त्रिपुरामम्बां पलाशकुसुमैरपि।

काम्ये तु मल्लिका न निषिद्धा।

तदुक्तम् (ज्ञानार्णवे)

मल्लिकामालतीजातीकुन्दैश्च शतपत्रकैः।

श्वेतोत्पलसुशीतैश्च पूजयेन्मासमात्रकम्—इति॥

(कौलालवीये)

सुन्दरीभैरवीकालीब्रह्मविष्णुविवस्वताम्।

तुलसीवर्जिता पूजा सा पूजा सफला भवेत्॥

विफलेति क्वचित् पाठस्तत्राप्यकारप्रश्लेषात् सफलेत्यर्थः पर्यवस्यति।

ब्रह्मविष्णुविवस्वतामिति पुष्पचिन्तामणिकृल्लिखितपाठः प्रामादिकः। विष्णुपूजायां तुलसीनिषेधस्य स्वप्नेऽप्यश्रुतत्वात्।

(निर्बन्धे)

रक्तपुष्पैर्विशेषेण सन्तुष्टा भुवनेश्वरी।

तथैव छिन्नमस्ताऽपि पीतैस्तु वगलामुखी॥

गुञ्जया तु विशेषेण मातङ्गी वरदा भवेत्।

(मुण्डमालायाम्)

श्मशानधत्तुरेणैव तुष्टा धूमावती परा।

एवशब्दः प्राशस्त्यपरो न त्वन्ययोगव्यवच्छेदकः।

श्रीविद्योदितपुष्पैस्तु सर्वा विद्याः प्रपूजयेत्।

इति तन्त्रान्तरवचनात्।

(मेरुतन्त्रे)

कुन्दमन्दारकुमुदमालतीपद्मकेतकम्।

नन्द्यावर्त्ताह्वयं जाती कह्लारं चम्पकं तथा॥

रक्तोत्पलादिपुष्पाणि लक्ष्म्याश्चातिप्रियाणि हि।

दुर्गायास्तु (भविष्यपुराणे)

मल्लिकामुत्पलं पद्मं शमीपुन्नागचम्पकम्।

अशोकं कर्णिकारश्च द्रोणपुष्पं विशेषतः॥

करवीरं जपापुष्पं कुङ्कुमं नागकेशरम्।

यः प्रयच्छति पुण्यार्थं पुष्पाण्येतानि भारत ॥
चण्डिकायै नरश्रेष्ठ श्रद्धाभक्तिसमन्वितः ।
स कामानखिलान् प्राप्य श्रीदुर्गानुचरो भवेत् ॥

तथा ।

पुन्नागचम्पकः कुन्दो यूथिका नवमल्लिका ।
तगरार्जुनमल्ली च बृहती शतपत्रिका ॥
तथा कुमुदकह्लारविल्वपाटलमालती ।
जवाविचकिलाशोकरक्तनीलोत्पलानि च ॥
दमनो मरुपत्रं च शतपुष्पं विधृद्धये ।

तथा ।

सुगन्धिगन्धपुष्पैस्तु पूजयेद्यस्तु चण्डिकाम् ।
मुक्तिभिर्मालया वाऽपि सोऽश्वमेधफलं लभेत ॥

तथा ।

नीलोत्पलसहस्रेण यो मालां संप्रयच्छति ।
चण्डिकायै नरश्रेष्ठ तस्य पुण्यफलं शृणु ॥
वर्षकोटिसहस्राणि वर्षकोटिशतानि च ।
श्रीदुर्गानुचरो भूत्वा रुद्रलोके स मोदते ॥

ग्रहाणामपि तत्रैव ।

हयारिकुसुमैः सूर्यं कदम्बैश्चन्द्रमर्चयेत् ।
क्षितिजं तु जपापुष्पैश्चम्पकेन तु सोमजम् ॥
शतपत्रैर्गुरुः पूज्यो जातीपुष्पैस्तु भार्गवः ।
मल्लिकाकुसुमैः पङ्गुः कुन्दपुष्पैर्विधुन्तुदः ॥
केतुश्च विविधैः पुष्पैः शान्तिकालेषु सर्वदा ।

(यामले)

पुष्पैर्देवाः प्रसीदन्ति पुष्पे देवाश्च संस्थिताः ।

।किं चातिबहुनोक्तेन पुष्पस्योक्तिर्मतल्लिका ॥
परं ज्योतिः पुष्पगतं पुष्पेणैव प्रसीदति ।
त्रिवर्गसाधनं पुष्पं पुष्टिश्रीस्वर्गमोक्षदम् ॥
पुष्पमूले वसेद्‌ब्रह्मा पुष्पमध्ये तु केशवः ।
पुष्पाग्रे तु महादेवः सर्वे देवाः स्थिता दले ॥
तस्मात् पुष्पैर्यजेद्देवं नित्यं भक्तियुतो नरः ।

( क्रियासारे )

सर्वैः पुष्पैः सदा पूज्या विहिताविहितैरपि ।
कर्त्तव्या सर्वदेवानां भक्तियोगोऽत्र कारणम् ॥
देवीपूजा सदा शस्ता जलजैः स्थलजैरपि ।
विहितैर्वा निषिद्धैर्वा भक्तियुक्तेन चेतसा ॥

( मेरुतन्त्रे )

पुष्पाभावे प्रवालैर्वा तदभावे च कोरकैः ।
तदभावे फलैः पत्रैस्तदभावे तृणाङ्कुरैः ॥

तन्त्रान्तरे ।

पुष्पं वा यदि वा पत्रं यथोत्पन्नं तथाऽर्पणम् ।
विल्वस्य खादिरस्यापि तथा धात्रीफलस्य च ॥
तमालस्य च पद्मस्य छिन्नभिन्ने न दूष्यतः ।

(मालिनीतन्त्रे)

पूजयेत् परमेशानि पुष्पाभावे तु पत्रकैः ।
पत्राणामप्यलाभे तु द्रुमगुल्मोद्भवादिभिः ॥
तद्भुवामप्यलाभे तु तत्फलेन प्रपूजयेत् ।
अक्षतैर्वा जलैर्वाऽपि तदभावे तु सर्षपैः ॥
सितैस्तेषामप्यलाभे मानसं पूजनं चरेत् ।

( मेरुतन्त्रे )

अथ पुष्पोपचारान्ते कुर्यादावरणार्चनम् ।

इदं च गौडादिसंप्रदाये । अन्यत्र तु धूपदीपनैवेद्याद्यन्तं पूजनं बोध्यम् ।

( सिद्धान्तसारे )

प्रथमं मन्त्रमुच्चार्य श्रीपूर्वं पादुकापदम् ।
द्वितीयान्तं समुच्चार्य पूजयामीति पूजयेत् ॥

( सोमभुजङ्गावल्याम् )

ततश्च मूलमन्त्रेण त्रिवारं पूजयेत् सुधीः ।
गृहीत्वाऽऽज्ञां महादेव्याः परिवारान् समर्चयेत् ॥
षडङ्गैः प्रथमः कल्पो गुरुभिस्तु द्वितीयकः ।
परिवारस्तृतीयः स्याल्लोकपालैश्चतुर्थकः ॥
तदस्त्रैः पञ्चमः प्रोक्त इति सामान्यतः क्रमः ।

( यामले )

पाद्यादिना तथा पश्चात् पूजयेदङ्गदेवताः ।

( मेरुतन्त्रे )

मन्त्रसंपुटितैर्वर्णैर्मातृकायाः सबिन्दुकैः ।
क्रमेण गन्धपुष्पाद्यैर्देवस्याङ्गं समर्चयेत् ॥

तथा ।

केशरेष्वग्निकोणादौ हृदयादीनि पूजयेत् ।
नेत्रमग्रेर्दिशास्वस्त्रं ध्यातव्या अङ्गदेवताः ॥
तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः ।
वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ॥
अग्नीशासुरवायव्यमध्यदिक्षु क्रमात् स्थिताः ।

( तूर्णयागे )

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

इति पुष्पाञ्जलिं दद्यात् प्रणमेदतिभक्तितः ।
प्रत्यावरणमेवं तु तत्तन्नाम्ना समर्पयेत् ॥

( मेरुतन्त्रे )

देवस्य पुरतः प्राची ज्ञेयाऽऽवरणपूजने ।
तदादिपरिवाराणां प्रादक्षिण्येन पूजनम् ॥

( मानसोल्लासे )

पूज्यपूजकयोर्मध्ये प्राची संकीर्त्यते बुधैः ।
तद्दक्षिणं दक्षिणं स्यादुत्तरं चोत्तरं भवेत् ॥

( ज्ञानार्णवे )

उत्तराभिमुखो देवि यदा चक्रं समुद्धरेत् ।
उत्तराशा तदा देवि पूर्वाशैव न संशयः ॥
पश्चिमाभिमुखो मन्त्री यदा चक्रं समुद्धरेत् ।
पश्चिमाशा तदा ज्ञेया पूर्वाशैव न संशयः ॥
वायुकोणं तदाऽऽग्नेयमीशानं राक्षसं भवेत् ।
दक्षिणाशामुखो मन्त्री यदा चक्रं समुद्धरेत् ॥
पूर्वाशैव तदा रक्षो रक्षःकोणं तु वह्निमत् ।

पश्चिमाशाद्यभिमुखत्वं च काम्यपूजाविशेषपरम् । नित्यादिपूजायां तु 'प्रागाननो भवेदिग्वदनोऽथवे'त्यादिना दिग्द्वयस्यैव नियमात् ।

(श्यामारहस्ये) तन्त्रान्तरे च ।

होतुः पूर्वं पूर्वभागं प्रदिष्टं सव्यं भागं दक्षिणं त्वागमज्ञैः ।
दक्षं विद्यादुत्तरं भागमग्र्यं प्रज्ञावद्भिः पश्चिमं पीठमुक्तम् ॥

पूर्वमिति पुरतः । अग्र्यं स्वसंमुखं तेन देवपृष्ठमेव प्रतीचीत्यर्थः । यत् तु इन्द्रादीन् साहजिकप्राच्यादिक्रमेण पूजयन्ति केचित् तत् प्रमाणशून्यम् ।

( शारदायाम् )

पश्चादभ्यर्चनीयाः स्युः कल्पोक्तावृत्तयः क्रमात् ।
अन्ते यजेल्लोकपालान्मूलपारिषदान्वितान् ॥

हेतिजात्यधिपोपेतान् दिक्षु पूर्वादितः क्रमात् ।

इन्द्रादिलोकपालानां ध्यानानि ( मेरुतन्त्रे )

इन्द्रं सुराधिपं पीतमैरावतगतं विभुम् ।
सहस्रनेत्रं द्विभुजं पीतवज्रधरं भजे ॥
अग्निं तेजोऽधिपं रक्तं श्वेतशक्तिकरं प्रभुम् ।
सुभूषणं मेषवाहं वन्दे रक्ताङ्गलोचनम् ॥
यमं प्रेताधिपं कृष्णं महिषोपरि संस्थितम् ।
कालदण्डधरं क्रूरं वृतं दूतैर्भयानकैः ॥
रक्षोऽधिपं च निरृतिं शवासनसमाश्रितम् ।
धूम्राभं खड्गहस्तं च पिङ्गलश्मश्रुकूर्चकम् ॥
मकरे संस्थितं विद्युन्निभया सकराम्बुजम् ।
शुभ्राङ्गं तुन्दिलं वन्दे वरुणं यादसां पतिम् ॥
वायुं प्राणाधिपं धूम्रं रक्ताङ्कुशकरं परम् ।
वातप्रमीसमारूढं धावन्तं वेगतो भजे ॥
यक्षनाथं कुबेरं च शुक्लं शुक्लगदाधरम् ।
नरसिंहासनारूढं मेदुलं चित्रिणीयुतम् ॥
विद्याधिपं नीलशूलधरं वृषभवाहनम् ।
त्रिनेत्रं भालचन्द्रं च जटाजूटधरं सितम् ॥
लोकाधिपं विधातारं रक्तपद्मकरं शुभम् ।
हंसारूढं वेदपाठं कुर्वन्तं तमहं भजे ॥
गौरं नागाधिपं मूर्ध्नि फणामण्डलभूषितम् ।
पीनोत्तुङ्गं चक्रधरमनन्तं विश्वगं भजे ॥

( शारदायाम् )

वज्रं शक्तिं दण्डमसिं पाशमङ्कुशकं गदाम् ।

शूलं चक्रं पद्ममेषामायुधानि क्रमाद्विदुः ॥
पीतशुक्लसिताकाशविद्युद्रक्तसितासिताः ।
कुरुविन्दपाटलाभा वज्राद्याः परिकीर्त्तिताः ॥
(यामले)
पाणिमूले तु संलग्ने शाखाः सर्वाः प्रसारिताः ।
लोकेशानामियं मुद्रा तेषामर्चासु दर्शयेत् ॥
तन्त्रान्तरे।
गणेशं वटुकं क्षेत्रपालं च योगिनीं तथा ।
पूर्वादिक्रमयोगेन गन्धपुष्पैः समर्चयेत् ॥
( मेरुतन्त्रे )
पुनर्मूलं समुच्चार्य साङ्गायै सपरीति च ।
वारायै नाम देव्याश्च चतुर्थ्यन्तमुदीरयेत् ॥
नम इत्यर्चयेद्गन्धपुष्पाद्यैः साधकस्त्रिधा ।
तन्त्रान्तरे ।
कृत्वाऽऽवरणपूजां तु धूपदीपौ निवेदयेत् ।
धूपभेदा उक्ताः ( मेरुतन्त्रे )
धूपं दहेद्गणेशस्य प्रियः प्रोक्तस्तु गुग्गुलुः ।
सर्जं देव्या महेशस्य निर्यासो देवदारुजः ॥
विष्णोः कृष्णागुरुः शीतं भास्करस्य प्रियं मतम् ।
शक्तेर्दशाङ्गं वक्ष्यामि शैलेयं[1] मलयोद्भवम्[2] ॥
नखं[3] कुष्टं[4] सर्जरस[5]मेकैकांशं प्रकल्पयेत् ।
शिलारसा[6]गुरु[7]जटामांसी[8]भागद्वयं मतम् ॥
षड्माक्षिकं[9] सिता[10]चाष्टौ धूपोऽयं शक्तिमोहनः ।
हरीतकी[1]सर्जरस[2]मुरमांस्यः[3] कुभागिकाः[4] ॥

लाक्षा[५]त्रिभागाश्चत्वारो भागाः शैलज[६]मुस्तयोः[७] ।
पञ्चभागं नखं[८] प्रोक्तं षड्भागं कुष्ठ[९] मुच्यते ॥
द्वादशांशो गुडो[१०]ऽर्केशविघ्नविष्णुदशाङ्गकः ।
मधु[१]मुस्ता[२]घृतं[३]गन्धो[४]गुग्गुल्व[५]गुरु[६]शैलजम्[७] ॥
सरलं[८]सिल्ह[९]सिद्धार्थौ[१०] शेषदेवदशाङ्गकः ।

( तन्त्रान्तरे )

गुग्गु[१]ल्वगुरुको[२]शीर[३]शर्करा[४]मधु[५]चन्दनैः[६] ।
धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः ॥
सिता[१]ज्य[२]मधु[३]संमिश्रं गुग्गु[४]ल्वगुरु[५]चन्दनम्[६] ।
षडङ्गधूपमेतत् तु सर्वदेवप्रियं सदा ॥
रोगरोगहररोगदकेशाः सुरतरुजतुलघुपत्रविशेषाः ।
वक्त्रविवर्जितवारिदमुस्ताधूपवर्त्तिरिह सुन्दरि शस्ता ॥
गुग्गुलं[१]सरलं[२]दारु[३]पत्रं[४]मलयसंभवम्[५] ।
ह्रीवेर[६]मगुरुं[७]कुष्ठं[८]गुडं[९]सर्जरसं[१०] घनम्[११] ॥
हरीतकी[१२]नखी[१३]लाक्षा[१४]जटामांसी[१५]च शैलजम्[१६] ।
षोडशाङ्गं विदुर्धूपं दैवे पैत्रे च कर्मणि ॥
मधु[१]मुस्तं[२]घृतं[३]गन्धो[४]गुग्गु[५]ल्वगुरु[६]शैलजम्[७] ।
चन्दनं[८]सिह्ल[९]सिद्धार्थौ[१०]दशाङ्गो धूप इष्यते ॥

( यामले )

दशाङ्गधूपः श्यामायाः सुन्दर्याः षोडशाङ्गकः ।
अष्टादशाङ्गस्ताराया भैरव्याश्च गजाङ्गकः ॥
पञ्चाङ्गश्छिन्नमस्तायाः प्रियोऽन्यासां षडङ्गकम् ।
अभावे सर्वविद्यासु गुग्गुल्वगुरुचन्दनम् ॥

(मेरुतन्त्रे)

हृदाणुनाऽथवाऽस्त्रेण घण्टां संपूज्य वादयेत्।

तत्रैव।

तारो जयध्वनिपदं मन्त्रमातोऽग्निगेहिनी।
एकादशाक्षरो मन्त्रो घण्टायाः सर्वसिद्धिदः॥
आवाहनेऽर्घे धूपे च पुष्पे नैवेद्यदीपयोः।
घण्टानादं प्रकुर्वीत विशेषाद्धूपदीपयोः॥
पूजाकालं विनाऽन्यत्र कुर्यादस्याः प्रवादनम्।
नानया च विना पूजां कारयेत् सिद्धिलालसः॥

राघवभट्टाः।

धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य हृदाऽणुना।
अस्त्रेण पूजितां घण्टां वादयन् गुग्गुलं दहेत्॥

धूपपदार्थ उक्तः (कुलार्णवे)

धूताशेषमहादोषपूतिगन्धप्रहारितः।
परमामोदजननाद्धूप इत्यभिधीयते॥

दीपभेदा उक्ताः (कुलोड्डीशे)

घृतप्रदीपः[1] प्रथमस्तिलतैलसमुद्भवः[2]।
सार्षपः[3]फलनिर्यासजातो[4]वा वारिजोद्भवः[5]॥
दधिज[6]श्चान्नज[7]श्चैव दीपाः सप्त प्रकीर्त्तिताः।
पद्मसूत्रभवा[1] वर्त्तिर्दर्भसूत्रभवा[2]ऽथवा॥
जलजा[3] वादरी[4]वाऽपि तूलकोषोद्भवा[5]ऽथवा।
वर्त्तिका दीपकृत्येषु सदा पञ्चविधा स्मृता॥

(यामले)

वर्त्तिः श्वेताऽथवा रक्ता न पीता नासिताऽपि च।
बीजशून्यं च कार्पासं तदीयास्तन्तवोऽपि च॥

पटो वा नूतनः शुक्लो वर्त्तिकायां प्रशस्यते ।
जीर्णं च मलिनं वस्त्रं नैव दद्यात् कदा चन ॥
( मेरौ )
तैजसं राजसं लौहं मार्त्तिक्यं नारिकेलजम् ।
तृणराजोद्भवं वाऽपि दीपपात्रं प्रशस्यते ॥
एवं दीपं प्रकुर्वीत नेत्ररञ्जनकारणम् ।
( यामले )
निवेदयेत् पुरो भागे गन्धं पुष्पं च भूषणम् ।
वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे ॥
( मेरुतन्त्रे )
न धूपं वितरेद्भूमौ नासने न घटे तथा ।
यथातथाधारगतं कृत्वा तं विनिवेदयेत् ॥
मेदो मज्जायुतो नेष्टो विष्णवे दारुसंभवः ।
( यामले )
दीपं दक्षिणतो दद्यात् पुरतो वा न वामतः ।
तथा ।
दक्षिणे घृतयुक्तश्च तैलयुक्तश्च वामतः ।
दक्षिणे च सिता वर्त्तिर्वामतो रक्तवर्त्तिकः ॥
( मेरुतन्त्रे )
पूजयित्वा स्वमन्त्रेण घण्टां तन्नादपूर्वकम् ।
दीपं दद्यात् तु विभवे नानावाद्यपुरस्सरम् ॥
तत्रैव ।
गोसर्पिषा वा तैलेन वर्त्त्या कर्पूरगर्भया ।
उच्चैः प्रदर्शयेद्दीपं न च मेदादिना क्वचित् ॥
न मिश्रीकृत्य दद्यात् तु दीपं स्नेहान् घृतादिकान् ।
कृत्वा मिश्रीकृतं स्नेहं तामिस्रं नरकं व्रजेत् ॥

पारावतभ्रमाकारं भ्रामयेच्च प्रदर्शयेत् ।
देवस्य सर्वावयवान् श्लोकमेवं ततः पठेत् ॥
सुप्रकाशो महादीप्तः सर्वत्र तिमिरापहः ।
सबाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥
दक्षिणे सार्षपं दीपं तिलतैलस्य वामतः ।
सिता वर्त्तिर्दक्षिणतो रक्ता वर्त्तिस्तु वामतः ॥
वृक्षेषु दीपो दातव्यो न तु भूमौ कदा चन ।
कृत्वा तु पृथिवीतापं दीपमुत्सृजते नरः ॥
सतापपापं नरकं प्राप्नोत्येव शतं समाः ।
नैव निर्वापयेद्दीपं लक्ष्मीनाशकरो यतः ॥

(कालिकापुराणे)

लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलात् ।
न स दीप इति ख्यातो ह्योघवह्निस्तु स श्रुतः ॥
शाणं वा दौरं वस्त्रं जीर्णं मलिनमेव वा ।
उपभुक्तं न दद्यात् तु वर्त्तिकार्थं कदा चन ॥
नैव निर्वापयेद्दीपं देवार्थमुपकल्पितम् ।
दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत् ॥
सर्वंसहा वसुमती सहते न त्विदं त्विदम् ।
अकार्ये पादघातं च दीपतापं तथैव च ॥

तन्त्रान्तरे ।

अङ्गुष्ठाग्रेण देवेशि धृत्वा दीपं निवेदयेत् ।
पारावतभ्रमाकारमुद्भ्राम्य नयनावधि ॥

दीपपदार्थ उक्तः ।

(कुलार्णवे)

दीर्घाज्ञानमहाध्वान्ताहंकारपरिवर्जनात् ।

परतत्त्वप्रकाशाच्च दीप इत्यभिधीयते ॥

( यामले )

नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः ।
पक्वं च देवतावामे आमान्नं देवदक्षिणे ॥
पक्वापक्वविभेदेन नैवेद्येष्वपि च स्थितिः ।
पुरतो नियमो नास्ति दीपनैवेद्ययोः क्व चित् ॥

( रुद्रयामल- ) वचनानि ।

तैजसेषु च पात्रेषु सौवर्णे राजते तथा ।
ताम्रे वा प्रस्तरे वाऽपि पद्मपत्रेऽथ वा पुनः ॥
यज्ञदारुमये वाऽपि नैवेद्यं कल्पयेद्बुधः ।
सर्वाभावे तु माहेयं स्वहस्तघटितं यदि ॥

( सारसंग्रह- ) वचने तु ।

निधाय स्वर्णजे पात्रे साधारं तच्च मण्डले ।
निधाय चतुरस्रे च संस्कुर्याच्छास्त्रमार्गतः ॥
अस्त्रमन्त्रेण संप्रोक्ष्य चक्रमुद्राभिरक्षितम् ।
वायुबीजेन संशोध्य वह्निबीजेन तद्दहेत् ॥
स्पृशन् दक्षकराग्रेण सुधाबीजेन मन्त्रयेत् ।
धेनुमुद्रां प्रदर्श्याथ गन्धपुष्पैः समर्चयेत् ॥

( मेरुतन्त्रे )

देवमभ्यर्च्य कुर्याच्च पुष्पाञ्जलिमनन्यधीः ।
हेमपात्रस्थितं दिव्यं परमान्नं सुसंस्कृतम् ॥
पञ्चधा षड्रसोपेतं गृहाण मम सिद्धये ।
मूलमन्त्रं समुच्चार्य स्वाहान्तं जलमर्पयेत् ॥
कराभ्यां संस्पृशन् पात्रं नैवेद्यान्ते नमो वदेत् ।
देवस्य दक्षिणे हस्ते जलं दत्त्वा पठेदिदम् ॥

अमृतोपस्तरणमसि स्वाहा इति नवाक्षरम्।
दर्शयेद्वामहस्तेन विकचोत्पलसंनिभाम्॥
दर्शयित्वा ग्रासमुद्रां पञ्चप्राणाहुतिं चरेत्।

प्राणादिमुद्रास्तत्रैवोक्ताः।

कनिष्ठानामिकाङ्गुष्ठयोगः प्राणस्य मुद्रिका।
तया ग्रासं गृहीत्वा प्राणाय स्वाहेति संवदेत्॥
तर्जनीमध्यमाङ्गुष्ठयोगेनापानकं वदेत्।
ङेन्तं स्वाहान्तमथ च व्यानाय च ततो वदेत्॥
स्वाहाऽथ मध्यमानामाङ्गुष्ठयोगेन निर्वपेत्।
हित्वा कनिष्ठां सर्वाभिरुदानायाग्निगेहिनीम्॥
सर्वाभिस्तु समानाय स्वाहोक्त्वा ग्रासमावपेत्।

तन्त्रान्तरे।

स्पृशेत् कनिष्ठोपकनिष्ठिके द्वे
स्वाङ्गुष्ठमूर्ध्ना प्रथमेह मुद्रा।
तथाऽपरा तर्जनिमध्यमे स्या-
दनामिकामध्यमिके च मध्या॥
अनामिकातर्जनिमध्यमाश्च
तद्वच्चतुर्थी सकनिष्ठकास्ताः।
स्यात् पञ्चमी मध्यमतः प्रदिष्टाः
प्राणादिमुद्रा निजमन्त्रयुक्ताः॥

(मेरुतन्त्रे)

ततः स्वर्णादिजे पात्रे सुतोयं धेनुमुद्रया।
अमृतीकृत्य देवाय देयं मन्त्रमिदं पठेत्॥
नमस्ते देवदेवेश सर्वतृप्तिकरं परम्।

अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् ॥
परमानन्दसंपूर्णं गृहाण जलमुत्तमम् ।
उक्त्वैवं देवतावामे जलपात्रं निवेशयेत् ॥
त्रिभिर्वर्णैः प्रदातव्यं देवार्थं पाकभोजनम् ।
घृतपक्कं दुग्धसिद्धं साधितं केवलाग्निना ॥
युक्तं वैल्वपङ्केन तच्छूद्रस्य प्रशस्यते ।
ततः पुष्पाञ्जलिं दद्यादस्त्रमन्त्रेण बन्धनम् ॥
दिशां कृत्वा जवनिकां देवस्य परितो न्यसेत् ।
अमृतात्मकनैवेद्यं नम इत्युच्चरेत् पुनः ॥
धेनुमुद्रां प्रदर्श्याथ भुञ्जानां देवतां स्मरेत् ।
अष्टोत्तरशतं जप्त्वा मूलमन्त्रं ददेज्जलम् ॥
नैवेद्यान्ते स्वाचमनं दत्वा होमविधिं चरेत् ।

तत्रैव ।

विधाय पूजामेवं हि धूपदीपनिवेद्यकैः ।

तथा ।

वेदिकाया दक्षभागे कृत्वा स्थण्डिलमुत्तमम् ।
संस्थाप्य वह्निं संस्कृत्य वैश्वदेवं समारभेत् ॥
यथाविधि ततस्तत्र गन्धाद्यैर्देवतां यजेत् ।
तत्र प्रणवपूर्वाभिर्हुत्वा व्याहृतिभिः पुरा ॥
जुहुयान्मूलमन्त्रेण पायसेन घृतेन च ।
पञ्चविंशतिभिः पश्चाद्धुत्वा व्याहृतिभिः पुनः ॥
संपूज्य तां चन्दनाद्यैः पीठमूर्त्तौ नियोजयेत् ।
अग्निं विसृज्य सृष्टेन पायसेन वलिं हरेत् ॥
पार्षदेभ्यश्चन्दनादिपुष्पाक्षतसमान्वितम् ।

अत्र वैश्वदेवो नित्यहोम एव ।
( सिद्धान्तसारे )

समाप्य वैश्वदेवं तु भूतेभ्यो वलिमाहरेत् ।
शाक्ते तु बलिदानान्ते दद्याद्भूतवलिं सुधीः ॥

यत्र वैष्णवादिकल्पे वक्ष्यमाणवलिदानविधिर्नास्ति तत्रास्मिन्नेव समये भूतवलिर्देय इत्यर्थः ।
( मेरुतन्त्रे )

देवं तृप्तमिति ध्यात्वा नैवेद्यं गतसारकम् ।
संचिन्त्य रक्षोदिग्भागे पात्रं तत् स्थापयेत् ततः ॥
गोमयाद्भिस्तदस्त्रेण नैवेद्यस्थानशोधनम् ।
देवोच्छिष्टं गृहीत्वा तु निर्माल्यभोजिने नमः ॥
इत्यैशान्यां विनिःक्षिप्य हस्तं प्रक्षालयेत् ततः ।
पुनराचमनं दद्यात् करोद्वर्त्तनमेव च ॥
शुद्धमाचमनं दत्वा सुगन्धैर्गन्धयेत् करौ ।
( गौतमीये )

क्षणं विमृष्य मतिमान् दद्याद्गण्डूषकं ततः ।
अमृतापिधानमसि स्वाहेति मनुनाऽमुना ॥
( यामले )

सर्वोपकरणादीनि मूलान्ते च निवेदयेत् ।
अशक्तो मनसा दद्यादेतत् कर्म न लोपयेत् ॥

द्वितीयविद्याविषये तु विशेष उक्तो ( नीलतन्त्रे )

सर्वं मन्त्रमयं कृत्वा देवतायै निवेदयेत ।
श्रीमदेकजटे वज्रपुष्पं प्रतीच्छ चोच्चरेत ॥
मूलेनाग्निप्रियान्तेन सतारेण च साधकः ।

तारः प्रणवस्तस्य चान्वय आदावेव संप्रदायसिद्धः । अयं च मन्त्रः सर्वासामपि तारादिदेवतानां पूजायामविरुद्ध एवेति सुधार्णवकृतः ।

श्रीविद्याविषये तु ( मानसोल्लासे )

सम्बुद्ध्या प्रवदेन्मन्त्री उपचारान् सदैव तु ।

तथा ।

सर्वोपचारमन्त्राश्च त्रितारायाः समीरिताः—इत्युक्तम् ।

तारत्रयं च श्रीं ह्रीं क्लीं इति । ( यामले )
( ज्ञानार्णवे ) "वाग्मायाकमले चे"त्युक्तम् ।

पुनश्च चुल्लुकं दद्याद्दत्वा ताम्बूलमुत्तमम् ।
एलालवङ्गकर्पूरजातीफलादिसंयुतम् ॥
तमालदलकर्पूरपूगभागैस्तरङ्गितम् ।

( मेरुतन्त्रे )

ततो दद्याच्च ताम्बूलं विष्णवे द्वादशाङ्गकम् ।
खदि[१]रैला[२]लवङ्गे[३]न्दु[४]चूर्ण[५]पर्ण[६]तमालकम्[७] ॥
जातीकोशदलात्वग्भिः[८] कस्तूरी[९]केशरै[१०]र्युतम् ।
पूगीफल[११]मथ प्रोक्तं दशाङ्गं भास्करस्य तु ॥
मृगनाभितमालाभ्यां हीनं विघ्नेश्वरस्य तु ।
पञ्चाङ्गं चूर्ण[१]खदिर[२]पर्ण[३]पूगीफले[४]न्दुकम्[५] ॥
शैलं देव्या जातिकोशयुतं तच्च महेशितुः ।

तत्रैव ।

दर्शयेच्च तथाऽऽदर्शं कल्पयेच्छत्रचामरैः ।

अथोपचारमुद्राः ।

आसने पद्ममुद्रा स्याद्धस्तद्वयमधोमुखम् ।
मुद्रैषा कुशलप्रश्ने तदेवोर्ध्वमुखं पुनः ॥
मुद्रा स्यात् स्वागते चार्घ्यमुद्रा त्वञ्जलिरुच्यते ।
अनामाङ्गुष्ठयोगाच्च सैवोक्ता पाद्यमुद्रिका ॥
उत्तानं दक्षहस्तं तु कृत्वा निम्नतलं सुधीः ।

कनिष्ठहीनाः संयुक्ताश्चतस्रोऽङ्गुल्य उन्नताः ॥
मुद्रैषाऽऽचमने प्रोक्ताऽधोमुखी च त्वनामया ।
स्पृष्टाङ्गुष्ठा भवेन्मुद्रा मधुपर्के वरानने ॥
अधोमुखी दक्षहस्तकृता मुष्टिः कनिष्ठया ।
विमुक्ता स्नानमुद्रैषा गदिता परमेश्वरि ॥
उत्तानं दक्षिणं हस्तं कृत्वा तन्मध्यमां पुनः ।
अङ्गुष्ठेन स्पृशेदेषा मुद्रा वस्त्रस्य कीर्त्तिता ॥
एषैवानामिकास्पर्शान्मुद्रा भूषणसंज्ञिता ।
कनिष्ठास्पर्शतो ह्येषा उपवीतस्य मुद्रिका ॥
ज्येष्ठाग्रेण कनिष्ठाग्रं स्पृशेद्गन्धस्य मुद्रिका ।

तन्त्रान्तरे ।

मध्यमानामिकाङ्गुष्ठैरङ्गुल्यग्रेण पार्वति ।
दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः ॥
अङ्गुष्ठतर्जनीभ्यां तु यन्त्रे पुष्पं निवेदयेत् ।
अधोमुखं करं कृत्वा तर्जन्यग्रे तु योजयेत् ॥
अङ्गुष्ठाग्रं तु मुद्रेयं पुष्पाख्या परमेश्वरि ।
यथा गन्धं तथा देवि धूपं दद्याद्विचक्षणः ॥
मध्यमानामिकाभ्यां तु मध्ये पर्वणि देशिकः ।
अङ्गुष्ठाग्रेण देवेशि धृत्वा दीपं * निवेदयेत् ॥

तथा ।

अङ्गुष्ठाग्रेण तर्जन्याः स्पृशेदग्रं महेश्वरि ।

---

ज्येष्ठाग्रेण स्पृशेदग्रं मध्यमायाः सुरार्चिते ।
दीपमुद्रेयमुदिता सर्वदेवप्रिया शुभा ॥
* इति २ पु० उपलभ्यते ।

धूपमुद्रेयमाख्याता सर्वदेवप्रियङ्करी ॥
अनामाग्रं स्पृशेद्देवि ज्येष्ठाग्रेण तु देशिकः
नैवेद्यमुद्रा कथिता देवतातृप्तिकारिणी ॥

अन्यत्र ।

उत्तोलनं त्रिधा कृत्वा गायत्र्या मूलयोगतः ।
तत्त्वाख्यमुद्रया देवि नैवेद्यं तु निवेदयेत् ॥
मूलेनाचमनं दद्यात् ताम्बूलं तत्त्वमुद्रया ।

( सिद्धान्तसारे )

मूलमन्त्रेण संपूज्य स्वस्वकल्पोक्तमन्त्रतः ।
देवतायै वलिं दत्वा विघ्नादिभ्यो वलिं हरेत् ॥

( ज्ञानार्णवे )

ईशानवह्निनैर्ऋत्यवायुकोणेषु पूर्ववत् ।
मण्डलानि विधायाथ पूर्ववत् पूजयेत् प्रिये ॥
पूर्ववद्वलिदानं च दद्यात् सर्वसमृद्धये ।
वटुकानि महेशानि योगिनीभ्यश्च वल्लभे ॥
गणेशक्षेत्रपालाभ्यां पूर्ववद्वलिमुत्सृजेत् ।

( समयाचारे )

दक्षिणे वटुकं दद्यादुत्तरे योगिनीगणे ।
पूर्वे भूतवलिं दद्यात् क्षेत्रपालाय पश्चिमे ॥

तथा ।

अङ्गुष्ठनामिकाभ्यां तु वटुकाय वलिर्मतः ।
कनिष्ठाङ्गुष्ठयोगेन योगिनीवलिमाहरेत् ॥
अङ्गुष्ठतर्जनीभ्यां तु क्षेत्रपालवलिं हरेत् ।
अङ्गुलीभिश्च सर्वाभिरुक्तो भूतवलिः प्रिये ॥
तथ्यमुष्टेस्तु मध्यस्थामङ्गुलिं दण्डवत् कुरु ।

गजदन्तमहामुद्रा गणपस्य वलौ भवेत् ॥
अङ्गुलीभिश्च सर्वाभिरुक्तो भूतवलिः प्रिये* ।

बलिद्रव्याण्युक्तानि (महाकालसंहितायाम्)
तत्रादौ दक्षिणाचारे।

माषभक्तं तथा लाजा धानाः शक्तव एव वा ।
पृथुकास्तण्डुला वाऽपि स्विन्ना व्रीहय एव वा ॥
आमिक्षा वा यवागूर्वा कृशरं पायसं तथा ।
आज्याभिषिक्तं दधि वा पक्वान्नानि फलानि वा ॥

वामाचारे।

दग्धमीनो भर्जितं वा तेमनीकृतमेव वा ।
मदिरा वा प्रदातव्या वलित्वेन वरानने ॥
सर्वसाधारणत्वेन वलिर्नैष प्रकीर्त्यते ।
अधिकारिविशेषेण दातुं शक्यो वलिस्त्वयम् ॥

वलिदानमन्त्रास्तु (ज्ञानार्णवे)

एह्येहि देवीपुत्रान्ते वटुकान्ते च नाथ च ।
कपिलान्ते जटाभार भासुरान्ते त्रिनेत्र च ॥
ज्वालामुखं च सर्वान्ते विघ्नान् नाशय नाशय ।
सर्वोपचारसहितं वलिं गृह्ण द्विधा पदम् ॥
वह्निजायान्वितो मन्त्रो वटुकस्य समीरितः ।
अनेन मनुना देवि वटुकस्य वलिं हरेत् ॥

(भैरी)

योगिनीनां वलेर्मन्त्रं साधनान्ते पठेदिमम् ।

---

* एतत् पद्यार्धम् ३ पुस्तके उपलभ्यते ।

याँ योगिनीभ्यः स्वाहेति *कङ्कार्णां स्रग्धरान्वितम् ॥
ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले
पाताले वाऽनले वा सलिलपवनयोर्यत्र तत्र स्थिता वा।
क्षेत्रे पाठोपीठादिषु च कृतपदाः पुष्पधूपादिकेन
प्रीता देव्यः सदा नः †शुभवलिविधिना पान्तु वीरेन्द्रवन्द्याः

( ज्ञानार्णवे ) तूक्तश्लोकमुक्त्वा—

एतदन्ते महेशानि याँ बीजं योगिनी ततः।
भ्यः स्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ॥
कवचं चास्त्रमालिख्य वह्निजायां पुनर्लिखेत्।
अनेन मनुना देवि योगिनीवलिमाहरेत्—इत्युक्तम् ॥

तथा।

षड्दीर्घस्वरसंभिन्नं क्षकारं पुनरालिखेत्।
पुनः क्षेत्रपदं पालधूपदीपादि चालिखेत् ॥
सहितं वलिमालिख्य गृह्ण गृह्ण ततो वदेत्।
वह्निजायान्वितो मन्त्रः क्षेत्रपालस्य सुन्दरि ॥
अनेन मनुना देवि क्षेत्रपाल वलिं हरेत्।
गाँ गीँ गूँ त्रयमालिख्य ङेन्तं गणपतिं वदेत् ॥
वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत्।
मे वशं चानयेत्युक्त्वा वलिं गृह्ण द्विधा पदम् ॥
वह्निजायान्वितो मन्त्रो गणपस्यवलिं हरेत्।

सिद्धान्तसारोद्धृतसामान्यपद्धतौ तु पूर्वादिप्रादक्षिण्येन गणेशादिभ्यो वलिप्रदानमुक्तम्।

---

* कुरेकः। अङ्का नव। "अङ्कानां वामतो गति"रित्यतः कङ्का एकनवतिरर्णा वर्णा यस्मिन्निति। एतेन "याँ योगिनीभ्यः स्वाहा" इति सप्त वर्णाः ७ ऊर्ध्वमित्यादिस्रग्धरायाश्चतुश्चरणेषु चतुरशीति–८४ वर्णाः। एषामेकत्र संमिलनेनैकनवतिवर्णघटितमन्त्रो जायत इति।

† शुभविधिवलिनेति २ पु० पा०।

गणेशवटुकक्षेत्रपालेभ्यो वलिमाहरेत् ।
योगिनीभ्यश्च पूर्वादिप्रादक्षिण्येन देशिकः—इति ॥
महाकालेनापि गणेशादिक्रम उक्तः ।
गणाधिपतये पश्चाद्वटुकाय निवेदयेत्—इत्यादि ।
वस्तुतो दक्षिणमार्गे गणेशादिक्रमो वाममार्गे वटुकादिक्रमः ।
अवश्यमादौ वामादौ कुर्याद्वटुकपूजनम् ।
मार्गेऽस्मिन् वटुको मुख्यः सुराद्यं तेन निर्मितम् ॥
इति वाममार्गप्रकरणीय-( मेरुतन्त्र-) वचनात् ।
अथ भूतवलिः ( मेरुतन्त्रे )

उपविश्यासने मन्त्री दद्याद्भूतवलिं ततः ।
ईशाने मण्डलं कृत्वा साधरं तत्र निःक्षिपेत् ॥
अन्नं व्यञ्जनतोयाढ्यं पात्रं पुष्पादिपूरितम् ।
तत्र भूतानि संपूज्य ततस्तेभ्यो वलिं हरेत् ॥
ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ।
योगिन्योऽप्युग्ररूपाश्च गणानामधिपाश्च ये ॥
भूचराः खेचराश्चैव ये तिष्ठन्त्यन्तरिक्षगाः ।
सर्वे ते प्रीतमनसो भूता गृह्णन्त्विमं वलिम् ॥
वामहस्तेन तत्पात्रे जलाधारं समर्पयेत् ।
पुष्पाञ्जलिं समादाय भूतानि प्रार्थयेदिति ॥
भूतानि यानीह वसन्ति भूतले
वलिं गृहीत्वा विधिवत्प्रयुक्ताम् ।
सन्तोषमासाद्य व्रजन्तु सर्वे
क्षमन्तु तान्यत्र नमोऽस्तु तेभ्यः ॥
दत्वा पुष्पाञ्जलिं नत्वा विहरन्तु यथासुखम् ।
भूतानीति च नाराचमुद्रया विसृजेत् ततः ॥

( शारदायाम् )

सहस्रावृत्त्या संजप्य मूलमन्त्रमनन्यधीः ।
तं जपं सर्वसंपत्त्यै देवतायै समर्पयेत् ॥

( मेरुतन्त्रे )

अष्टोत्तरसहस्रं तु तदर्धं त्रिशतं तु वा ।
अष्टोत्तरशतं वाऽपि जपेन्मूलमतन्द्रितः ॥
समाप्ते तु जपे मालां निदध्यान्मस्तकोपरि ।
अर्घपात्राज्जलं हस्ते गृहीत्वेदं पठेत् ततः ॥
गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादाज्जगत्पते ॥
देवस्य दक्षिणे हस्ते तोयं दत्वा समर्पयेत् ।

तथा ।

ततस्तु गीतस्तुतिभिर्घण्टावादनपूर्वकम् ।
ब्राह्मणो वेदमन्त्राद्यैः क्षत्रियः संहितादिभिः ॥
पौराणिकाद्यैर्वैश्यस्तु शूद्रस्तु प्राकृतादिभिः ।

( यामले )

ततश्च देवतां भक्त्या परिक्रम्य नमेद्बुधः ।

परिक्रम्येति प्रदक्षिणीकृत्य ।
प्रदक्षिणफलमुक्तं तन्त्रान्तरे ।

वेदविद्भ्यो धरां दत्वा यत् फलं लभते नरः ।
तत् फलं लभते भक्त्या कृष्णां कृत्वा प्रदक्षिणाम् ॥

कृष्णमित्युपलक्षणम् ।
प्रदक्षिणभेदा उक्ता ( यामले )

त्रिकोणाकारकं देवि शक्तेः कुर्यात् प्रदक्षिणम् ।
अर्धचन्द्रं महेशस्य पृष्ठतश्च समीरितम् ॥

शिवप्रदक्षिणे मन्त्री अर्धचन्द्रक्रमेण च ।
सव्यासव्यक्रमेणैव सोमसूत्रं न लङ्घयेत् ॥
प्रसार्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः ।
दर्शयेद्दक्षिणं पार्श्वं मनसाऽपि च दक्षिणः ॥
त्रिधा च वेष्टयेत् सम्यग्देवतायाः प्रदक्षिणे ।
एकहस्तप्रणामो वा एकं वाऽपि प्रदक्षिणम् ॥
अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम् ।

तन्त्रान्तरे ।

एकं चण्ड्यां रवौ सप्त त्रीणि दद्याद्विनायके ।
चत्वारि केशवे दद्याच्छिवस्यार्धं प्रदक्षिणम् ॥

प्रणामभेदास्तु विष्णुकल्पलतायामुक्ताः ।

पद्भ्यां[१] कराभ्यां[२] जानुभ्या[३] मुरसा[४] शिरसा[५] दृशा[६] ।
वचसा[७] मनसा[८] चेति प्रणामोऽष्टाङ्ग ईरितः ॥
बाहुभ्यां[१] च सजानुभ्यां[२] शिरसा[३] वचसा[४] दृशा[५] ।
पञ्चाङ्गोऽयं प्रणामः स्यात् पुजासु प्रवराविमौ ॥

तथा ।

भूमौ निपत्य यः कुर्यात् कृष्णे दृष्टे नतिं सुधीः ।
सहस्रजन्मजं पापं त्यक्त्वा वैकुण्ठमाप्नुयात् ॥

(विष्णुधर्मे )

जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः ।
कृत्वा प्रणामान् देवस्य सर्वान् कामानवाप्नुयात् ॥
परमाणूनि यावन्ति ललाटे पुरुषस्य तु ।
पार्थिवानि भवन्तीह नमतो मधुसूदनम् ॥
तावतोऽब्दाँस्तु विप्रेन्द्र स्वर्गलोके महीयते ।

( शारदायाम् )

ततः शम्भोर्दिशि गुरुर्विकिरे* पूर्वसंचिते ।
हेमवस्त्रादिसंयुक्तां कर्करीं तोयपूरिताम् ॥
संस्थाप्य तस्यां सिंहस्थां खड्गखेटकधारिणीम् ।
घोररूपां पश्चिमास्यां पूजयेदस्त्रदेवताम् ॥
चलासनेन संपूज्य तामादाय गुरुः पुनः ।
रक्षेति लोकपालानां नालमुक्तेन वारिणा ॥
देवाज्ञां श्रावयन्नन्तः परिवृत्य प्रदक्षिणम् ।
अस्त्रमन्त्रं समुच्चार्य यथापूर्वं निवेशयेत् ॥
अभ्यर्च्य भूयो गन्धाद्यैर्वक्तुं तस्य स्थिरासनः ।

कर्करी वर्द्धनी सा च सनाला घटी ।

( क्रियासंग्रहे )

यथास्थानं निवेश्याथ कर्करीमस्त्ररूपिणीम् ।
आचार्य आत्मनः कुण्डे वह्निसंस्कारमाचरेत् ॥

बिभ्रत्यद्भुतभूतिभूतपवचोवैचित्र्यचित्रामृत-
स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
सद्युक्तिस्फुटमौक्तिकोत्करचमत्कारे तृतीयस्तर-
ङ्गोऽयं श्रीनरदेवनिर्मितपुरश्चर्यार्णवेऽस्मिन्नगात् ॥

इति श्रीमन्महाराजाधिराजश्रीप्रतापसिंहविरचिते पुरश्चर्यार्णवे दीक्षाविधौ गुरुवरणादिपूर्वकदेवतार्चनविधानं नाम तृतीयस्तरङ्गः ॥ ३ ॥

---

* विघ्नोपशान्तये उत्क्षिप्तश्वेतसर्षपाद्राविति ।

अथाग्निसंस्कारविधिः प्रदर्श्यते ।

तत्र प्रथमं कुण्डसंस्कार उक्तो ( मेरुतन्त्रे )

वह्नेस्तु स्थापनं कुर्याद्वैदिकः कल्पमार्गतः ।
तान्त्रिकः कुण्डसंस्कारानष्टादश समाचरेत् ॥
मूलमन्त्रेण संपश्येत् प्रोक्षयेदस्त्रमन्त्रतः ।
कुशैः संताडयेत् कुण्डमस्त्रमन्त्रं पठँस्त्रिधा ॥
ततः कवचमन्त्रेण कुण्डस्याभ्युक्षणं मतम् ।
अस्त्रमन्त्रेण खननं कुण्डस्याङ्गुलमानतः ॥
अङ्गुष्ठानामिकाभ्यां तां मृदमस्त्रेण चोद्धरेत् ।
पुनः शुद्धमृदा तं च पूरयेद्धृदयाणुना ॥
समीकुर्यात् ततोऽस्त्रेण सेचयेत् कवचेन च ।
काष्ठादिना कुट्टयेत् तमस्त्रेण स्याद्यथा दृढम् ॥
कुशैः संमार्जयते कुण्डं ततश्च कवचाणुना ।
विलेपनं गोमयाद्भिः कवचेनैव कारयेत् ॥
कवचेनाग्निसूर्येन्दुकलाः कुण्डे विचिन्तयेत् ।
त्रिसूत्रीकृतसूत्रेण वेष्टयेत् प्रतिमेखलम् ॥
त्रिवारं वर्ममन्त्रेण कुण्डपूजां ततश्चरेत् ।
तारश्चामुककुण्डाय आसनं च नमो* इति ॥
एषोऽर्घ इत्याद्यूहैश्च सकलं पूजनं चरेत् ।
नाभेश्च मेखलानां च कुर्यादेवं प्रपूजनम् ॥
संचिन्तयेत् ततोऽस्त्रेण तत् कुण्डं वज्रवद्दृढम् ।

( शारदायाम् )

अस्त्रेण वज्रीकरणं हृन्मन्त्रेण कुशैः शुभैः ।

---

* तान्त्रिकप्रयोगोऽयम् ।

चतुष्पथं तनुत्रेण तनुयादक्षपाटनम् ॥
यागे कुण्डानि संस्कुर्यात् संस्कारैरेभिरीरितैः ।
अथ वा तानि संस्कुर्याच्चतुर्भिर्वीक्षणादिभिः ॥
( अक्षपाठनं तु )
अच्छिन्नाग्रैस्ततो दर्भैरस्त्रमन्त्राभिमन्त्रितैः ।
कुण्डभित्तिगणं सर्वं वर्मणा परिभूषयेत् ॥
इत्येवमक्षपाटाख्यं कुण्डसंस्कार ईरितः ।
इति नारदपञ्चरात्रे प्रोक्तम् ।
( मेरुतन्त्रे )
वामहोमे तु संस्कारा आद्याश्चत्वार एव हि ।
(नारदपञ्चरात्रे)
कुण्डस्यारम्भकाले तु संस्कारा न कृता यदि ।
निष्पन्नस्य च ते सर्वे विधेयाः स्युः क्रमेण वै ॥
एते संस्काराः कुण्डनिर्माणकाले यदि न कृतास्तदा सिद्धे तस्मिन्नवश्यमाचरणीया इत्यर्थः ।
( शारदायाम् )
तिस्रस्तिस्रो लिखेल्लेखा हृदा प्रागुदगग्रगाः ।
अत्र लिखनक्रमः (सौत्रामणीतन्त्रे)
प्राचीमुदङ्मूर्धसंस्थं दक्षिणारम्भमालिखेत् ।
उदगग्रं पुरःसंस्थं पश्चिमारम्भमालिखेत् ॥
तिस्रस्तिस्रो लिखित्वैवं प्रोक्षयेद्वाग्भवेन च ।
(शारदायाम्)
प्रागग्राणां स्मृता देवा मुकुन्देशपुरन्दराः ।
रेखाणामुदगग्राणां ब्रह्मवैवस्वतेन्दवः ॥
( यामले )
मूलेन विलिखेदेता दर्भस्यैव स्रुवस्य वा ।
( मेरुतन्त्रे )
त्रिकोणोपरि षट्कोणं त्रिकोणद्वितयस्य तु ।

विष्ण्वीशवासवादीनां षण्णां तत्र प्रपूजनम् ॥

( शारदायामलयोस्तु )

अथ वा षट्कोणावृत्तं त्रिकोणं तत्र संलिखेत् ।

षट्कोणेनावृतं देवि त्रिकोणं वा समालिखेत्—इति ॥

त्रिकोणषट्कोणादिलिखनं पक्षान्तराभिप्रायेणोक्तम् ।

( शारदायाम् )

सर्वाण्यभ्युक्ष्य तारेण योगपीठमथार्चयेत् ।

(मेरुतन्त्रे)।

स्वाग्रादिप्रादक्षिण्येन तत्पद्मकेशरेषु च ।

मध्यान्तं पूजयेदेतान् जयां च विजयां तथा ॥

अजिताख्यां चापराजितां नित्यां च विलासिनीम् ।

दोग्ध्रीमघोरां च तथा मङ्गलामथ तत्र तु ॥

ह्रीँ सर्वशक्तिकमलासनाय नम उच्चरन् ।

दत्वा पुष्पाञ्जलिं कुण्डे पूजयेद्भुवनेश्वरीम् ॥

तन्त्रान्तरे।

वागीश्वरीश्वरयोर्योगपीठात्मने नमः ।

ह्रीमाद्यः पीठमन्त्रोऽयमावाह्यास्मिन् प्रपूजयेत् ॥

(मेरुतन्त्रे) पूजयेद्भुवनेश्वरीमित्यधिकृत्य ।

कामोन्मत्तं शिवं तत्र देवीमृतुमतीं तथा ।

गणेशशैवशाक्तेषु ध्यायन् संपूजयेदिति ॥

( शारदायाम् )

वागीश्वरीमृतुस्नातां नीलेन्दीवरसंनिभाम् ।

वागीश्वरेण संयुक्तामुपचारैः प्रपूजयेत् ॥

भुवनेश्वरीवागीश्वयोर्विकल्पो ( गणेशविमर्षिण्याम् )

शक्तिबीजेन वागीशीं वागीशं साध्यमन्त्रतः ।

पूजयेदिति शेषः ।

(रुद्रयामले ) तु

ततः शिवाय शक्त्यै च नमोन्तौ कथितौ मनू ।
आभ्यां त्रिस्त्रिश्च संपूज्य प्रणमेन्मनुनाऽमुना ॥
वागीश्वरीमृतुस्नातां समस्ताभरणान्विताम् ।
वागीश्वरेण संयुक्तां नमाम्यखिलसिद्धये—इत्युक्तम् ।

वैष्णवे तु वागीश्वरीवागीश्वरयोः स्थाने लक्ष्मीनारायणौ पूज्यौ । तदुक्तम् तत्त्वसारसंहितायाम् )

लक्ष्मीमृतुमतीं तत्र प्रभोर्नारायणस्य च ।
ग्राम्यधर्मेण संयुक्तमग्निं तत्र विचिन्तयेत् ॥

एवं सौरेऽपि । तदुक्तम् ( मेरुतन्त्रे )

वैष्णवे च तथा सौरे लक्ष्मीमृतुमतीं स्मरेत् ।
नारायणस्य संयोगाज्जातमग्निं विचिन्तयेत् ॥

अत्र च ।

विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्त्तिश्च सन्नतिः ।
तुष्टिरुत्कृष्टिवृद्धी च संप्रोक्ता नव शक्तयः ॥

इति पीठशक्तयः । बीजाद्यमासनं दत्वेति वचनात् श्रीलक्ष्मीनाराणयोर्योगपीठात्मने नम इति पीठमन्त्रः ।

श्रीविद्यायां तु ( ज्ञानार्णवे )

कामेश्वरीं कुण्डमध्ये सकामामृतुसंयुताम् ।
समावाह्य च संपूज्य तद्गर्भे वह्निमावहेत् ॥

( शारदायाम् )

सूर्यकान्तादिसंभूतं यद्वा श्रोत्रियगेहजम् ।
आनीय वह्निं पात्रेण क्रव्यादांशं परित्यजेत् ॥

( गौतमीये )

पाषाणभवमग्निं च यदि वाऽरणिसंभवम् ।
श्रोत्रियाणां गेहजं च वनस्थमथ वा भवेत् ॥
यदृच्छालाभसंप्राप्तश्चायोग्यो यागकर्मणि ।
निरग्निब्राह्मणाल्लब्धो ह्यर्धलाभकरो भवेत् ॥
क्षत्राल्लब्धे चतुर्थांशं फलं दद्याद्धुताशनः ।
वैश्याच्छूद्राच्च विफलं जायते होमकर्म तत् ॥

( उड्डीशे )

श्रोत्रियागारजं वाऽपि सूर्यकान्तोद्भवं तु वा ।
अरणीसम्भवं वाऽपि क्षिप्तं स्वर्णादिभाजने ॥
ताम्रपात्रादिना मन्त्री पिहितं तु समानयेत् ।
अथ वाऽऽनीतमभितः स्थापयेत् कांस्यभाजने ॥

( मेरुतन्त्रे )

अरण्या मणितो विप्रगेहाद्वह्निं कुमारिका ।
सुवासिनी वा सद्धस्ता कृतशौचा समाहरेत् ॥
पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे ।
अग्निप्रणयनं कुर्याच्छरावे वाऽथ नूतने ॥
दद्यादस्त्रेण पात्रेऽग्निं कवचेन पिधाय च ।
जीर्णे शरावे कापाले भिन्नपात्रे तथोल्मुके ॥
नाग्निप्रणयनं कुर्याद्व्याधिहानिभयावहम् ।

क्रव्यादांशपरित्यागे विशेषस्तन्त्रान्तरे ।

अस्त्रेणाग्निं समाधाय कवचेन पिधाय तु ।
क्रव्यादांशं तु चास्त्रेण नैर्ऋत्ये संक्षिपेत् प्रिये ॥

( मन्त्रमुक्तावल्यामपि )

आनीयास्त्रेण नैर्ऋत्ये क्रव्यादांशं परित्यजेत् ।

देवांशं मूलमन्त्रेण स्थापयेत् पुरतः सुधीः ॥

(उड्डीशे) च

कूर्चास्त्राभ्यां तु नैर्ऋत्यां क्रव्यादांशं परित्यजेत्—इत्युक्तम्।

(गणेश्वरेऽपि)

हुँ फडन्तेनं मूलेन क्रव्यादांशं परित्यजेत् ।

(क्रियासारेऽपि)

श्मशानादावाममांसमत्ति यो वह्निरुच्यते ।

क्रव्यादं तस्य नामास्य त्यजेत किंचिद्धुताशनात ॥

(शारदायाम्)

संस्कुर्यात् तं यथान्यायं देशिको वीक्षणादिभिः ।

औदर्यवैन्दवाग्निभ्यां भौमस्यैक्यं स्मरन् वसोः ॥

यो जपेद्वह्निबीजेन चैतन्यं पावके तदा ।

(मेरुतन्त्रे)

प्रदीपकलिकाकारं तेज आवाह्य यत्नतः ।

ऐक्यं जाठरवैन्दववह्निभ्यां पार्थिवस्य च ॥

स्मृत्वाऽग्निबीजकेनास्य चैतन्यं योजयेदथ ।

वैन्दवस्तु भ्रूमध्यस्थो वह्निः ।

(उड्डीशे)

दीपाद्दीपान्तरन्यायात् स्फुरन्तं सर्वतो मुखम् ।

श्वासमार्गेण मनुवित् कवचेन ततोऽर्चयेत् ॥

(शारदायाम्)

तारेण मन्त्रितं मन्त्री धेनुमुद्रामृतीकृतम् ।

अस्त्रेण रक्षितं पश्चात् तनुत्रेण च गुण्ठितम् ॥

अर्चितं त्रिः परिभ्राम्य कुण्डस्योपरि देशिकः ।

प्रदक्षिणं तदा तारमन्त्रोच्चारणपूर्वकम् ॥

आत्मनोऽभिमुखं वह्निं जानुस्पृष्टमहीतलः ।

शिवबीजधिया देव्या योनावेनं विनिःक्षिपेत् ॥

(मेरुतन्त्रेऽपि)

देव्या योनौ तत्र जानुस्पृष्टभूमिश्च देशिकः ।

शिवबीजमिति ध्यात्वा निःक्षिपेदाशुशुक्षणिम् ॥

(उड्डीशे)

भूमौ च जानुनी कृत्वा कूर्चबीजं च वह्नि च ।

चैतन्यान्ते नमोऽन्तः स्यादनेनोत्थापयेच्छुचिम् ॥

शिवबीजधिया तस्या योनौ वह्निं विनिःक्षिपेत् ।

(त्रिपुरासारसमुच्चये)

योनावेनं विन्यसेत स्वाभिवक्त्रं

पश्चादग्निं मूलमन्त्रेण मन्त्री—इत्युक्तम् ।

शिवबीजधियेति शैवशाक्तविषयम् । वैष्णवादौ तु विष्णवादिबीजधियेति बोध्यम् ।

(वायवीयसंहितायां तु)

वह्निबीजं समुच्चार्य त्वादधीताग्निमासने ।

योनिमार्गेण चैं तद्वदात्मनः संमुखेन वा ॥

योनिमार्गेण मेखलोपरि स्थापितयोनिरन्ध्रेण ।

(मेरुतन्त्रे)

देवदेव्योराचमनं मैथुनान्तधिया चरेत् ।

(शारदायाम्)

पश्चाद्देवस्य देव्याश्च दद्यादाचमनीयकम् ।

ज्वालयेन्मनुनाऽनेन तमग्निमथ देशिकः ॥

चित्पिङ्गल-हनदहे पच-युग्मान्युदीर्य च ।

सर्वज्ञाज्ञापय स्वाहा मन्त्रोऽयं प्रागुदीरितः ॥

(रुद्रयामले)

ह्रौँ ह्रौँ ज्वलयुगं देवि प्रज्वलद्वितयं ततः ।

हुँफट्स्वाहेति मन्त्रेण ज्वालयेत् पावकं सुधीः—इत्युक्तम् ।

ज्वालनं तु मुखेन कुशमुष्टिपलाशपत्रादिना वा ।
तदुक्तम् ( मेरुतन्त्रे )

मुखेनैव धमेदग्निं मुखादेषो ह्यजायत ।
कुशैः पलाशादिपर्णैर्नापवित्रेण केन चित् ॥

तन्त्रान्तरेऽपि ।

जुहुयुश्च हुताग्निं च पाणिशूर्पस्रुचादिभिः ।
न कुर्यादग्निधमनं न कुर्याद्व्यजनादिभिः ॥
मुखेनैव धमेदग्निं मुखादेषो ह्यजायत ।
नाग्निं मुखेनेति तु यल्लौकिका योजयन्ति तत्—इति ।

तत्र ज्वालिनी मुद्राऽपि प्रदर्शनीया सा च ।

मणिबन्धौ समौ कृत्वा करौ तु प्रसृताङ्गुली ।
मध्यमे मिलिते कृत्वा तन्मध्येऽङ्गुष्ठकौ क्षिपेत् ॥
इयं सा परमा मुद्रा ज्वालिनी होमकर्मणि—इति ।

उक्तलक्षणा (यामले)

तत उत्थाय विधिवत् कृत्वा पाणिपुटं सुधीः ।
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥
सुवर्णवर्णममलं समिद्धं विश्वतो मुखम् ।
उपविष्टेत विधिवत् मनुनाऽनेन पावकम् ॥

(उड्डीशे )

प्रादेशमात्रां समिधं मूलाग्रघृतसंप्लुताम् ।
तूष्णीं वह्नौ समुत्क्षिप्य जिह्वायां देवतां न्यसेत् ॥

( शारदायाम् )

विन्यसेदात्मनो देहे मन्त्री जिह्वाहविर्भुजः ।
लिङ्गपायुशिरोवक्त्रघ्राणनेत्रेषु सर्वतः ॥
वह्नीरार्घीशसंयुक्ताः सादियान्ताः सविन्दवः ।
वर्णा मन्त्राः समुद्दिष्टा जिह्वानां सप्त देशिकैः ॥

जिह्वास्तास्त्रिविधाः प्रोक्ता गुणभेदेन कर्मसु ।

हिरण्या कनका रक्ता कृष्णाऽन्या सुप्रभा मता ॥

बहुरूपाऽतिरक्ता च सात्त्विक्यो यागकर्मसु ।

वह्नी रेफः । इरो यकारः । अर्घीशो दीर्घोकारः । अत्र सात्त्विकरसनायां बहुरूपातिरक्तयोः पौर्वापर्यं बीजक्रमानुरोधेन न तु न्यासक्रमानुरोधेन बहुरूपायाः सर्वाङ्गे न्यसनीयत्वात् ।

तदुक्तं तन्त्रान्तरे ।

सलिङ्गगुदमुर्धास्यनासानेत्रेषु च क्रमात् ।

विन्यसेदतिरक्तां तां सर्वाङ्गे बहुरूपिणीम्—इति राघवभट्टाः ।

वस्तुतः ।

हिरण्या गगना रक्ता कृष्णा चैव तु सुप्रभा ।

बहुरूपा महेशानि अतिरिक्ता तथैव च—इत्यनन्तरम् ।

एकैकं विन्यसेद्देवि लिङ्गपायुशिरःस्वथ ।

वक्त्रे घ्राणे तथा नेत्रे सर्वाङ्गे च न्यसेत् ततः ॥

इति (वीरचूडामणि-) वचनात् ।

ततः प्रविन्यसेज्जिह्वां देहे मन्त्री विभावसोः ।

सलिङ्गगुदमूर्धास्यनासानेत्रेषु च क्रमात् ॥

सर्वाङ्गेषु च जिह्वास्ता वक्ष्यन्ते त्रिविधात्मिकाः ।

हिरण्या गगना रक्ता कृष्णा चैव तु सुप्रभा ॥

बहुरूपाऽतिरक्ता च जिह्वाः सप्तेति सात्त्विकाः ।

इति (तन्त्रमन्त्रप्रकाश-) वचनाच्चातिरक्तायाः सर्वाङ्ग एव न्यासः साधीयान् । राघवभट्टलिखितवचनानन्तरं च यदि प्रमाणं तदा विकल्प एवेति सुधार्णवकृतः । (मेरुतन्त्रेऽपि) तन्त्रमन्त्रप्रकाशिकोक्त एव क्रम उक्तः ।

( शारदायाम् )

पद्मरागा सुवर्णाऽन्या तृतीया भद्रलोहिता ।

लोहितानन्तरं श्वेता धूमिनी च करालिका ॥

राजस्यो रसना वह्नेर्विहिताः काम्यकर्मसु ।

विश्वमूर्त्तिः स्फुलिङ्गिन्या धूम्रवर्णा मनोजवा ॥
लोहिताऽन्या करालाख्या काला तामस्य ईरिताः ।
एताः सप्त नियुज्यन्ते क्रूरकर्मसु मन्त्रिभिः ॥
स्वस्वनामसमाभाः स्युर्जिह्वाः कल्याणरेतसः ।
अमर्त्यपितृगन्धर्वयक्षनागपिशाचकाः ॥
राक्षसाः सप्त जिह्वानामीरिता अधिदेवताः ।

अधिदेवतोक्तिस्तत्तज्जिह्वास्थाने न्यासार्थं पूजार्थं च ।

जिह्वासु त्रिदशादीनां तत्तत्कार्यं समाप्तये ।
जुहुयाद्वाञ्छितां सिद्धिं दद्युस्ता देवता मताः ।

इति (प्रपञ्चसार-)वचनात् तत्तज्जिह्वायां तत्तद्द्रव्येण होमपक्षे होमार्थं चेति सुधार्णवकृतः ।

( क्रियासारे )

अस्य भृगू ऋषिश्छन्दो गायत्र्यग्निस्तु देवता ।
बीजं शक्तिस्तु रँ स्वाहा ऋष्यादीन् पूर्ववन्न्यसेत् ॥

( शारदायाम् )

वह्नेरङ्गमनून्न्यस्येत् तनावुक्तेन वर्त्मना ।
सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठ पुरुषः पुनः ॥
धूमव्यापी सप्तजिह्वो धनुर्धर इति क्रमात् ।
षडङ्गमनवः प्रोक्ता जातिभिः सह संयुताः ॥
मूर्तीरष्टौ ततो न्यस्येद्देशिको जातवेदसः ।
मूर्धांशपार्श्वकट्यन्धुकटिपार्श्वाङ्गकेषु च ॥
प्रदक्षिणवशान्न्यस्येदुच्यन्ते ता यथाक्रमात् ।
जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ॥
अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्वानराह्वयः ।
कौमारतेजाः स्याद्विश्वमुखो देवमुखः स्मृतः ॥

तारान्तये पदाद्याः स्युर्न्नत्यन्ता वह्निमूर्त्तयः ।
आसनं कल्पयित्वाग्नेर्मूर्त्तिं तस्य विचिन्तयेत् ॥

आसनं पीठं तनाविति शेषः । तत्राधारशक्त्यादिवह्निमण्डलान्तं विन्यस्य केशरेषु मध्ये च पीठशक्तीः । तत्रैव रँ वह्नियोगपीठाय नम इति पीठं च न्यसेत् । तदुक्तं तत्रैव ।

स्वमण्डलान्तं प्रयजेत् पीठेशनवशक्तिकम् ।
पीता श्वेताऽरुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ॥
रुचिरा ज्वालिनी प्रोक्ताः कृशानोर्नव शक्तयः ।
स्वबीजेनासनं दत्वा मूर्त्तिं मूलेन कल्पयेत्—इति ॥

अथ ध्यानं तत्रैव ।

इष्टां शक्तिं स्वस्तिकाभीतिमुच्चै-
दीर्घैर्दोर्भिर्धारयन्तं जपाभम् ।
हेमाकल्पं पद्मसंस्थं त्रिनेत्रं
ध्यायेद्वह्निं बद्धमौलिं जटाभिः ॥

ध्यानान्तरमुक्तम् ( रुद्रयामले )

बन्धूकपुष्पसंकाशं सुतप्तकनकप्रभम् ।
पद्मस्थं यजमानार्थं वदनद्वयशोभितम् ॥
सप्तच्छन्दोमयं देवं विमानोपरिसंस्थितम् ।
त्रिधाग्रीवं त्रिपादाब्जं हव्यकव्यविनाशकम् ॥
ब्रह्माध्वर्यूद्गातृहोतृचतुःश्रृङ्गविराजितम् ।
पञ्चपात्रं पाशुपतं कापिलं च महामतम् ॥
बौद्धं वैदिकमित्येतत् षट्पिङ्गलविलोचनम् ।
वेदार्थं च चतुःश्रोत्रं श्रौतशास्त्रमयध्वनिम् ॥
सपातालजटाबद्धमौलिकोटीरभास्वरम् ।
हेमालङ्कारसंयुक्तं हेमकुण्डलमण्डितम् ॥

रक्ताम्भोरुहमध्यस्थं स्वस्तिकासनसंस्थितम् ।
पृष्ठदेशसमालम्बितार्त्तीयचरणाम्बुजम् ॥
सदा शब्दायमानं च राजमानं स्वतेजसा ।
शक्तिं वज्रं स्रुक्स्रुवौ च चतुर्भिर्दक्षु बाहुभिः ॥
तोमरं तालवृन्तं च सौवर्णं घृतपात्रकम् ।
वामैस्त्रिभिर्बाहुभिश्च दधानं रक्तवाससम् ॥
हिरण्या कनका रक्ता कृष्णा दक्षानने स्थिताः ।
सुप्रभा वाऽतिरक्ता च बहुरूपा च जिह्विका ॥
इमा रसज्ञास्तद्वामवदने नित्यमास्थिताः ।
एताभिः सप्तजिह्वाभिरुपेतं पाटिताननम् ॥

( शारदायाम )

परिषिञ्चेत् ततस्तोयैर्विशुद्धैर्मेखलोपरि ।
दर्भैरगर्भैर्मध्यस्थमेखलायां परिस्तरेत् ॥

( कुलोड्डीशे )

एवं विन्यस्य देहः सन् परिस्तरणमाचरेत् ।
अर्घोदकेन संप्रोक्ष्य मध्यस्थमेखलोपरि ॥
उत्तराग्रं पूर्वदेशे पूर्वाग्रं दक्षिणे ततः ।
उत्तराग्रं पश्चिमे तु प्रागग्रमुत्तरे तथा ॥
मूलमाच्छादितं कृत्वा त्रिवारं तु परिस्तरेत् ॥

तथा ।

मेखलासु च सर्वासु दीपमालां प्रकल्पयेत् ।

( गणेश्वरविमर्षिण्याम )

पूर्वाग्रैरुत्तराग्रैश्च दर्भैरग्निं परिस्तरेत् ।

दक्षिणोत्तरयोः पूर्वाग्रैः पूर्वपश्चिमयोरुत्तराग्रैरित्यर्थः ।

(मेरुतन्त्रे)

एकमेखलके कुण्डे मेखलाधः परिस्तरेत्।

द्विमेखले द्वितीयायां मध्यमायां त्रिमेखले ॥

स्थण्डिले सिकतानां तु बाह्यभूमौ परिस्तरेत्।

(शारदायाम्)

निःक्षिपेद्दिक्षु परिधीन् प्राचीवर्जं गुरूत्तमः।

कात्यायनः।

परिधीन् परिदधत्यार्द्रानेकवृक्षीयान् बाहुमात्रान् पालाशवैकण्टककाश्मर्य-बैल्वानिति।

(मेरुतन्त्रे)

पलाशकाश्मरीबिल्वविकण्टकसमुद्भवान्।

एकवृक्षोद्भवानार्द्रान् परिधीन् बाहुमात्रकान् ॥

(त्रिपुरासारसमुच्चयेऽपि)

स्थण्डिलके सिकतानां बाह्ये पात्रे न्यसेत् परिधीन्।

(शारदायाम्)

प्रादक्षिण्येन संपूज्यास्तेषु ब्रह्मादिमूर्त्तयः।

(सौत्रामणीतन्त्रे)

.... .... .... कुण्डमध्ये विधानवित्।

पद्मासनान्तः साधारशक्त्यादिमनुभिः क्रमात्।

उपर्युपरिसंपूज्या वह्नेरासनशक्तयः ॥

पूर्वादिदलमूलेषु मध्ये पूज्याः क्रमेण तु।

आसनशक्तयः पूर्वोक्तपीठशक्तयः।

अत्र विशेष उक्तो (मेरुतन्त्रे)

कुण्डमध्ये तु षट्कोणगर्भितं स्वर्णकर्णिकम्।

नानाकेशरसंयुक्तं चतुर्द्वारसमावृतम् ॥

चिन्तयेदष्टदलकं चतुरस्रत्रयावृतम्।

पूजापीठं तु तद्वह्नेस्तत्र मण्डूककादिकान् ॥

ज्ञानात्मानं योगपीठं संपूज्य .... .... इति ।

तथाऽष्टदलेषु पूर्वोक्तपीठशक्तिपूजनमुक्तम् ।

सर्वशक्तिकमलासनाय हृद्द्वादशाक्षरः ।

समस्तपीठपूजायां वह्नेर्मन्त्र उदाहृतः—इति ॥

( शारदायाम् )

ध्यातं वह्निं यजेन्मध्ये गन्धाद्यैर्मनुनाऽमुना ।

वैश्वानरजातवेदपदे पश्चादिहावह ॥

लोहिताक्षपदस्यान्ते सर्वकर्माणि साधय ।

वह्निजायावधिः प्रोक्तो मन्त्रः पावकवल्लभः ॥

मध्ये षट्स्वपि कोणेषु जिह्वाज्वालारुचो यजेत् ।

अत्र षट्सु कोणेषु मध्ये च यजेदित्यन्वयः । कोणेषु ईशानादिक्रम इत्युक्तम् ।

( सोमशम्भौ )

रुद्रेन्द्रवह्निमांसादवरुणानिलगोचरे ।

हिरण्याद्याः स्थिता वह्ने रसनाः षडनुक्रमात् ॥

मध्यतो बहुरूपा तु .... .... .... इति ।

(वायवीयसंहितायाम् )

हिरण्या प्रागुदग्जिह्वा कनका पूर्वतः स्थिता ।

रक्ताऽऽग्नेयी नैर्ऋती च कृष्णाऽन्या सुप्रभा मता ॥

अतिरिक्ता मरुज्जिह्वा स्वनामस्वगुणप्रभा ।

त्रिशिखा मध्यमा जिह्वा बहुरूपा समाह्वया ॥

तस्थुष्येका दक्षिणतो ज्वलन्ती वामतः परा ।

स्वबीजानन्तरं वाच्या .... .... .... इति ।

( गणेश्वरविमर्शिण्यामपि )

कोणषट्के च मध्ये च जिह्वाः संपूजयेत् ततः ।

हिरण्या तप्तहेमाभा शूलपाणेर्दिशि स्थिता ॥

वैदूर्यवर्णा गगना प्राच्यां दिशि व्यवस्थिता।
तरुणाऽऽदित्यसंकाशा रक्ता जिह्वाऽग्निदिक्स्थिता॥
कृष्णा नीलाब्जसंकाशा नैर्ऋत्यां दिशि संस्थिता।
सुप्रभा पद्मरागाभा वारुण्यां दिशि संस्थिता॥
अतिरिक्ता च कौसुम्भवर्णा वायव्यसंस्थिता।
बहुरूपा यथार्थाभा दक्षिणोत्तरसंस्थिता॥
एता ज्वालारुचातीता वराभयकरा अपि।

(त्रिपुरासारसमुच्चयेऽपि)

सुतप्तचामीकरचारुवर्णा
स्थिता हिरण्यादिशि शूलपाणेः।
वैदूर्यवर्णा कनकाभिधाना
या सा निषण्णा दिशि वासवस्य॥
या रक्ता तरुणादिवाकराभवर्णा
सा जिह्वा हरिति सुसंस्थिता कृशानोः।
या कृष्णा विकसितनीलनीरजाभा
सा रक्षःपरिवृतदिग्विभागलग्ना॥
पद्मरागसदृशप्रभोज्ज्वला सुप्रभा वरुणदिश्यवस्थिता।
या महारजतपुष्पसन्निभा गन्धवाहदिशि साऽतिरक्तिका॥
यथार्थसंज्ञा बहुरूपिका सा
जिह्वोत्तरे दक्षिणतः स्थिता सा।

होमे विशेष उक्तो (गणेशविमर्षिण्याम्)

एधांसि च हिरण्यायां गगनायां चरुं घृतम्।
सिद्धार्थं बहुरूपायां रक्तायां तु यवास्तथा॥
कृष्णायां तु हुनेल्लाजाः सुप्रभायां तु सक्तुभिः।

तिलांश्चैवातिरक्तायां कनकायां तु सर्वदा ॥
सर्वद्रव्याणि जुहुयात् साधकः सर्वकर्मसु ।

तन्त्रान्तरे ।

फलं तु कामभेदेन क्रमादासामुदीर्यते ।
वश्याकर्षणयोराद्या गगना स्तम्भने मता ॥
विद्वेषमोहयोः रक्ता कृष्णा मारणकर्मसु ।
सुप्रभा शान्तिके पुष्टौ सुरक्तोच्चाटने मता ॥
एकैकबहुरूपा तु सर्वकामफलप्रदा ।

( मेरुतन्त्रे )

यथा कार्यं तथा जिह्वा दृश्यते चेत् स्वदिग्गता
ज्वालारूपा तथा सिद्धिर्विपरीतविपर्ययः ॥

वैष्णवे तु जिह्वान्तराण्युक्तानि तत्रैव ।

प्रभा दीप्तिः प्रकाशा च मरीचिस्तापनी तथा ।
कराला लेलिहा चेति जिह्वा वैष्णवकर्मणि ॥
ईशप्राग्वह्निनैर्ऋत्यपश्चाद्वायव्यमध्यतः ।
संस्थिता सकला जिह्वा वराभयलसत्कराः ॥

( शारदायाम )

केशरेषूक्तमार्गेण पूजयेदङ्गदेवताः ।
दलेषु पूजयेन्मूर्त्तिं शक्तिस्वस्तिकधारिणीम् ।
लोकपालाँस्ततो दिक्षु पूजयेदुक्तलक्षणात् ॥

अत्र लोकपालपूजा मेखलास्थदर्भोपरि कार्या ।
तदुक्तं तन्त्रान्तरे ।

कोणे षट्के च मध्ये च जिह्वाभिः केशरेष्वपि ।
अङ्गमन्त्रैस्ततो बाह्ये त्वष्टाभिर्मूर्त्तिभिः क्रमात् ॥
मेखलाश्रितदर्भेषु दिक्पतीन् पूर्वतो यजेत् ।

(तत्त्वसारसंहितायाम्)

पात्राण्यासाद्य विधिवद्बहुशश्चापि मन्त्रवित् ।
तान्यवेक्ष्य पवित्रेण चोत्तानानि विधाय च ॥
पुनः प्रक्षालयेत् पात्रं परिपूर्य शुभाम्बुना ।
दत्वाऽक्षतान् पवित्रं च तदुत्पूय निधापयेत् ॥
दिश्युत्तरस्यां तत् पात्रं प्रणीतेत्युच्यते बुधैः ।
ततः किंचित् प्रणीताम्बु प्रोक्षण्याऽऽदाय तज्जलैः ॥
यज्ञसाधनसंभारं प्रोक्षयेन्मूलमन्त्रतः ।
ततो ब्रह्माणमावाह्याभ्यर्चयेन्मूलमन्त्रतः ।

अन्यत्रापि ।

वामे चास्तीर्य दर्भान् बलरिपुहरिदग्राँस्तदूर्ध्वं निधाय
पात्राणि द्वन्द्वशोऽधोवदनमथ तथोत्तानवक्त्राणि कृत्वा ।
हृन्मन्त्रेणाभिपूर्यान्यतममथ जलैर्मन्त्रपूतैरथैभि-
रभ्युक्ष्यान्यैश्च कूर्चैः सकलमपि हृदा सव्यगं हव्यजातम् ॥

इति तन्त्रान्तरे ।

कुण्डस्योत्तरतः स्थाप्या प्रणीता वारिपूरिता ।
प्रणीतापात्रतः सर्वे स्थाप्याः पात्रगणाः क्रमात् ॥
आज्यस्थाली चरुस्थाली गव्यक्षीरसमन्विता ।
स्रुक्स्रुवौ च घृतं गव्यं तण्डुलाः कुशमूलकाः ॥
पालाशाः समिधस्तिस्रः पूर्णपात्रमतः परम् ।

( मेरुतन्त्रे )

स्वगृह्योक्तविधानेन वायुदेशाच्च पूर्वतः ।
स्रुक्स्रुवौ च प्रणीता च प्रोक्षणीपात्रयुग्मकम् ॥
आज्यस्थाली च परिधीनिध्मं च कुशमुष्टयः ।
अधोमुखानि पात्राणि होमद्रव्यं वलिं तथा ॥

गन्धपुष्पाक्षतादीनि सर्वाण्यासादयेदथ ।
तान्यभ्युक्ष्य पवित्रेण चोत्तानानि निधाय च ॥
प्रोक्षणीपात्रयुगलं परिपूर्य शुभाम्बुना ।

तन्त्रान्तरे ।

स्ववामभागे प्रागग्रान् दर्भानास्तीर्य चोपरि ।
यथावित्तानुसारेण सौवर्णादीनि कर्मणि ॥
अधोमुखानि पात्राणि द्वन्द्वरूपाणि विन्यसेत् ।
उत्तानीकृत्य पात्राणि जलाद्यैः संप्रपूरयेत् ॥

( यामले )

वह्नेरुत्तरतः स्वस्य वामे देशिकसत्तमः ।
दर्भानास्तीर्य पूर्वाग्रान् पात्राण्यासादयेदथ ॥

स्वस्येति पूर्वाभिमुखस्येति वेदितव्यम् ।

( त्रिपुरासारसमुच्चयेऽपि )

ततो वामभागे परिस्तीर्य दर्भान्
पुलोमात्मजावल्लभाशागताग्रान् ।
तदूर्ध्वं न्यसेद्द्वन्द्वरूपेण पात्रा-
ण्यथोऽधोगतास्यानि सर्वाणि धीमान् ॥
अथोत्तानितेष्वेषु पात्रेषु पात्रं
जलैरेकमापूर्य तीर्थानि तत्र ।
सुसंचिन्त्य तैः प्रोक्षयेत् कूर्चदर्भै-
र्हृदा सव्यभागस्थितं द्रव्यजातम् ॥

पात्रेष्वपि विशेषस्तत्रैव ।

सौवर्णान्यपि राजतान्यपि तथा पात्राणि शौल्वानि
मृत्पात्राण्यपि शान्तिकादिषु परं शस्त्राणि कर्मस्व

शैल्वक्षद्रुमशिग्रुभूरुहकृतान्येतानि विद्वेषणो-
च्चाटोत्सादनमारणादिषु भृशं शस्तानि पात्राण्यपि ॥

शौल्वं ताम्रम् । शैलुर्बहुवारकः । अक्षद्रुमो विभीतकद्रुमः । शिग्रुः शोभाञ्जनः ।

( मेरुतन्त्रे )

वृणुयाद्ब्राह्मणं शान्तं देवतामन्त्रदीक्षितम् ।
कुण्डस्य दक्षिणे भागे वेशयेत् तं कुशासने ॥
अमुकामुकगोत्रोऽहममुकामुकगोत्रिणाम् ।
दीक्षाङ्गभूतहोमेऽस्मिन् ब्रह्माणं त्वां वृणे इति ॥
वस्त्रालङ्कारादिकेन वृत्वा तं परिपूजयेत् ।
कुर्यात् कुशवटुं वाऽपि लभ्यते ब्राह्मणो न चेत् ॥

( शारदायाम् )

पश्चादादाय पाणिभ्यां स्रुक्स्रुवौ तावधोमुखौ ।
त्रिशः प्रतापयेद्वह्नौ दर्भानादाय देशिकः ॥
तदग्रमूलमध्यानि शोधयेत् तैर्यथाक्रमात् ।
गृहीत्वा वामहस्तेन प्रोक्षयेद्दक्षिणेन तौ ॥
पुनः प्रताप्य तौ मन्त्री दर्भानग्नौ विनिःक्षिपेत् ।
आत्मनो दक्षिणे भागे स्थापयेत् तौ कुशास्तरे ॥

तन्त्रान्तरे ।

गृहीत्वा स्रुक्स्रुवावूर्ध्वमुखौ चाधोमुखौ क्रमात् ।
प्रताप्याग्नौ त्रिधा दर्भमूलमध्याग्रकैः स्पृशेत् ॥
पुनस्त्रिशः प्रताप्याधोमुखौ वह्नौ कुशान् क्षिपेत् ।
मूलमध्याग्रके न्यस्येच्छक्तीरिच्छादिकाः क्रमात् ॥
स्रुचि शक्तिं स्रुवे शम्भुं विन्यसेद्धृदयाणुना ।

इच्छादिका इति इच्छाज्ञानक्रिया इत्यर्थः ।

( शैवागमे तु )

गृहीत्वा स्रुक्स्रुवावूर्ध्ववक्त्रावधोमुखौ क्रमात् ।
प्रताप्याग्नौ त्रिधा दर्भमूलमध्याग्रकैः स्पृशेत् ॥
त्रिसूत्रवेष्टितग्रीवौ पूजितौ कुसुमादिभिः ।
कुशानामुपरिष्टात् तौ स्थापयित्वा स्वदक्षिणे—इत्युक्तम् ॥

( मेरुतन्त्रे )

कुशाग्रैस्तु तयोरग्रं मध्यं मध्यैश्च मार्जयेत् ।
मूलं मूलैस्त्रिधा चैवं मार्जयित्वा प्रतापयेत् ॥
धृत्वा तौ वामहस्तेन प्रोक्षयेत् प्रोक्षणीजलैः ।
दक्षिणेन कराग्रेण पुनः संतापयेच्च तौ ॥
कुशान् क्षिप्त्वा ततो वह्नौ स्वदक्षे तौ कुशास्तरे ।
संस्थाप्य स्रुक्स्रुवौ पश्चाद् घृतसंस्कारमाचरेत् ॥

( शारदायाम् )

आज्यस्थालीमथादाय प्रोक्षयेदस्त्रवारिणा ।
तस्यामाज्यं विनिःक्षिप्य संस्कृतं वीक्षणादिभिः ॥

तन्त्रान्तरे ।

गव्यमाज्यं समादाय मूलेनैवाभिमन्त्रितम् ।
स्वकां ब्रह्ममयीं मूर्त्तिं संचिन्त्याग्नौ प्रतापयेत् ॥

( शैवागमेऽपि )

गव्यमाज्यं समादाय मूलेनैवाभिमन्त्रितम् ।
स्वकां ब्रह्ममयीं मूर्त्तिं संचिन्त्य च—इति ॥

गव्यमित्युत्तमकल्पमभिप्रेत्योक्तम् ।
तदुक्तम् ( पिङ्गलामते )

उत्तमं गोघृतं प्रोक्तं मध्यमं महिषीभवम् ।
अधमं छागलीजातं तस्माद्गव्यं प्रशस्यते—इति ॥

( वायवीयसंहितायाम् )

न्यस्य मन्त्रं घृते मुद्रां दर्शयेद्धेनुसंज्ञकाम् ।

( शारदायाम् )

निरुह्य वायवेऽङ्गारान् हृदा तेषु निवेदयेत् ।
इदं तापनमुद्दिष्टं देशिकैस्तन्त्रवेदिभिः ॥
संदीप्य दर्भयुगलमाज्ये क्षिप्त्वाऽनले क्षिपेत् ।
गुरुर्हृदयमन्त्रेण पवित्रीकरणं त्विदम् ॥
दीप्तेन दर्भयुग्मेन नीराज्याज्यं सवर्मणा ।
अग्नौ विसर्जयेद्दर्भमभिद्योतनमीरितम् ॥
घृते प्रज्वलितान् दर्भान् प्रदर्श्यास्त्राणुना गुरुः ।
जातवेदसि तान् न्यस्येदुद्योतनमिदं मतम् ॥
गृहीत्वा घृतमङ्गारान् प्रयोज्याग्नौ जलं स्पृशेत् ।
अङ्गुष्ठोपकनिष्ठाभ्यां दर्भौ प्रादेशसंमितौ ॥
धृत्वोत्पुनीयादस्त्रेण घृतमुत्पवनं त्विदम् ।
तद्वद्धृदयमन्त्रेण कुशाभ्यामात्मसंमुखम् ॥
घृते संप्लवनं कुर्यात् संस्काराः षडुदीरिताः ।

अङ्गुष्ठोपकनिष्ठाभ्यामिति हस्तद्वयस्येति शेषः । उत्पुनीयादिति अग्निसंमुखमिति शेषः ।

तदुक्तम् ( शैवागमे )

प्रादेशमात्रदर्भाभ्यामङ्गुष्ठानामिकाग्रकैः ।
धृताभ्यां संमुखं वह्नेरस्त्रेणोत्प्लवमाचरेत् ॥

( शारदायाम् )

प्रादेशमात्रं सग्रन्थिदर्भयुग्मं घृतान्तरे ।
निःक्षिप्य भागौ द्वौ कृत्वा पक्षौ शुक्लेतरौ स्मरेत् ॥
वामे नाडीमिडां भागे दक्षिणे पिङ्गलां पुनः ।

सुषुम्णां मध्यतो ध्यात्वा कुर्याद्धोमं यथाविधि ॥

तत्र स्रुवधारणप्रकारो ( नारदीये )

हीयते यजमानो वै स्रुवमूलस्य दर्शनात् ।
तस्मात् संगोपयेन्मूलं होमकाले स्रुवस्य च ॥
अग्रे व्याधिकरं प्रोक्तं मध्ये शोककरं स्मृतम् ।
मूले हानिकरं प्रोक्तं स्रुवं धारयते कथम् ॥
वेदाङ्गुलं परित्यज्य अग्रे चैव द्विरष्टकम् ।
वेदाङ्गुलं तु तन्मध्ये धारयेच्छङ्खमुद्रया ॥

तन्त्रान्तरे ।

पञ्चाङ्गुलं बहिस्त्यक्त्वा धारयेच्छङ्खमुद्रया ।

( होमसारे )

मूलात् षडङ्गुलं त्यक्त्वा चतुरङ्गुलमेव वा ।
प्रकोष्ठे मूलमाच्छाद्य धारयेच्छङ्खमुद्रया ॥

तन्त्रान्तरे ।

श्रुवेणाज्यं समादाय जुहुयान्न्युब्जपाणिना ।

( भैरवतन्त्रे )

हविरुत्तानहस्तेन वैश्वानरमुखे हुतम् ।
होतुश्चक्षुर्विनाशाय यजमानो विनश्यति ॥

( परिशिष्टे तु )

उत्तानेनैव हस्तेन अङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयात्-....इत्युक्तम ॥

भैरवः ।

होमे मुद्रात्रयं प्रोक्तं मृगी हंसी च शूकरी ।
मृगी कनिष्ठातर्जन्योर्हंसी मुक्तकनिष्ठिका ॥
शूकरी करसङ्कोचमिति मुद्राः प्रकीर्त्तिताः ।
मृगी च पुत्रकामार्थी हंसी सर्वफलप्रदा ॥

अभिचारेषु सर्वेषु शूकरी कथिता बुधैः।

( शारदायाम् )

स्रुवेण दक्षिणाद्भागादादायाज्यं हृदा गुरुः।
जुहुयादग्नये स्वाहेत्यग्नेर्दक्षिणलोचने॥
वामतस्तद्वदादाय वामे वह्निविलोचने।
जुहुयादथ सोमाय स्वाहेति हृदयाणुना॥

( मेरुतन्त्रे )

गृहीत्वाऽऽज्यं वामभागाद्धृदा वामेऽग्निलोचने।
हुनेत् सोमाय स्वाहेति त्यागः सर्वत्र नो मतः॥

( शारदायाम् )

मध्यादाज्यं समादाय वह्नेर्भालविलोचने।
जुहुयादग्नीषोमाभ्यां स्वाहेति हृदयाणुना॥
हृन्मन्त्रेण स्रुवेणाज्यं भागादादाय दक्षिणात्।
जुहुयादग्नये स्विष्टकृते स्वाहेति तन्मुखे॥
हुतिं संपातयेद्भागेष्वाज्यस्याथाहुतिक्रमात्।
इत्यग्निनेत्रवक्त्राणां कुर्यादुद्योतनं गुरुः॥

संपातयेद्भागेष्विति। यस्माद्भागादाज्यं गृहीत्वा हुतं तद्भागे हुतशेषं क्षिपेदित्यर्थः।

तदुक्तम् ( शैवागमे )

स्वाहेत्यग्नौ हुतिशेषभागमाज्यं क्षिपेत् क्रमात्—इति।

( शारदायाम् )

सताराभिर्व्याहृतिभिराज्येन जुहुयात् पुनः।

अत्र। ॐ स्वाहा। भूः स्वाहा। भुवः स्वाहा। स्वः स्वाहा। ॐ भूर्भुवः स्वः स्वाहेति व्यस्तसमस्ताभिः पञ्चाहुतयः 'पञ्चभिर्मनुभिर्हुने'दिति ( नारायणीयतन्त्र- ) वचनात्।

( उड्डीशे )

देव्या व्याहृतिहोमं च ताराद्येन चतुर्हुनेत् ।
भूरग्नये पृथिव्यै च महते वह्निवल्लभा ॥
भुवः पदाद्वायवे च अन्तरिक्षाय शब्दतः ।
अग्न्यादित्यचन्द्रमसो ङेन्ता नक्षत्र इत्यपि ॥
भ्यसन्तश्चैव दिग्भ्यश्च महते वह्निवल्लभा ।

( शारदायाम् )

जुहुयादग्निमन्त्रेण त्रिवारं देशिकोत्तमः ।
गर्भाधानादिकं वह्नेः क्रिया निवर्त्तयेत् क्रमात् ॥
अष्टाभिराज्याहुतिभिः प्रणवेन पृथक् पृथक् ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं पुनः ॥
अनन्तरं जातकर्म स्यान्नामकरणं तथा ।
उपनिष्क्रमणं पश्चादन्नप्राशनमीरितम् ॥
चूडोपनयनं भूयो महानाम्न्यं महाव्रतम् ।
अथोपनिषदं पश्चाद्गोदानोद्वाहकौ मृतिः ॥

( भैरवी )

गर्भाधानं पुंसवनं सीमन्तोन्नयनं चरेत् ।
जातं वागीश्वरीगर्भात् प्रागवद्ध्यायेद्धुताशनम् ॥
जातकर्म ततः कृत्वा नालच्छेदं समाचरेत् ।
सूतकं शोधयित्वाऽथ कुर्यान्नाम यथाविधि ॥
तृप्तये यस्य देवस्यास्त्यग्निस्तन्नामपूर्वकः ।
चौलोपनयनं वह्नेर्महानाम्नीव्रतं तथा ॥
महाव्रतं चोपनिषद्व्रतं गोदानमेव च ।
समावर्त्तनमुद्वाहः शाक्ते वाग्भवपूर्वकाः ॥

तथा।

प्रणवं पूर्वमुच्चार्य कर्मनाम समुद्धरेत्।
संपादयामि स्वाहेति सर्वकर्मस्वयं विधिः॥

(शारदायाम्)

शुभेषु स्युर्विवाहान्ताः क्रियास्ताः क्रूरकर्मसु।
मरणान्ताः समुद्दिष्टा वह्नेरागमवेदिभिः॥

(उड्डीशे)

जातकर्म समाप्याथ श्रमापनोदनाय च।
प्रादेशमात्रां समिधं मूलाग्रघृतसंप्लुताम्॥
ॐ कामेश्वरकामेशीभ्यां स्वाहेति त्रिर्विनिःक्षिपेत्।
वह्नेश्च पितरौ मन्त्री स्वदेहे विनियोजयेत्॥
इष्टदेवस्य नाम्ना तु वह्नेर्नाम समाचरेत्।

कामेश्वरकामेश्वरीभ्यामिति तु श्रीविद्यायाम्। अन्यत्र वागेश्वरवागीश्वरीभ्यामिति ज्ञेयम्।

(पूर्णयागे)

आज्याहुत्यष्टकं हुत्वा नामकर्म समाचरेत्।
देशिकस्त्वमुकोऽसीति मूलमन्त्रेण कल्पयेत्॥

(वायवीयसंहितायाम्)

जातं ध्यात्वैवमाकारं जातकर्म समाचरेत्।
नालापनयनं कृत्वा ततः संशोध्य सूतकम्॥
शिवाग्निरिति नामास्य कृत्वा हुतिपुरःसरम्।
पित्रोर्विसर्जनं कृत्वा चूडोपनयनादिकम्॥
अथोद्वाहावसानं च कृत्वा संस्कारमस्य तु।

नालापनयनप्रकारस्तु (शैवागमे)

वह्नेरिहास्त्रमन्त्रेण ततो नालापनुत्तये।
समिधः पञ्च जुहुयात् प्रान्ते मूले घृतप्लुताः—इति॥

( वायवीयसंहितायाम् )

ताः पालाश्यः परा वाऽपि याज्ञीया द्वादशाङ्गुलाः ।
अवक्रा न स्वयं शुष्काः सत्वचो निर्व्रणाः समाः ॥
दशाङ्गुला वा विहिताः कनिष्ठाङ्गुलिसंमिताः ।
प्रादेशमात्रा वाऽलाभे होतव्याः सकला अपि—इति ॥

(शारदायाम्) वह्नेः सकलसंस्कारशेषे तत्पित्रोर्विसर्जनमुक्त्वा नालापनयनीः पञ्चसमिधां होम उक्तः ।

ततश्च पितरौ तस्य संपूज्यात्मनि योजयेत् ।
समिधः पञ्च जुहुयान्मूलाग्रघृतसंप्लुताः—इति ॥

( क्रियासारे )

पित्रोर्विसर्जनं कृत्वा चूडोपनयनादिकम् ।
कुर्याद्वा सर्वसंस्कारं शेषे देवौ विसर्जयेत् ॥
श्रमापनोदनार्थं च हुत्वा तिस्रः समिद्वराः ।

( मेरुतन्त्रे )

सबीजरसनानाम्ना चैकैकामाहुतिं हुनेत् ।
ततश्चाङ्गानि जुहुयाद्वह्नेर्मूर्त्यष्टकं तथा ॥
इन्द्रादिलोकपालाश्च आयुधानि ततः परम् ।
मन्त्रेणोङ्कारपूर्वेण स्वाहान्तेन विचक्षणः ॥
स्वाहावसाने जुहुयाद्ध्यायन् वै मन्त्रदेवताम् ।

स्वाहान्तमन्त्रे तु स्वाहान्तरं न देयम् । तदुक्तम् ( मन्त्रप्रकाशे )

नमोन्ते न नमो दद्याद्द्विठान्ते द्विठमेव च ।
पूजायामाहुतौ चापि सर्वत्रायं विधिः शिवे ॥

द्विठः स्वाहा । अत्र ठकारेण लिपिसाम्याद्बिन्दुरुच्यते । बिन्दुद्वयं विसर्गः । स च शक्तिरूपस्तेन द्विठशब्देनाग्निशक्तिः स्वाहोच्यत इति राघवभट्टाः । वस्तुतो द्विठ इति पारिभाषिकी संज्ञेति सांप्रदायिकाः ।

( मेरुतन्त्रे )

चतुर्वारं स्रुवेणाज्यं गृहीत्वा स्रुचि निःक्षिपेत् ।

तेनैव तां पिधायाग्नौ हुनेत् तिष्ठन् गुरुः स्वयम् ॥
वौषडन्तेन वह्नेस्तु मनुना संवदेत् ततः ।
जिह्वायां मध्यसंस्थायां मन्त्री ज्वालावलीतनौ ॥
ताराद्यैर्दशभिर्भेदैः पूर्वपूर्वसमन्वितैः ।
मनुना गाणपत्येन हुनेत् पूर्वं दशाहुतीः ॥
जुहुयाच्च चतुर्वारं समस्तेनैव तेन तु ।

( शारदायामपि )

विघ्नेश्वरस्य मन्त्रेण जुहुयादाहुतीर्दश ।
सामान्यं सर्वतन्त्राणामेतदग्निमखं स्मृतम् ॥

तत्रैव ।

ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् ।
अस्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके ॥
तण्डुलान् शालिसंभूतान् मूलमन्त्राभिमन्त्रितान् ।
प्रसृतीः पञ्चदशभिः क्षिप्त्वा चास्त्रमनुं जपन् ॥
प्रक्षाल्य पात्रवदनं पिधाय कवचाणुना ।
प्राङ्मुखो मूलमन्त्रेण देशिकेन्द्रश्चरुं पचेत् ॥
स्रुवेणाज्येन संपन्ने दद्यात् तत्राभिघारणम् ।
मूलेन पश्चात् तत् पात्रं कवचेनावतारयेत् ॥
अस्त्रजप्तकुशास्तीर्णमण्डले विधिवद्गुरुः ।
तं विभज्य त्रिधा भागमेकं देवाय कल्पयेत् ॥
अन्यमग्नौ प्रजुहुयादपरं देशिकः स्वयम् ।
शिष्येण सार्धं भुञ्जीत .... .... ....इति ॥

होमभोजनयोः प्रकारस्त्वग्रे वक्ष्यते ।

( मेरुतन्त्रे )

संपूज्य देवतापीठं वह्नौ सम्यक् ततो गुरुः ।

अग्निरूपधरां तत्र पूजयेदिष्टदेवताम् ॥
आज्येन साध्यमनुना पञ्चविंशतिसंख्यकम् ।
हुनेन्मन्त्री चाग्निमुखे वक्त्रैकीकरणं त्विदम् ॥
आत्माग्निदेवतानां च चिन्तयन्नैक्यमात्मवित् ।
एकादशाथ मूलेन हुनेदाज्येन चाहुतीः ॥
नाडीसन्धानमेतद्धि प्रोक्तं देशिकसत्तमैः ।
अङ्गप्रभृत्या वृत्तीनामेकैकामाहुतिं हुनेत् ॥

अन्ते मूलेन दशाहुतयो देयास्तदुक्तम् ( त्रिपुरासारसमुच्चये )

परिवारस्यैकैकां देव्या दशाहुतीर्जुहुयात्—इति ॥

( मेरुतन्त्रे )

पूर्वादिदिक्षु कुण्डेषु सर्वेष्वपि यथाविधि ।
गुरुर्वह्निं परिहरेत् संस्कृतेषूक्तवर्त्मना ॥
सर्वर्त्विजश्चन्दनाद्यैः संपूज्य प्रोक्तदेवताम् ।
सर्वावरणसंयुक्तां मूलेन जुहुयुस्ततः ॥
पञ्चविंशतिधा सर्पिःसंयुतेन पयोन्धसा ।

अत्र सर्वेष्वपि कुण्डेषु वह्निविहरणमाचार्यकर्त्तृकम् । कुण्डान्तरसंस्कारस्तु ऋत्विक्कर्त्तृको बोध्यः । जुहुयुरिति । आचार्य ऋत्विजश्चेति शेषः । पयोन्धसा चरुणा पूर्वोक्तचरोर्द्वितीयभागेनेति यावत् । चरुहोमात् पूर्वं पञ्चविंशतिराज्याहुतयो देयाः ।

तथा च ( शारदायाम् )

ततोऽन्येष्वपि कुण्डेषु संस्कृतेषु यथाविधि ।
आचार्यो विहरेदग्निं पूर्वादिषु समाहितः ॥
ऋत्विजो गन्धपुष्पाद्यैरङ्गाद्यावरणान्विताम् ।
तत्रोक्तदेवतामिष्ट्वा पञ्चविंशतिसंख्यया ॥
मूलेनाज्येन जुहुयुः साज्येन चरुणा तथा ।

( सोमशम्भौ )

चरोस्तृतीयभागं तु ग्रासत्रितयसंमितम् ।
अष्टग्रासप्रमाणं वा दर्शनस्पर्शवर्जितम् ॥
पलाशपुटके भुक्तौ भुक्तौ पिप्पलपत्रके ।
हृदा संभोजयेन्मन्त्री पूतैराचामयेज्जलैः ॥

( शारदायाम् )

आचान्तं शिष्यमानीय सकलीकृत्य देशिकः ।
*तालप्रमाणं हृज्जप्तं क्षीरवृक्षादिसंभवम् ॥
दन्तकाष्ठं तदा दद्याच्छिष्याय विनयात्मने ।
दन्तान् विशोध्यं यत्नेन तत् प्रक्षाल्य विसर्जयेत् ॥

( मेरुतन्त्रेऽपि )

वितस्तिमात्रं हृज्जप्तं यथोक्तं दन्तधावनम् ।
शिष्याय दद्यात् स रदान् विशोध्य क्षालितं त्यजेत् ॥

दन्तकाष्ठपरीक्षा च मण्डपप्रवेशात् प्रागेव कर्त्तव्या। अत्र तु दन्तशोधनमात्रमिति संप्रदायः । अत्रैव परीक्षा कर्त्तव्येति केचित् । अन्ये तु कालद्वयेऽपि तत्परीक्षा कर्त्तव्यैवेत्याहुः ।

( शारदायाम् )

यथाविधि तमाचान्तं शिखाबन्धाभिरक्षितम् ।
विधाय सार्धममुना वेद्यां दर्भास्तरे गुरुः ॥
शयीत तस्यां तां रात्रिमधिवासः समीरितः ।

(नारायणीये )

पुनस्तं शिष्यमाचान्तं शिखाबन्धाभिरक्षितम् ।
कृत्वा वेद्यां सहानेन स्वपेद्दर्भास्तरे गुरुः ॥

( पिङ्गलामते )

स्वप्नमानवमाश्रित्य स्वापयेत् पूर्वमस्तकम् ।

---

* अङ्गुष्ठमध्यमाभ्यां परिमितदीर्घम् ।

( वायवीयसंहितायाम् )

देवस्य दक्षिणे भागे शिष्यं तमधिवासयेत् ।
अहतास्तरणास्तीर्णसदर्भशयने शुचिः ॥

( मेरुतन्त्रे )

आचान्तमत्र च यथाविधि तं शिखायां
बन्धैः सुरक्षितममुं प्रविधाय मन्त्री ।
वेद्यां शयीत कुशसंस्तरणे रजन्यां
शिष्येण सार्धममुना गदितोऽधिवासः ॥

( महाकपिलपञ्चरात्रे )

गुरुपादार्चनं कृत्वा उपवासी जितेन्द्रियः ।
दर्भशय्यां गतो रात्रौ दृष्ट्वा स्वप्नं निवेदयेत् ॥

( योगिनीतन्त्रे ) (मेरुतन्त्रे ) च

यज्जाग्रतो दूरमुदैति दैव-
मावृत्य मन्त्रान् प्रयतस्त्रिरेतान् ।
लघ्वेकभुग्दक्षिणपार्श्वशायी
स्वप्नं परीक्षेत यथोपदेशम् ॥

भगवन् देवदेवेश शूलभृद्वृषवाहन ।
इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वतः ॥
एवं सुप्तः कुशास्तीर्णे ततः प्रयतमानसः ।
निशान्ते पश्यति स्वप्नं शुभं वा यदि वाऽशुभम् ॥

( पिङ्गलामते ) ( मेरुतन्त्रे ) च ।

तारो हिलिद्वयं शूलपाणये द्विठ ईरितः ।
स्वप्नमानवमन्त्रोऽयं शम्भुना परिकीर्त्तितः ॥
नमो जय त्रिनेत्राय पिङ्गलाय महात्मने ।
वामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥

स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः ।
क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर ॥

( मन्त्रतन्त्रप्रकाशे )

ॐ ह्रूं सकललोकाय विष्णवे प्रभविष्णवे ।
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ॥
स्वप्नमानवमन्त्रोऽयं कथितो नारदादिभिः ।

( नारदीये )

परब्रह्मस्वरूपस्त्वमन्तश्चरसी विश्वधृक् ।
शुभाशुभगतिं देव स्वप्ने मे विनिवेदय ॥
इत्युच्चार्य नमस्कुर्याज्जानुभ्यामवनीं गतः ।
प्रसन्नो वाग्यतस्तस्मिन् शयीतेष्टं विचिन्तयेत् ॥

अथ शुभस्वप्नाः । (योगिनीतन्त्रे )

त्रिविधं दर्शनं तस्य यथार्थमयथार्थकम् ।
अपाकजं यत् स्वस्थानां संयतानां हि दर्शनम् ॥
यथार्थमयथार्थं तदस्वस्थानां विकारजम् ।
अपाकजं मानसं च यथार्थफलमुच्यते ॥

( आगमसिद्धान्ते )

आद्ये वर्षाद्वत्सरार्धाद्द्वितीये
यामे पाको वर्षपादात् तृतीये ।
यामे पाकः शर्वरीतुर्यपादे
सद्यः पाको यो विसर्गेषु दृष्टः ॥

तथा ।

स्वप्ने पश्यति वै देवं निजेष्टं सर्वतो मुखम् ।
गुरुं प्रसादसुमुखं निर्मलं चन्द्रमण्डलम् ॥
गङ्गां भागीरथीं भानुं लिङ्गिनं लिङ्गमेश्वरम् ।

प्रसन्नां तत्र जानीयात् सिद्धिं स्वप्ननिदर्शने ॥

( नारदपञ्चरात्रे )

क्षितिलाभः चतं चाब्धितरणं चाग्निपूजनम् ।
होमश्च ज्वलिते वह्नौ संग्रामविजयस्तथा ॥
हंसकोकमयूराणां रथारोहणमेव च ।

( महाकपिलपञ्चरात्रे )

कन्यां छत्रं रथं दीपं प्रासादं कमलं नदीम् ।
कुञ्जरं वृषभं मालां समुद्रफेनिलं द्रुमम् ॥
पर्वतं च हयं मध्यमाममांससुरासवम् ।
एवमादीनि सर्वाणि दृष्ट्वा सिद्धिमवाप्नुयात् ॥
यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात तस्मिन् स्वप्ननिदर्शने ॥
नदीसमुद्रतरणमाकाशगमनं तथा ।
भास्करोदयनं चैव प्रज्वलन्तं हुताशनम् ॥
ग्रहनक्षत्रताराणां चन्द्रमण्डलदर्शनम् ।
हर्म्यप्ररोहणं चैव प्रासादशिरसोऽपि वा ॥
नागाश्ववृषभेन्द्राणां तरुशैलाग्ररोहणम् ।
विमानगमनं चैव सिद्धमन्त्रस्य दर्शनम् ॥
एवमादीनि संदृष्ट्वा* नरः सिद्धिमवाप्नुयात् ।
स्वप्ने तु मदिरापानमाममांसस्य भोजनम् ॥
कृमिविष्ठानुलेपं च रुधिरेणाभिषेचनम् ।
भोजनं दधिभक्तस्य श्वेतवस्त्रानुलेपनम् ॥

---

* तान्त्रिकप्रयोगोऽयम् ।

सिंहासनं रथं यानं ध्वजं राज्याभिषेचनम्।
रत्नान्याभरणादीनि दृष्ट्वा स्वप्ने प्रसीदति॥

(नारदपञ्चरात्रे)

गुरुर्देवो द्विजः कन्या गोगजाश्वाश्च केशरी।
दर्पणं शङ्खभेर्यौ च तन्त्रीवाद्यं च रोचनम्॥
ताम्बूलभक्षणं चैव तथा बध्याभिवन्दनम्।
सिद्धान्नमाममांसं च मद्यस्त्रीमदिरावसाः॥
छत्रं यानं सितं वस्त्रं तथाऽन्यं श्वेतचन्दनम्।
मालामुक्ताफले हारः पूर्णः समुदितः शशी॥
प्रचण्डकिरणः सूर्यो निम्नगाऽथ महोदधिः।
प्रफुल्लपादपः शाली रोचना कुङ्कुमं मधु॥
लाजाः सिद्धार्थका बीजं नवभाण्डं च पायसम्।
उपासन्नोऽप्यथाचार्यो गायत्री च वशं गता॥
सर्वे स्वप्ने शुभाः प्रोक्ताः सिद्धिमोक्षफलप्रदाः।

(नारदीये)

ग्रहणं तु परस्त्रीणामगम्यागमनं तथा।
दंशनं श्वेतनागेन बन्धनं शृङ्खलादिभिः॥
रोदनं ताडनं चैव धावनं चाङ्गघातनम्।
मृल्लोहत्रपुकांस्यस्य शीसकस्यापि कुत्सितात्॥
धातोर्लाभस्तथा पुष्पं फलरत्नावुभावपि।
व्यजनं स्वयमन्येन धमनं च विभावसोः॥
एवमादीनि चान्यानि शुभान्याहुर्मनीषिणः।

(मेरुतन्त्रे)

पूर्णकुम्भो दर्पणं च मीनमाज्यं च रोचना।

शवं रोदनहीनं च शस्त्राणि च पताकिका ॥
भारद्वाजो नृपालश्च वेदशब्दश्च गायनम् ।
कशामाङ्गल्यगीतानि चाङ्कुशं यत्नृदः प्रियम् ॥
स्वप्ने दृष्टानि चैतानि साधकः सिद्धिमाप्नुयात्
व्याध्यार्त्ते नास्ति दुःखं स्यात् सामान्यं सुखमाप्नुयात् ।
यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
कामयन्तीं नदीसिन्धुतरणां भ्रमणं च खे ॥
भास्करोदयनं चैव ग्रहणं चन्द्रसूर्ययोः ।
हर्म्यप्रासादनागाश्ववृषशैलाग्निरोहणम् ॥
भोजनं दधिभक्तस्यापक्वमांसस्य भोजनम् ।
कृमिविष्ठानुलेपश्च रुधिरेणाभिषेचनम् ॥
ताम्बूलभक्षणं मद्यपानं बध्याभिवन्दनम् ।
प्रचण्डकिरणः स्वस्थः कार्यसिद्धेस्तु लक्षणम् ॥
श्वेताम्बरधरा नारी श्वेतमाल्यानुलेपना ।
अवगूहति यं स्वप्ने तस्य श्रीः सर्वतो मुखी ॥
आसने शयने पाने शरीरे वाहने गृहे ।
ज्वलमाने विबुध्येत तस्य श्रीः सवतो मुखी ॥
सितोरगस्य दंशश्च जायते दक्षिणे करे ।
दशाहोभिर्भवेल्लाभो रोगी रोगाद्विमुच्यते ॥
निगडैर्बाहुपाशेन बध्यते वा सुतो भवेत् ।
प्रतिष्ठा वर्धते तस्य दुग्धपानाद्धनक्षयः ॥
सुरारक्तं पिबन् विप्रो लभेद्विप्रो धनं परम् ।
दधि दृष्ट्वा भवेत् प्रीतिर्गोधूमैश्च धनागमः ॥

सिद्धाविष्टागमं विद्यालाभः सिद्धार्थकैस्तथा ।
दधिलाभाद्भवेदर्थो घृतलाभाद्भवेज्जयः ॥
घृताशनाद्धनक्लेशो जयस्तु दधिभक्षणे ।
लिङ्गाद्यभ्यर्चनं दृष्ट्वा व्यवहारे जयो भवेत् ॥
यस्तु मध्ये तडागादेर्भुञ्जीत घृतपायसम् ।
निष्कम्पपुष्करे पत्रे तं विद्यात् पृथिवीपतिम् ॥
देवतालिङ्गिनो गावः पितरो ब्राह्मणा नृपाः ।
यद्वदन्ति नरं स्वप्ने तत् तथैव भविष्यति ॥
अन्त्रैः संवेष्टयेद्यस्तु ग्रामं नगरमेव वा ।
ग्रामे मण्डलराज्यं स्यान्नगरे पार्थिवो भवेत् ॥
चन्द्रताराऽर्कग्रसनं परिमार्गणमेव च ।
भूम्यम्बुधीनां ग्रसनं शत्रूणां च वधक्रिया ॥
जयो विवादद्यूतेषु शत्रूणां च तथा जयः ।
वडवामहिषीसिंहीगोहस्तिन्यादिदोहनम् ॥
प्रसादो गुरुविप्रेष्टदेवसिद्धादिकाच्छुभः ।
स्नानं राज्याभिषेकश्च स्वशिरश्छेदनं मृतिः ॥
तीर्थोदकानां तरणं तथा विषमलङ्घनम् ।
गोहस्तिवडवासूतिवह्निलाभस्तथैव च ॥
परस्त्र्यालिङ्गनं तस्या लाभो रोदनमेव च ।
विष्ठालेपः कुन्दजातीवकुलक्ष्मेशदर्शनम् ॥
रणद्यूतिविमर्देषु जयो निगडबन्धनम् ।
पशुमर्त्यमृगाणां च लब्धिरध्यसनं तथा ॥
शिखिलाभः श्वेतवस्त्रपुष्पचन्दनधारणम् ।

मणितारसुवर्णादिपात्रे भोजनकं यदा ॥
पश्येत् तदा साधकस्य ज्ञेया सिद्धिरुपस्थिता ।
कार्यार्त्तानां कार्यसिद्धिरितरेषां धनागमः ॥

अथाशुभस्वप्नाः ।

कृष्णाम्बरधरा नारी कृष्णगन्धानुलेपना ।
अवगूहति यं स्वप्ने सा रात्रिस्तस्य पश्चिमा ॥
एवं तु रक्तया व्याधिः शोकोऽरुणसमानया ।
नीलया कलहो हत्या पीतया कीरया विपत् ॥

तथा ।

बन्ध्याचर्मतुषास्थ्यादिलवणाङ्गारमिन्धनम् ।
विट्क्लीबोन्मत्ततैलानि जटिलारिवनौषधम् ॥
रोगी तृणं च संन्यासी नग्नोऽभ्यक्तः क्षुधाऽऽतुरः ।
विमुक्तकेशः पतितो व्यङ्गासृक् शरटाचतम् ॥
मार्जारयुद्धं कार्पासो गर्भिणी च रजस्वला ।
गुडस्तक्रं च काषायी पङ्कं रण्डा कलिर्गृहे ॥
वस्त्रादिकस्य स्खलनं लुलापसमरं तथा ।
अन्धः कुब्जो दुर्वचनो बधिरः खञ्जकुब्जकौ ॥
वमनं च घटो रिक्तो रजकी मलिनाम्बरा ।
एतैर्दृष्टैर्न कार्यं स्याद्रोगी मृत्युमवाप्नुयात् ॥
अशोकं करवीरं च पलाशं वाऽपि पुष्पितम् ।
स्वप्नेऽपि सलिलं दृष्ट्वा नरः शोकमवाप्नुयात् ॥
रूपान्तरप्रवेशश्च दक्षिणाशागतिस्तथा ।
पङ्के निमज्जनं स्नानं पुत्रभार्याविनाशदम् ॥
गाहास्तीव्रजेदर्वीदिवर्ज्यं कृष्णं न शोभनम् ।

कर्पासभस्मास्थ्यादीनि त्यक्त्वा भुक्तं शुभावहम् ॥
रक्तगन्धाम्बरस्रग्वी कृष्णो वा दक्षिणामुखः ।
खरोष्ट्रमहिषारूढस्त्रिमासं न स जीवति ॥
श्वभ्रे वा पतनं गेहे द्वारं चास्य पिधीयते ।
न चोत्तिष्ठति यस्तस्मात् तदब्दं तस्य जीवितम् ॥
वान्तिर्मूत्रं पुरीषं च सन्तानजननं च्युतिः ।
शुक्रस्य पश्येद्यः स्वप्ने तस्यायुर्दशमासिकम् ॥
ताड्यते विकृतैः कृष्णैः पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताड्यते वाऽपि तस्य मृत्युर्न संशयः ॥
महिषोष्ट्रखरारूढस्तैलाभ्यक्तश्च मुण्डितः ।
दक्षिणाशां प्रस्थितो यस्तस्य मृत्युर्न संशयः ॥
पश्येत् प्रासादपतनं गृहस्य शशिसूर्ययोः ।
पर्वतानां च वृक्षाणामधिकाच्च्युतिर्भवेत् ॥
हानिश्चैव स्वगोत्राणां व्याधिनाऽभिभवस्तथा ।
गृहसंमार्जनं लेपो गोमयेन मृदाऽपि वा ॥
तीर्त्वा नदीं समायातस्तीरेऽन्यद्वसनं धृतम् ।
रोगी रोगाद्विमुच्येत हानिः स्वस्थस्य जायते ॥
पुंनामानो मृगखगाः पोतकी शुकरी रला ।
पिङ्गला छुच्छुका पल्ली वामाङ्गे कोकिला शिवा ॥
स्त्रीनामानो मृगखगाः श्रीकण्ठो वानरो रुरुः ।
छिक्करः पिप्पलो भासो दक्षे काकर्क्षकुक्कुटाः ॥
दृष्टाश्चेद्रोगिणो रोगनाशः साधकसिद्धये ।
स्वस्थस्य चोद्यमाल्लाभो दिग्व्यत्यासान्न शोभनम् ॥

अथ स्वप्ननिवेदनम् ( निबन्धे )

शिष्यस्य शुचिराचान्तः पुष्पहस्तो गुरूत्तमः

प्रणम्य शिरसा हृष्टस्तस्मै स्वप्नं निवेदयेत् ॥

स्वप्ने चाक्षिसमक्षं वा आश्चर्यमपि हर्षदम् ।

अकस्माद्यदि वा पश्येन्नाख्यातव्यं गुरोर्विना ॥

अथ दुःस्वप्नशान्तिः ( महाकपिलपञ्चरात्रे )

दृष्ट्वा दुःस्वप्नकं चैव होमात् सिद्धिमवाप्नुयात् ।

( पिङ्गलामते )

शुभे शुभं भवेत् तस्य जुहुयादशुभे शतम् ।

अस्त्रेणेति क्रमाद्विद्वान् .... .... .... इति ॥

(मेरुतन्त्रे )

सक्षीराणां घृताक्तानां समिधां च शतं हुनेत् ।

पलाशानां तु गायत्र्या शूद्रः स्नात्वा हविष्यभुक् ॥

दीपं दद्याद्विप्रगृहे विष्णोर्गेहे शिवालये ।

एवं दृष्ट्वाऽशुभं स्वप्नं गृह्णीयान्मनुमन्यथा ॥

गृहीते हानिरेव स्याद्वाऽन्यदेवं विचिन्तयेत् ।

( नारदपञ्चरात्रे )

दृष्ट्वा समाचरेद्धोमं दन्तकाष्ठोदितं *मुने ।

केवलेनाथ वाऽऽज्येन सिंहमन्त्रेण शान्तये ॥

अस्त्रमन्त्रगायत्रीसिंहमन्त्राणां विकल्पः । तारावज्रनखं दंष्ट्रायुधाय महासिंहाय हुँफट् नमः । सिंहस्य मनुरिति ( मेरौ प्रोक्तः )

अथ दीक्षादिनकृत्यम् ( मेरुतन्त्रे )

समुत्थायोषसि पुनः सन्ध्यास्नानादिकं चरेत् ।

गुरुः शिष्यो ऋत्विजश्च गच्छेद्यागगृहं प्रति ॥

सर्वे ते स्वस्वकुण्डेषु जुहुयुः सघृतैस्तिलैः ।

पुनः साध्येन मनुना ह्यष्टोत्तरसहस्रकम् ॥

---

* तथा दन्तधावनम् । [ जातीतगरमन्दारैर्दुःस्वप्नं च विनश्यति । ] इति ३ पुस्तके उपलभ्यते ।

द्रव्यैर्विधानप्रोक्तैर्वा हुनेदष्टाधिकं शतम् ।

(श्रीभविष्ये)

आहुतिस्तु घृतादीनां स्रुवेणाधोमुखेन च ।
हुनेत् तिलाद्याहुतीश्च दैवेनोत्तानपाणिना ॥

(वायवीयसंहितायाम्)

स्रुवेणाज्यं समित्याद्यं स्रुचा शेषं करेण वा ।
तत्र दिव्येन होतव्यं तीर्थेनार्षेण वा तथा ॥

(महाकपिलपञ्चरात्रे)

अप्रदीप्तेन होतव्यं मध्यमेनाप्यनिन्धिते ।
प्रदीप्ते लेलिहानाग्नौ होतव्यं कर्मसिद्धये ॥

(बह्वृचपरिशिष्टेऽपि)

अधोमुखः सधूमे तु जुहुयाद्यो हुताशने ।
यजमानो भवेदन्धः सपुत्र इति च श्रुतिः ॥

(छन्दोगपरिशिष्टेऽपि)

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चोपजायते ॥

(त्रिपुरासारे)

अग्नेः कर्णे होमतो व्याधिवाधा
नेत्रेऽन्धत्वं नासिकायामव्याधिः ।
द्रव्यच्छेदो मस्तके स्यान्मुखान्त-
र्होमं कुर्यात् तेन नित्यं विपश्चित् ॥

तन्त्रान्तरे ।

यतः काष्ठं ततः श्रोत्रं यत्र धूमोऽत्र नासिका ।
यत्राल्पज्वलनं नेत्रं यत्राङ्गारस्ततः शिरः ॥
यत्र प्रज्वलिता ज्वाला जिह्वा सा जातवेदसः ।

अन्यत्रापि ।

सधूमोऽग्निः शिरो ज्ञेयं निर्धूमश्चक्षुरेव च ।
ज्वलत्कृशो भवेत् कर्णः काष्ठलग्नस्तु नासिका ॥
अग्निर्ज्वालांथते यत्र शुद्धस्फटिकसन्निभः ।
तन्मुखं तत्र विज्ञेयं चतुरङ्गुलमानतः ॥

(नवदुर्गाकल्पे) ।

यत्र काष्ठं तत्र श्रोत्रे यत्र धूमस्तु नासिके ।
यत्राल्पज्वलनं नेत्रं यत्र भस्म तु तच्छिरः ॥
यत्रैव ज्वलितो वह्निस्तत्र जिह्वा प्रकीर्त्तिता ।

( शारदायाम )

वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः ।
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥

तथा ।

स्वर्णसिन्दूरबालार्ककुङ्कुमक्षौद्रसन्निभः ।
सुवर्णरेतसो वर्णः शोभनः परिकीर्त्तितः ॥
भेरीवारिदहस्तीन्द्रध्वनिर्वह्नेः शुभावहः ।
नागचम्पकपुन्नागपाटलायूथिकानिभः ॥
पद्मेन्दीवरकह्लारसर्पिर्गुग्गुलुसन्निभः ।
पावकस्य शुभो गन्ध इत्युक्तस्तन्त्रवेदिभिः ॥
प्रदक्षिणास्त्यक्तकम्पाश्छत्राभाः शिखिनः शिखाः ।
शुभदा यजमानस्य राज्यस्यापि विशेषतः ॥
कुन्देन्दुधवलो धूमो वह्नेः प्रोक्तः शुभावहः ।
कृष्णः कृष्णगते वर्णो यजमानं विनाशयेत् ॥
श्वेतो राज्यं निहन्त्याशु वायसस्वरसन्निभः ।
खरस्वरसमो वह्नेर्ध्वनिः सर्वविनाशकृत् ॥

पूतिगन्धो हुतभुजो दोतुर्दुःखप्रदो भवेत् ।
छिन्नवृत्तां शिखां कुर्यान्मृत्युं धनपरिक्षयम् ॥
शुकपक्षनिभो धूमः पारावतसमप्रभः ।
हानिं तुरगजातीनां गवां च कुरुते सदा ।
एवं विधेषु दोषेषु प्रायश्चित्ताय देशिकः ॥
मूलेनाज्येन जुहुयात् पञ्चविंशतिमाहुतिम् ।

( त्रिपुरासारसमुच्चये )

वस्वधिकं शतमाज्यैर्जुहुयाच्छान्तिकममीषु दोषेषु ।
अस्त्रेण साधकेन्द्रस्तनुयादथ चक्रपूजां च—इत्युक्तम् ।

( शारदायाम् )

ततः सुधौतं दन्ताद्यं स्नातं शिष्यं समाहितम् ।
पाययित्वा पञ्चगव्यं कुण्डस्यान्तिकमानयेत् ॥

( प्रयोगसारेऽपि )

पञ्चगव्यं यथाप्रोक्तं पीत्वाऽऽचान्तं यथाविधि ।
द्वारेण दक्षिणेनाथ यागस्थानं प्रवेशयेत् ॥

( शारदायाम् )

विलोक्य दिव्यदृष्ट्या तं तच्चैतन्यं हृदम्बुजात् ।
गुरुरात्मनि संयोज्य कुर्यादध्वविशोधनम् ॥

तन्त्रान्तरे ।

हृदि स्थितं तच्चैतन्यं प्रस्फुरत्तारकाकृतिम् ।
आदाय स्थापयेत् स्वीये हृदयेऽङ्कुशमुद्रया ॥

(षडन्वयमहारत्ने )

शोधनं नाम तत्त्वानां कारणैकत्वचिन्तनम् ।
वर्णादीनां कलानां च तस्यां चिदैक्यचिन्तनम् ॥

( शारदायाम् )

उक्तं कलाध्वा तत्त्वाध्वा भुवनाध्वेति च त्रयम् ।
वर्णाध्वा च पदाध्वा च मन्त्राध्वेति परं त्रयम् ॥

( वायवीयसंहितायाम् )

तत्र शाब्दास्त्रयोऽध्वानस्त्रयस्त्वार्थाः समीरिताः ।

तन्त्रान्तरे ।

मन्त्राध्वा च पदाध्वा च वर्णाध्वेति च शब्दतः ।
भुवनाध्वा च तत्त्वाध्वा कलाध्वा चार्थतस्तथा ॥

अत्र तु संहारक्रमेणोक्तिः । (शारदायाम् ) सृष्टिक्रमणेति ज्ञेयम् ।

( मेरुतन्त्रे )

शिष्यस्य पादयोश्चिन्त्या गुरुणा तु कला इमाः ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ॥
शान्त्यतीतेति पश्चाथ शोधनक्रम उच्यते ।
कूर्चेन च गुरुः शिष्यं स्पृशन् कुण्डे स्वके हुनेत् ॥
तिलैर्घृताक्तैस्ताराद्यममुकाध्वानमत्र च ।
शोधयामि द्विठान्तेन मन्त्रेणाष्टाहुतीर्हुनेत् ॥
तत्त्वाध्वनि विलीनं तु कलाध्वानं विचिन्तयेत् ।
ततो लिङ्गप्रदेशे तु तत्त्वान्येतानि चिन्तयेत् ॥
गाणेशानि च शैवानि तत्रैतानि रसाग्नयः ।
तद्यथा शिवशक्ती च सदाशिवमहेश्वरौ ।
विद्येति पञ्चशुद्धानि शुद्धाशुद्धानि सप्त च ॥
माया विद्या कला रागः कालो नियतिरेव च ।
पुरुषश्चाथ शुद्धानि प्रकृतिर्बुद्ध्यहङ्कृती ॥
मनश्चेन्द्रियदशकं तन्मात्राभूतपञ्चकम् ।

शुद्धानीति । आणवकार्मणमायीयाख्यमलत्रयरहितानीत्यर्थः । तत्राणवो नाम सदाशिवत्वेन स्वस्यानावमर्षः । कार्मणो नाम पुण्यपापवानहमिति प्रतीतिः

मायीयो नामाहङ्कारादावात्मत्वबुद्धिः । शुद्धशुद्धानीति । कारणत्वेन मलत्रयराहित्याच्छुद्धानि । कार्यरूपत्वेन तद्युक्तत्वादशुद्धानीत्यर्थः ।

अथ वैष्णवतत्त्वानि द्वात्रिंशत्प्रमितानि तु ।
जीवः प्राणो मनो बुद्धिस्तन्मात्रा भूतपञ्चकम् ॥
दशेन्द्रियाणि हृत्पद्मं सूर्यसोमाग्नयस्तथा ।
वासुदेवः संकर्षणश्च प्रद्युम्नश्चानिरुद्धकः ॥
सौराणि भूततन्मात्रामनोगर्वेन्द्रियाणि च ।
प्रकृतिर्बुद्धिरिति च चतुर्विंशतिसंमितम् ॥

(शारदायाम्)

निवृत्त्याद्याः कलाः पञ्च ततो विन्दुः कला पुनः ।
नादः शक्तिः सदापूर्वशिवश्च प्रकृतेर्विदुः ॥
आत्मविद्या शिवः पश्चाच्छिवो विद्या स्वयं पुनः ।
सर्वतत्त्वं च तत्त्वानि प्रोक्तानि त्रिपदात्मनः ॥
तत्त्वाध्वा कथितो ह्येष तत्तदागमवेदिभिः ।

(मेरुतन्त्रे)

दशैव शक्तितत्त्वानि आत्मविद्या शिवा इति ।
शिवाविद्या तथाऽऽत्मेति चात्मविद्या शिवा पुनः ॥
सर्वतत्त्वं चेति पुनः प्राग्वदूहेन होमयेत् ।
तत्त्वाध्वानं विलीनं तु चिन्तयेद्भुवनाध्वनि ॥
शिष्यस्य नाभौ चिन्त्यानि भुवनानि चतुर्दश ।
तानि क्रमेण पातालरसातलमहातलम् ॥
तलातलं च सुतलं वितलं चातलं च भूः ।
भुवश्च स्वर्महश्चापि जनस्तप इति क्रमात् ॥
सत्यं च भुवनाध्वानं होमाद्यूहस्तु पूर्ववत् ।
विलीनं भुवनाध्वानं वर्णाध्वनि विचिन्तयेत् ॥

अकारादिक्षकारान्तान् वर्णान् संचिन्तयेद्धृदि ।
वर्णाध्वानं विलीनं तु पदाध्वनि विचिन्तयेत् ॥
होमोहौ प्राग्वदेवात्र ललाटे चिन्तयेत् ततः ।
पदाध्वानं मूलमन्त्रपदवर्णस्वरूपकः ॥
पदाध्वाऽत्रोहहोमादि प्राग्वदेव समाचरेत् ।
मन्त्राध्वनि विलीनं तु पदाध्वानं विचिन्तयेत् ॥
संपूर्णमन्त्रो मन्त्राध्वा चिन्तयेच्छिष्यमूर्धनि ।
होमोहः प्राग्वदेवात्र विलीनोऽ*हं परे शिवे ॥
ब्रह्मरन्ध्रस्थिते ध्यायेदतः स्यादध्वशोधनम् ।
सृजेत् सृष्ट्या विलीनान्ताच्छिवान्ताच्च गुरूत्तमः ॥
देशिकेन्द्रश्च तं शिष्यं दृष्ट्वा दृष्ट्या च दिव्यया ।
तच्चैतन्यस्थितं तस्मिँस्तस्मिन्नेव च योजयेत् ॥
( शारदायामपि )
.... .... .... क्रमात् तान् विलयं नयेत् ।
शिवे शिवान्तान् संलीनान् जनयेत् सृष्टिमार्गतः ॥
विलोकयन् दिव्यदृष्ट्या तं शिशुं देशिकोत्तमः ।
आत्मस्थितं तच्चैतन्यं पुनः शिष्ये नियोजयेत् ॥
( क्रियासंग्रहे )
शूद्रसङ्करजातीनां नाध्वशुद्धिर्विधीयते ।
पादोदकप्रदानाद्यैः कुर्यात् पापविमोचनम् ॥
मूलेन दशधा हुत्वा चैकैकामाहुतिं ततः ।
हुत्वाऽऽवरणदेवेभ्यस्ततः पूर्णाहुतिं चरेत् ॥
( शारदायाम् )
स्रुचा पूर्णाहुतिं दत्वा मूलमन्त्रेण देशिकः ।

* विलीनोऽयमिति २ पु० पा.

( वायवीयसंहितायाम् )

ततो होमावशिष्टेन घृतेनापूर्य वै स्रुचम् ।
निधाय पुष्पं तस्याग्रे स्रुवेणाधोमुखेन ताम् ॥
सदर्भेण समाच्छाद्य मूलेनाञ्जलिनोत्थितः ।
वौषडन्तेन जुहुयाद्धारां जवसमन्विताम् ॥

(मेरुतन्त्रे)

सर्पिषा स्रुचमापूर्य पुष्पं चोपर्यधोमुखम् ।
स्रुगुपरि स्रुवं दत्वा पुष्पं तत्र प्रपातयेत् ॥
सव्योत्तरकराभ्यां च संपुटाभ्यां च शङ्खवत् ।
संगृह्योत्थाय संलग्नौ नाभौ तिर्यङ्निधाय च ॥
पूर्णा दर्वीति मन्त्रेण मूलेन च सुसंयतः ।
दद्यात् पूर्णाहुतीस्तिस्रः सर्वकामप्रपूरणीः ॥
श्रोत्रियस्यैतदुद्दिष्टमन्यः पूर्णाहुतिं चरेत् ।
मूलेन वौषडन्तेन स्वाहान्तेन तु वामतः ॥

(अग्निपुराणे)

मूर्धानं दिवमन्त्रेण संश्रवेण च धारया ।
दद्यादुत्थाय पूर्णां तु नोपविश्य कदा चन ॥

(हयशीर्षपञ्चरात्रे)

हुत्वा च हविषा दद्यात् स्रुचा पूर्णाहुतित्रयम् ।
वौषडन्तेन मन्त्रेण .... .... .... .... इति ॥

( नारदपञ्चरात्रे)

अभावे तु घृतस्यैव होमद्रव्येण पूरयेत् ।
तस्योपरि घृतं दद्यात् तदूर्ध्वं कुङ्कुमादिकम् ॥

( तूर्णायागे )

मूलं नमोन्तमुच्चार्य वामपादपुरःसरम् ।

दद्यात् पूर्णाहुतीर्मन्त्री परामृतधिया ततः ॥

(मेरुतन्त्रे)

दक्षपादं पुरस्कृत्य दक्षः पूर्णाहुतिं चरेत् ।
शक्तिहोमे वामपादं वाममार्गी च सर्वतः ॥

(गौतमीयतन्त्रे)

स्रुक्स्रुवौ तु समादाय घृतेनापूर्य तत् पुनः ।
होमद्रव्याणि निःक्षिप्य नाभौ संस्थाप्य तौ पुनः ॥
ब्रह्मार्पणेन मनुना दद्यात् पूर्णाहुतिं पुनः ।
इतः पूर्वं प्राणबुद्धिं देहे धर्माधिकारतः ॥

जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं तत् सर्वं ब्रह्मार्पणं भवतु स्वाहा ।

ब्रह्मार्पणमनुः सोऽयं ब्रह्मार्पणविधौ स्मृतः ।
एवं होमविधिं कृत्वा कुण्डस्थण्डिलदेवताः ॥
दिक्पालदेवताश्चापि अङ्कुरार्पणदेवताः ।
आनयेत् कलशे चापि कृष्णैक्यं भावयेद्गुरुः ॥

कृष्णेति प्रकृताभिप्रायेण ।

(मेरुतन्त्रे)

पुनः संपूज्य गन्धाद्यैर्मूलमन्त्रेण मन्त्रवित् ।
कुण्डादुद्वास्य चाचार्यो देवतां कलशे न्यसेत् ॥

(शारदायाम्) ।

उद्वास्य देवतां कुम्भे साङ्गां सावरणां गुरुः ।
पुनर्व्याहृतिभिर्हुत्वा जिह्वादीनां विभावसोः ॥
एकैकामाहुतिं दत्वा परिषिञ्च्याद्भिरात्मनि ।
पावकं योजयित्वा स्वे परिधीन् सपरिस्तरान् ॥
नैमित्तिके दहेन्मन्त्री नित्ये तु न दहेदिमान् ।

व्याहृतिभिर्महाव्याहृतिभिः ।

पुनः समापयेद्धोमं महाव्याहृतिपूर्वकम्—इति वचनात् ।

तत्प्रकारस्तु (गौतमीये)

पूर्णाहुतिं ततो दद्यादद्भिश्चैवं विधानवित् ।
ॐभूरग्नये पृथिव्यै च महते स्वाहया तथा ॥
भुवो वायवे चान्तरिक्षाय महते स्वाहया तथा ।
स्वश्चन्द्रमसे दिग्भ्यश्च नक्षत्रेभ्यश्च स्वाहा ॥

ॐभूर्भुवःस्वश्चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यश्च महते स्वाहा। पावकं योजयित्वेति।

तत्प्रकारस्तु (गणेश्वरविमर्षिण्याम् )

भो भो वह्ने महाशक्ते सर्वकर्मप्रसाधक ।
कर्मान्तरेऽपि संप्राप्ते सान्निधिं कुरु सादरम् ॥
इति मन्त्रेण संप्रार्थ्य वह्निमुद्वासयेदपि—इति ।

( मेरुतन्त्रे )

ततो ब्रह्माणमुद्वास्य ब्राह्मणाय प्रदापयेत् ।
द्वात्रिंशत्पलमानेन निर्मितं ताम्रपात्रकम् ॥
तण्डुलैस्तत् समापूर्य सहिरण्यं सदक्षिणम् ।
दद्याद्विप्राय तत्तुष्ट्यै पूर्णपात्रमितीरितम् ॥
ततः परिस्तरानग्नौ परिधीन् निःक्षिपेदिति ।

तन्त्रान्तरे ।

अष्टौ मुष्टिर्भवेत् कुञ्चित् कुञ्चिदष्टौ तु पुष्कलः ।
पुष्कलानि च चत्वारि पूर्णपात्रं तदुच्यते ॥

( शारदायाम् )

नेत्रे शिष्यस्य बध्नीयान्नेत्रमन्त्रेण वाससा ।

(महाकापिलपञ्चरात्रे)

नवेन शुक्लवस्त्रेण नेत्रे बद्ध्वा .... .... इत्युक्तम् ।

( पिङ्गलामते )

नेत्रवस्त्रेण तन्नेत्रे नेत्रमन्त्रेण बन्धयेत् ।

( शारदायाम् )

करे गृहीत्वा तं शिष्यं कुण्डतो मण्डलं नयेत् ।

तस्याञ्जलिं पुनः पुष्पैः पूरयित्वा यथाविधि ॥

कलशे देवताप्रीत्यै क्षेपयेन्मूलमुच्चरन् ।

( नारायणीये )

न्यासं शिष्यतनौ कृत्वा तं प्रदक्षिणमानयेत् ।

पश्चिमं द्वारमानीय क्षेपयेत् कुसुमाञ्जलिम् ॥

( मेरुतन्त्रे )

नेत्रबन्धमपास्यैवं वेशयेत् कुशसंस्तरे ।

ततश्च पाठयेच्छिष्यं मन्त्रमेनं गुरूत्तमः ॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।

चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

( पिङ्गलामते )

पुष्पैरञ्जलिमापूर्य योगपीठे प्रदापयेत् ।

पश्चिमोत्तररुद्रेन्द्रैः पुष्पपातः शुभः शुभे ॥

आत्मयागः क्रमाद्भूयः संहृत्योत्पाद्य देशिकः ।

तत्तन्मन्त्रोदितान् न्यासान् कुर्याद्देहे शिशोस्तदा ॥

आत्मयागो भूतशुद्धिः ।

( प्रयोगसारे )

गुणांशेन पृथिव्यादिभूतानि विलयं नयेत् ।

यथावत् पिण्डसंस्थानि संहारक्रमयोगतः ॥

ततः सृष्टिक्रमेणैव पिण्डं संभावयेत् तदा ।

(मन्त्रतन्त्रप्रकाशे )

उपविश्यासने शुद्धे संहरेत् तस्य विग्रहम् ।

गन्धादिघ्राणसंयुक्तां पृथिवीमप्सु संहरेत्—इत्यादि ॥

( शारदायाम् )

पञ्चोपचारैः कुम्भस्थां पूजयित्वेष्टदेवताम् ।
तस्यां तन्त्रोक्तमार्गेण विदध्यात् सकलीकृतिम् ॥

एतदन्तरं देवसकाशाद्वरप्रार्थनमुक्तमाचार्यैः ।

कारुण्यनिलये देवि सर्वसन्निधिसंश्रये ।
शरण्ये वत्सले मातः कृपामस्मिन् शिशौ कुरु ॥
आणवप्रमुखैः पाशैः पाहि तस्य सुरेश्वरि ।
दीनस्यास्य दयाधारे कुरु कारुण्यमीश्वरि ॥
ऐहिकामुष्मिकैर्भोगैरपि संबध्यतामसौ ।
स्वभक्तिः सकला चास्मै दीयतां निष्कलाश्रये—इति ॥

( क्रियासंग्रहमेरुतन्त्रयोः )

ततोऽर्घ्यपात्रमादाय मूलमुच्चार्य मन्त्रवित् ।
साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ॥
तत् सर्वं देवदेवेश गृहाणाराधनं परम् ।
इत्यर्घोदकमुत्सृज्य किंचिद्देवस्य दक्षिणे ॥
करे समर्पयेद्विद्वान् कृतमाराधनं ततः ।
भक्त्या प्रणम्य देवेशं श्लोकैरेभिः क्षमापयेत् ॥
यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।
निवेदितं च नैवेद्यं तद्गृहाणानुकम्पया ॥
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चापि न जानामि त्वं गतिः परमेश्वर ॥
कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ।
अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर ॥

( मेरुतन्त्रे )

उद्वासयेत् ततो देवं परिवारगणैः सह ।

तथा ।

देवस्याङ्गे विलीनं तद्रश्मिवृन्दमशेषतः ।
तेजोरूपं शिवं ध्यात्वा क्षमस्वेति पुनः पुनः ॥
क्षमाप्यारोपयेत् स्वीयहृदम्भोजे तु देवताम् ।

( क्रियासंग्रहे )

देवतारूपमात्मानं पूजयित्वा विधानतः ।
अर्घ्यादिकं विसृज्याथ यजेन्निर्माल्यवासिनम् ॥
ऐशान्यां मण्डलं कुर्याद् द्वारपद्मविवर्जितम् ।
निर्माल्यभोक्तुः पूजार्थं पञ्चायतनपूजने ॥
कर्त्तव्यानि तु पञ्चैव ईशादामध्यमर्चयेत् ।
लम्बोदरो गणेशस्य तेजश्चण्डो विवस्वतः ॥
विष्वक्सेनो हरेः प्रोक्तश्चण्डेश्वरो महेशितुः ।
चण्डेश्वरी भवान्यास्तु मन्त्रोऽहं तादृशं चरेत् ॥
लेह्यचोष्यान्नपानादि निर्माल्यं स्रग्विलेपनम् ।
निर्माल्यभोजिने तुभ्यं ददामि श्रीशिवाज्ञया ॥
इति नैवेद्यशेषं तु दत्वा नत्वा विसर्जयेत् ।

तथा ।

निर्माल्यं मस्तके धार्यं मूलमन्त्रेण मन्त्रिणा ।

( प्रयोगसारे )

अथैशान्यां दिशि यथामन्त्रविन्यस्तविग्रहम् ।
पीठस्य चतुरस्रायां वेद्यां दर्भाग्रपाणिना ॥
अभिषिञ्चेत् स्वकं शिष्यमात्मतत्त्वानुवर्त्तिनम् ।

(सोमशम्भौ)

यागालयादिशीशस्य चरितं स्नानमण्डपे।
कुर्यात् करद्वयायामां वेदीमष्टाङ्गुलोच्छ्रयाम्॥
श्रीपर्णाद्यासने तत्र विन्यस्यानतमासने।
शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत्॥

तत्रैव।

स्नानं तूदङ्मुखं भुक्तौ पूर्ववक्त्रश्च मुक्तये।

अन्यत्रापि।

मण्डलं त्वीशदिक् कृत्वा मुमुक्षूंस्तूत्तराननान्।
भुक्तये पूर्ववक्त्रांश्च शिष्यांस्तत्र निवेशयेत्॥

(शारदायाम्)

नदत्सु पञ्चवाद्येषु सार्धं विप्राशिषा गुरुः।
विधिवत् कुण्डमुद्धृत्य तन्मुखस्थान् सुरद्रुमान्॥
शिशोः शिरसि विन्यस्य मातृकां मनसा जपन्।
मूलेन साधितैस्तोयैरभिषिञ्चेत् तमात्मवित्॥

मातृकां विलोममातृकाम्।

क्षाद्यैरान्तैर्वर्णैरभिपूर्णतत्त्वत्रिरुक्तमन्त्राद्यैः।

इति (क्रमदीपिका-) वचनात्।

शिष्यशिरसि संयोज्य विलोममातृकां जपन्।
मूलमन्त्रं तथा जप्त्वा कुर्याद्देवाभिषेचनम्॥

इति (गौतमीयतन्त्र-) वचनाच्च।

तथा।

पूजितां पुनरादाय वर्द्धिनीमस्त्ररूपिणीम्।
तस्याः सुसाधितैस्तोयैः सिञ्चेद्रक्षार्थमञ्जसा॥
अवशिष्टेन तोयेन शिष्यमाचामयेद्गुरुः।
ततस्तं सकलीकृत्य देवतात्मानमात्मवित्॥

उत्थाय शिष्यो विमले वाससी परिधाय च ।
आचम्य वाग्यतो भूत्वा निषीदेत् सन्निधौ गुरोः ॥
देवतामात्मनः शिष्ये संक्रान्तां देशिकोत्तमः ।
पूजयेद्गन्धपुष्पाद्यैरैक्यं संभावयँस्तयोः ॥
दद्याद्विद्यां ततस्तस्मै विनीतायाम्बुपूर्वकम् ।

(वशिष्ठसंहितायाम्)

ततस्तच्छिरसि स्वस्य हस्तं दत्वा शतं जपेत् ।
अष्टोत्तरशतं वाऽपि दद्यादुदकपूर्वकम् ॥

(गौतमीये)

न्यासजालं तस्य देहे गुरुः संन्यस्य यत्नतः ।
दक्षकर्णे वदेन्मन्त्रं त्रिवारं पूर्णमानसः ॥

(मेरौ)

दक्षकर्णे वदेद्विद्वान् विप्रायोदकपूर्वकम् ।
अन्येभ्यस्तु वदेदेवमेव मन्त्रं विचक्षणः ॥

(कुलामृते)

विद्यां त्रिः कथयेत् कर्णे चाविज्ञाने च वा पुनः ।

(दीपिकायाम्)

ऋष्यादियुक्तमथ मन्त्रवरं यथावद्-
भूयस्त्रिशो गुरुरनर्घ्यमवामकर्णे ।

अन्यत्रापि ।

दक्षकर्णे त्रिशो विद्यामेकोच्चारेण चोच्चरेत् ।
एष विधिर्द्विजातीनां स्त्रीशूद्राणां च वामतः ॥

तन्त्रान्तरे ।

अनयोस्तुल्यफलदो भवत्येवमुदीरयेत् ।
प्रसन्नवदनस्तस्मै शिष्याय मुनिपुङ्गवः ॥

( मेरुतन्त्रे )

स्वतो ज्योतिर्मयीं विद्यां गच्छन्तीं भावयेद्गुरुः ।
आगतां भावयेच्छिष्यो नतोऽस्मीति विशेषतः ॥
अष्टोत्तरशतं शिष्यः प्रजपेद्गुरुणोदितम् ।
अष्टाविंशतिवारं वा ह्यष्टकृत्वोऽथवा जपेत् ॥
गुरुदेवात्ममन्त्राणामैक्यं शिष्यो विभावयेत् ।
प्रणामं गुरवे कुर्यात् साधको भक्तिमान् मुहुः ॥

( क्रियासंग्रहे )

पादयोः पतितं शिष्यं तत उत्थापयेद्गुरुः ।
उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचारवान् भव ॥
कीर्त्तिश्रीकान्तिमेधायुर्बलारोग्यं सदाऽस्तु ते ।

( गौतमीये )

गणेशादिमनुं चोक्त्वा समयात् कथयेद्गुरुः ।

गणेशादिमन्त्रदानं पञ्चायतनदीक्षापक्षे ।

(दक्षिणामूर्त्तिसंहितायाम्)

समीपे चक्रराजं च सम्यगभ्यर्च्य देशिकः ।
आद्याक्षरेण संलग्नं सुन्दरं नाम कल्पयेत् ॥
आत्मानं योजयित्वा तु गुरुभिर्मानवैस्ततः ।
स्मर्त्तव्या गुरवः सर्वे सम्यक् प्रणतिपूर्वकम् ॥
भूमौ लिखित्वा विद्यां च सम्यक् पुष्पादिभिर्यजेत् ।
शिष्याय दर्शयेद्विद्यां प्रजप्तां शतधा प्रिये ॥
यदि स्यान्महती प्रीतिः शिष्यस्य प्रणतस्य च ।
तदैकोच्चारमात्रेण दत्तकर्णो जपेत् पराम् ॥

(तन्त्रराजे)

उक्तलक्षणसम्पन्नं शिष्यमाचारभूषणम् ।

पञ्चषट्कूटविद्याभ्यां शोधितं बहुवासरैः॥
कलशैरभिषिञ्च्यामुं श्रीचक्रे संनिवेश्य वै ।
आधारे हृदये मूर्ध्नि चक्रं संचिन्त्य मध्यतः ॥
स्वान्तादावाह्य संस्थाप्य संपूज्य न्याससंयुताम् ।
त्रिशो विद्यां वदेत् कर्णे देव्यात्मापूर्णमानसः ॥
देवतागुरुमन्त्रात्मतत्त्वैक्यं भावयेन्मुदा ।
शतं जपेत् तदग्रस्थो निकटे त्रिदिनं वसेत् ॥
न चेत् संचारिणी शक्तिर्गुरुमेति न संशयः ।
तस्मात् तदन्तिके तस्य पूजादेशादिकृद्वसेत् ॥

( गौतमीये )

त्रिदिनं निवसेद्भक्त्या सिद्धये गुरुसन्निधौ ।
अन्यथा तद्गतं तेजो गुरुमेति न संशयः ॥

(मन्त्रतन्त्रप्रकाशे)

आचार्यादनभिप्राप्तः प्राप्तश्चादत्तदक्षिणः ।
सततं जप्यमानोऽपि मन्त्रः सिद्धिं न यच्छति ॥
सर्वस्वं वा तदर्धं वा वित्तशाठ्यविवर्जिताम् ।
गुरवे दक्षिणां दत्वा ततो मन्त्रग्रहो मतः ॥

(तन्त्रान्तरे)

गोभूहिरण्यं विपुलं गृहक्षेत्रादिकं बहु ।
न चेदर्धं तदर्धं वा तद्दशांशमथापि वा ॥
अक्लेशादन्नवस्त्रादि दद्याद्वित्तानुसारतः ।

(ब्रह्मसंहितायाम्)

अदक्षिणं कृतं कर्म वृथा नारद निश्चितम् ।
वीणां मे दक्षिणां देहि साक्षसूत्रकमण्डलुम् ॥
ततो मन्त्रं गृहाण त्वं यथाविधि महामुने ।

विधिहीनं कृतं कर्म सिद्धिं नैव प्रयच्छति ॥

( गौतमीये )

गुरवे दक्षिणां दद्याद्वित्तार्धं मुक्तितत्परः ।
तदर्धं वा ततो दद्याद्यथाशक्त्याऽथ भक्तितः ॥
वित्तशाठ्यं न कुर्वीत कृतेऽनर्थं समावहेत् ।
गोभूहिरण्यवस्त्रादि गुरवेऽथ निवेदयेत् ॥
गुरुपुत्राय तत्पत्न्यै तच्छिष्येऽपि स्वशक्तितः ।
वस्त्रालङ्करणं दद्याद्राज्यमिष्टं यथारुचि ॥
ऋत्विग्भ्यो दक्षिणां दद्याद्वस्त्रालङ्कारसंयुताम् ।

( मेरुतन्त्रे )

अलङ्कारांश्च वासांसि दद्यादृत्विग्भ्य आदरात् ।
ईश्वरार्पणबुद्ध्या तु द्विजाशीर्भिश्च नन्दितः ॥
प्रदद्याद्गुरवे शिष्यः स्वधनार्धं तदर्धकम् ।
दशांशं वा प्रदद्याच्च वित्तशाठ्यविवर्जितः ॥
गोभूहिरण्यविपिनगृहक्षेत्रादिकं तथा ।
अक्लेशादन्नवस्त्रादि दद्याद्वित्तानुसारतः ॥
प्रकारान्तरमालम्ब्य गुरुं यत्नेन तोषयेत् ।
तदधीनमना नित्यं तच्चिन्तनपरायणः ॥
तत्पादाब्जरजोभूषो भवेत् साधकसत्तमः ।
ततो नानाविधैर्भक्ष्यैर्लेह्यैश्चोष्यैस्तथा परैः ॥
ब्राह्मणान् भोजयेत् सम्यक् प्रदद्याद्भूरिदक्षिणाम् ।

(वायवीयसंहितायाम )

मण्डपं गुरवे दद्याद्यागोपकरणैः सह ।

(नारायणीयमहाकापिलपञ्चरात्रयोः)

मन्त्रं दत्वा सहस्रं वै स्वसिद्ध्यै देशिको जपेत् ।

अन्यत्रापि ।

अष्टोत्तरं सहस्रं स्वशक्तिहीनानवाप्तये जप्यात् ।

( कुलामृते )

दण्डवत् प्रणतं शिष्यं सर्वाचारांश्च शिक्षयेत् ।

स्नानसन्ध्यासदाचारं नित्यं काम्यं तथैव च ॥

मन्त्रसिद्धिप्रकारांश्च शिष्यायाभिवदेद्गुरुः ।

दीक्षादिवसे उपवासो निषिद्धस्तदुक्तम् ( योगिनीतन्त्रे )

मन्त्रं दत्वा गुरुश्चैव उपवासं य आचरेत् ।

महान्धकारे नरके कृमिर्भवति नान्यथा ॥

दीक्षां दत्वा यदा मन्त्री चोपवासं समाचरेत् ।

तस्य देवः सदा रुष्टः शापं दत्वा पुरं व्रजेत् ॥

( बृहत्सिद्धान्तसारे )

हुतशेषं ततः प्राश्य कुक्कुटाण्डप्रमाणकम् ।

चतुर्विधं च नैवेद्यं देवतायै यदर्पितम् ॥

तद्भक्तेभ्यः *प्रदत्वा तद्भुञ्जीयातां यथारुचि ।

गुरुशिष्याविति शेषः ।

( मेरुतन्त्रे )

शैवस्तु शैवनिर्माल्यप्रसादस्याधिकारवान् ।

अन्यो निरयमायाति न दोषः पञ्चसंगमे ॥

स्वयम्भूतीर्थलिङ्गं वा प्रसादं वाऽपि भक्तितः ।

अशैवा वाऽथ शैवा वा मुच्यन्ते पापराशितः ॥

( सिद्धान्तसारे )

दिनत्रयं गुरुकुले स्थित्वा तुर्येऽन्हि देवताम् ।

अर्चयित्वा गृहं गच्छेद्गुर्वाज्ञां शिरसा वहन् ॥

अथ वीरदीक्षायां विशेषः । तत्र भूतशुद्धिमातृकान्यासषोढान्यासादिकं सर्वं गुरुः स्वशरीरे शक्तिशरीरे च विधाय कलशस्थापनं श्रीपात्रादिस्थापनं च कृत्वा

* तान्त्रिकप्रयोगोऽयम् ।

तृतीयागक्रमेण कुण्डगोलोत्थद्रव्यमुत्पाद्य संस्कृत्य मत्स्यमांसादेरपि संस्कारं विधाय वीरपूजाक्रमेण देवतां संपूज्य शिष्याय मन्त्रदानसमये ।

शिष्यहस्ते महेशानि पात्रं दत्वा कुलेश्वरि—इति ।

( वीरचूडामण्यु- ) क्तवीरपात्रम् ।

इदं पवित्रममृतं पीयतां भवभेषजम् ।

पशुपाशसमुच्छेदकारणं भैरवोदितम् ॥

इति ( कुलार्णव- ) क्रमेण शिष्यहस्ते दद्यात् ।

शिष्योऽप्यनेनैव मन्त्रेण पीयतामित्यत्र पिबामीति पठित्वा—

धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा ।

सुषुम्णा वर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥

इत्यादिमन्त्रेण पिबेत् । ततो गुरुर्मन्त्रं दद्यात् ।

तत्र (यामले)

ऋष्यादिसहितामेनां लिखित्वा भूमिमध्यगाम् ।

पुष्पादिना समभ्यर्च्य शिष्यायाथ प्रदर्शयेत् ॥

यदि शिष्ये महाप्रीतिस्तदा कर्णे वदेद्गुरुः ।

ततोऽप्यतितरां शिष्यो गुरोश्चेत् प्रीतिभाजनम् ॥

तदा गण्डूषपूर्वं हि दद्यादेनां गुरूत्तमः ।

निर्विकल्पोऽपि शिष्यस्तां गृह्णीयाद्धृष्टमानसः ॥

तदभावे न सिद्धिः स्याद्देवताशापमाप्नुयात् ।

(दक्षिणामूर्त्तिसंहितायाम्)

कलशस्थैः पल्लवैस्तु त्रिवारं प्रोक्षयेच्छुभम् ।

भवेद्यदाऽभिषिक्तस्तु तदाऽसौ देशिकाग्रणीः ॥

गण्डूषतत्त्वसंयुक्तस्तदाऽर्होऽयं शिवार्चने ।

अन्यथा नैव सिद्धिः स्यात् सविकल्पस्य पार्वति ॥

गण्डूषदाने शिष्यस्य विकल्पो यदि जायते ।

न सिद्धिस्तस्य कुत्रापि श्रीविद्याऽपि पराङ्मुखी ॥

शेषं पशुदीक्षासमानम् ।

द्वितीयविद्यादीक्षायां विशेष उक्तो (मीनतन्त्रे)

अष्टोत्तरसहस्रहोमं बिल्वपत्रेण कारयेत् ।
अथ वाऽष्टंशतं कुर्यादष्टाविंशतिमेव वा ॥
पायसं कृशरं दद्यान्मोदकं खण्डशर्कराम् ।
वलिं दत्वा छागलं वै गोधामांसमनुत्तमम् ॥
रम्भापुष्पं सारमत्स्यं जुहुयाच्च प्रयत्नतः ।
यवक्षीरं ततो हुत्वा शाल्यन्नं मधुना सह ॥
गोभूहिरण्यवस्त्राद्यैस्तोषयेद्गुरुमात्मनः—इति ।

( मेरुतन्त्रे )

एवं क्रियावती दीक्षा संपदात्री निरूपिता ।
राज्ञां धनाढ्यवैश्यानां विप्राणां व्यवसायिनाम् ॥
अयं दीक्षाक्रमः प्रोक्तो भोगयुक्सिद्धिमिच्छताम् ।

इति क्रियावती दीक्षा परिपूर्णा ।

विभ्रत्यद्भुतभूतिभूतपवचोवेचिव्यचित्रामृतस्रोतः-
शालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
तुर्यः श्रीनरदेवनिर्मितपुरश्चर्यार्णवे प्रस्फुरत्-
सद्युक्तिस्फुटमौक्तिकोत्करचयोत्तुङ्गस्तरङ्गो गतः ॥

इति श्रीमन्महाराजाधिराजश्रीप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे क्रियावतीदीक्षाविधिर्नाम चतुर्थस्तरङ्गः ॥ ४ ॥



# नेपालमाहात्म्यम् ।



इदं बृहत उत्तरदिङ्मुखस्थस्योत्तुङ्गशृङ्गशैलमालया संवेष्टि-
नेपालदेशस्य माहात्म्यबोधकं श्रीगुह्येश्वरीपशुपतिनाथादिदेवानां
र्भावाद्यनेककथालसितमस्ति । एतज्ज्ञानमन्तरा तदन्तर्गतक्षेत्रती-
नामवबोधः सम्यक्तया न भवतीति विचार्यास्माभिः सुपुष्ट—( डिमा-
अठपेजी ) पत्रे रुचिरायसाक्षरैः संमुद्रायितम् । अस्य पृष्ठसंख्या
०) । मौल्यं सपादैको रूप्यकः ( १¼ ) ।



संमुद्राप्यमाणानि पुस्तकानि ।

## नित्यकर्मप्रकाशिका

### विद्वत्कुलवरकुलनिधिशर्मविरचिता ।



यौ नित्यकर्मप्रकाशिका माध्यन्दिनीयानां शुक्लयजुर्वेदाध्यायिनामती-
ा । यस्यामुषःकालादारभ्य निशि शयनसमयपर्यन्तं यस्मिन् यस्मिन्
ाद्यत् शौचस्नानसन्ध्यावन्दनपूजनाद्यनुष्ठानं शास्त्रतो विधेयत्वेन विहितं
संक्षेपरूपेणात्र संगृहीतम् । कर्मविशेषे शास्त्रान्तरार्षवाक्यानि प्रदर्शि-
। अत्र प्रातरुत्थानसमयमारभ्य प्रातःस्मरणं, भूमिप्रार्थना, शौचविधिः,
नविधिः, स्नानविधिः, तिलकधारणविधिः 'सन्ध्याविधिः, स्मार्त्ताचमनं
चमनं सन्ध्याप्रयोगः, तर्पणपरिभाषा, तर्पणप्रयोगः, सूर्यार्घदानं, गृहदेवा-
ः, पूजाङ्गतर्पणं, मध्याह्नसन्ध्याविधिः, वैश्वदेवविधिस्तत्प्रयोगश्च,
तेः, अतिथिपूजनं, भोजनविधिप्रयोगौ, सायंसन्ध्याविधिः, शयन-
त्प्रयोगश्च, श्रीमसङ्ग एवं तत्तदवान्तरभेदादयोऽनेके विषयाः सन्ति ।

अस्यामवश्यंपठनीयत्वेन मन्त्रादयः स्थूलाक्षरैर्विन्यस्ताः । इतिकर्त्तव्य
शास्त्रान्तरार्षवाक्यानि, ऋषिनामादीनि च सूक्ष्मसूक्ष्मतरायसाक्षरैस्तत्र तत्र
ङ्कितानि शास्त्रार्थज्ञातत्वेन मनीषिभिरुक्तानि । पाठान्तरभेदश्च टिप्पणीरूपे
निम्नभागे प्रदर्शितः । कठिनशब्दार्थस्थलेषु नेपालीहिन्दीभाषाभ्यां टिप्प
परिष्कृता । एवं मुद्र्यमाणाऽचिरकालमेवाविर्भूय लोकनयनानन्दं विधास्यतीति
अस्या मौल्यं च साधारणजनानां सुलभसौकर्यायात्यल्पं द्वादशाणकपरि
निर्धारितमस्ति ।

---

श्रीहेमाद्रिसूरिविरचितस्य

चतुर्वर्गचिन्तामणे-

## दानखण्डः ।

अयं ग्रन्थः पूर्वं बङ्गदेशीय–आसियाटिकसोसायटिनामकसभानु
संमुद्रितोऽपि संप्रति पुस्तकस्यालाभेन तज्जिघृक्षुजनैः संप्रार्थितास्तेषां
भायास्माभिः सुपुष्ट–( डिमाइ–अठपेजी ) पत्रे बृहल्लघ्वायसाक्षरैः सं
प्यमाणो विद्यते ।

---

## हिमवत्खण्डः ।

स्कन्दपुराणान्तर्गतोऽयं ग्रन्थो हिमालयप्रान्तस्थश्रीबदरीनाथ–केद
नेपाल–क्षेत्र–तीर्थादिकथामाहात्म्यबोधकोऽयं निर्बाधं मुमुक्षुजनानाम
पयोगी भविष्यतीति विचार्य सुपुष्ट–( रायल–अठपेजी ) पत्रे आयसाक्षरैः
द्राप्यमाणोऽन्ते प्रत्यध्यायविषयैस्तदन्तर्गतचतुःषष्टिलिङ्गनेपालप्रदक्षिणावा
यात्रादिक्षेत्रतीर्थलिङ्गादीनां पञ्जिकया च संस्कृतनामभिः संप्रतिप्रचलित
ग्रामादिभिश्च सहितया विभूषितः समुदेष्यति । विषयपञ्जिकासूचीसहितस
ग्रन्थसंख्या प्रायः पञ्चदशसहस्रपरिमिता ।

पुस्तकप्राप्तिस्थानम् ।




प्रभाकरी–प्रण–को
बनारस वै